**देवदासप्रकाशे तु** "प्रागुदक्पश्चिमद्वारैः" इति पाठ उक्तस्तद्प्रतिलोमान्वयेऽपि न दोषः । **अत्राचार्य**स्तूदासीनो विशेषानुक्तेर्यद्यपि तथापि तदभिमतं **मेधातिथ्या**द्युक्तमेव । युक्तं चैतत् । अत एव शूद्रोपक्रमः । अन्यथा तदसङ्गतिरेव । तस्यामङ्गलत्वेऽपि शूद्रस्यामङ्गलत्वाभावात् । अथामङ्गलत्वं तदादावुत्कृष्टेन वाच्यमित्याशयस्तर्ह्यग्रेऽपि स केन दण्डेन वारितः । किं
५ चामङ्गलस्य तस्य सर्वस्यापीश्वरेणापि दुरतिक्रमत्वेन वचने तत्त्वेन कथं तत्रैव व्यवस्था । किं च तथासति पूर्वार्द्धोत्तरार्धयोर्व्यत्यासेनैव पाठः कृतः स्यात् ।

किं च केचिन्मते यथायोगमिति यथासंख्यामिति वा व्यर्थमेव स्यात् । शूद्रोपक्रमस्य तन्मतेऽप्युक्ताशयत्वेनाग्निद्विजातिपदस्य तथाक्रमेणैव तेषु शक्त्या तुल्यसंख्यत्वेन लोकादिप्रसिद्ध्यथासंख्येनैवान्वयसंभवादत एव कर्ममात्रे पूर्वदिशः प्राशस्त्यमदृष्टजनकत्वं च संग्रहीतं भवति ।
१० एतेन तृतीयमतमपि निरस्तम् । एवं च तदनुयायि**त्रिंशच्छ्लोक्या**दयश्चिंत्या एवेति परे । अत्र पुरग्रहणं संभवत्द्वारग्रामादेरप्युपलक्षणम् । तथा च यत्रानेकद्वारसंभवस्तत्रायं नियमः । यत्र तु द्वाराभावस्तत्रापि दिङ्मात्रनियमः संभवतस्त्यागायोगात् । यत्र त्वेकद्वारता तत्रासंभवान्न सोऽपि । तत्रैव विशेषान्तरमप्याह । **तथेति** । अत्र मृतादिग्रहणाज्जीवतो नयने न कोऽपि नियम इति बोध्यम् । **यदा त्विति** बहुदूरस्थत्वेनाग्निसांनिध्यासंभवादिति भावः । किंचिद्दूरस्थत्वेन न लभ्यते
१५ इति । लाभे तु तदेव दग्धव्यम् । तथा च **ब्राह्मे**

"आहिताग्नौ विदेशस्थे मृते सति कलेवरम् । निधेयं नाग्निभिर्यावत्तदीयैरपि गृह्यते ॥
"तावत्कालं दक्षिणाग्नेः कुशैरास्तीर्य वेदिकाम् । अधोमुखीं च समिधं धारयित्वा पिधानकम् ॥
"परकीयेन वत्सेन दुग्ध्वा तां गां च तद्गृहे । गोक्षीरेणाथ तेनैव जुहुयादग्निहोत्रकम् ॥
"पश्चादग्निसमासेव्य यज्ञभांडानि तान्यपि । उपयच्छेत विप्राय ततो दृषदमेव हि ॥
२० "मथित्वाऽग्निप्रणयनं कृत्वा तत्कुणपं दहेत् ॥" इति

**पर्णशरैरिति** । पर्णं पलाशस्तस्य शराः पर्णत्रयवृंतानि तात्रितयनिर्मितं प्रतिरूपकमित्यर्थः । इदमुपलक्षणं कुशानामपि । **आदिना आश्वलायना**दिपरिग्रहः[1] । तथा च स्वस्वशाखोक्तमार्गेणेत्यर्थः । **अत्र** अस्थिसंस्कारे पर्णशरसंस्कारे च । **आदिना** द्वादशाहादिपरिग्रहः । **एव**स्तत्तुल्यत्वप्रदर्शकः । अत एवाऽऽह । **आहिताग्निरिति** । श्रौताग्निमानित्यर्थः । यदा कदाचिद्दाहेऽपि
२५ मि. पृ. १६३ दाहदिनादारभ्यैव सर्वेषां सपिंडानामिति भावः । इदमुभयमग्रे व्यक्तीभविष्यति । तदाह **शववदिति** । अनेन दुहित्रादीनामपि तद्दिनप्रभृत्येव स्वस्वाशौचमिति सूचितम् । एवं च पूर्वोक्तमुपलक्षणं बोध्यम् । यद्यपि पूर्वकृतायाः शरीप्रतिकृतेर्लौकिकत्वात्संस्कारत्वाभावस्तथाऽपि संस्कारतुल्यकार्यत्वात्तत्त्वविवक्षया तदपेक्षया प्रतिकृतिदाहस्य पुनःसंस्कारत्वोक्तिरिति केचित् । **पुनः** पश्चात् । अस्थिलाभोत्तरं तन्निश्चयोत्तरं वा । तदन्यतरस्य
३० संस्कारमित्यर्थ इति परे । अनेन **वसिष्ठे**नोक्तस्य तत्परत्वं सूचितम् । अत एवाह । **अनाहिताग्नेस्त्विति** । श्रौताग्निमद्भिन्नस्य स्मार्ताग्निमद्दाहस्त्वित्यर्थः । **ब्राह्ममाह** । **सुपिष्टैरिति** ।

---

१ ख-प्रीतिपतेर्लौ ।

"अनाहिताग्नेर्देहेषु दाहो गृह्याग्निना द्विजैः । तदलाभे पलाशानां वृंतैः कार्यः पुमानपि ॥
"शतैस्त्रिभिः षष्ट्यधिकैः शरवृंतैर्विधानतः । वेष्टितव्यस्तथा यत्नात्कृष्णसारस्य चर्मणा ॥
"ऊर्णासूत्रेण बध्वा तु प्रलेप्तव्यो यवैस्तथा" ॥ इत्यादिः । तथा च सुपिष्टैरित्यस्य पूर्वान्वयः । मंत्रमाह । **असाविति** । **पर्णशरमित्यस्थ्नामुपलक्षणम्** । अत एव **छंदोगपरिशिष्टम्**
"विदेशमरणेऽस्थीनि आहृत्याभ्यज्य सर्पिषा । दाहयेद्वर्हिषाऽऽच्छाद्य पात्राण्यासाद्य पूर्ववत् ॥ ५
"अस्थ्नामलाभे पर्णानि शकलान्युक्तयाऽऽवृता । दाहयेदस्थिसंख्यानि ततः प्रभृति सूतकम् ॥" इति। एवस्य त्रिरात्रस्य व्यवस्था त्वग्रे व्यक्तीभविष्यति । स्पष्टं चेदं **कल्पतरौ** । तथा हि
"अस्थीनि चेन्न लभ्यन्ते प्रोषितस्याग्निहोत्रिणः । पलाशपत्रवृंतानां षष्ट्याधिकशतत्रयम् ॥
"कृष्णाजिने निराकारं कृत्वा वेष्ट्याजिनेन तु । ऊर्णासूत्रेण बध्वैव यवपिष्टैः प्रलेपयेत् ॥
"निर्दिश्य देवदत्तोऽय नाम्नेत्याहाश्वलायनः । अंक्त्वाज्येन दहेत्कृत्वा मृद्दिग्धं स च सार्थतः" ॥ इति। १०

यवपिष्टलेपोत्तरं मृदाऽप्यालिप्य दग्धस्थाने नीत्वा दग्धां मृदं संचिनुयादित्यर्थः । **अथास्य** वृंतविभागः

"अशीत्यर्द्धं शिरःस्थाने ग्रीवायां दश योजयेत् । उरसि त्रिंशतं दद्याद्विंशतिं जठरे न्यसेत् ॥
"बाहुभ्यां तु शतं दद्याद्दद्यादङ्गुलिभिर्दश" ॥ तृतीया सप्तम्यर्थे ।
"द्वादशार्धं वृषणयोरष्टार्धं शिश्न एव तु । जानुभ्यां तु शतं दद्यात्रिंशतं जानुजंघयोः ॥ १५
"पादांगुलीषु दशधा एतत्प्रेतस्य लक्षणम् । नालिकेलं शिरःस्थाने तुवं (बं?) दद्याच्च तालुके ॥
"पञ्चरत्नं मुखे दद्याज्जिह्वायां कदलीफल । अन्त्रेषु नालकं दद्याद्वालकं घ्राण एव तु ॥
"वसायां मृत्तिका दद्याद्गोमूत्रेण तु मूत्रकम् । गंधकं धातवो देया हरितालमनःशिला ॥
"पारदं रेतसःस्थाने पुरीषे पित्तलं तथा । मनःशिला तथा गात्रे तिलकल्कं च सन्धिषु ॥
"यवपिष्टं तथा मांस मधुशोणितमेव च । केशेषु च जटाजूटं त्वचायां च मृगत्वचम् ॥ २०
"कर्णयोस्तालपत्रं च स्तनयोश्चैव गुञ्जिका । नासायां शतपत्रं च कमलं नाभिमंडले ॥
"वृंताकं वृषण द्वे द्वे लिंगे स्याद्गृंजनं शुभम् । घृतं नाभ्यां प्रदेयं स्यात्कौपीने च त्रपु स्मृतम् ॥
"मौक्तिकं स्तनयोर्मूर्ध्नि कुंकुमेन विलेपनं । कर्पूरागरुधूपैश्च शुभैर्माल्यैः सुगंधिभिः ॥
"परिधाने पट्टसूत्रं हृदये रुक्मकं तथा । ऋद्धी वृद्धी उभौ द्वौ च चक्षुर्भ्यां च कपर्दिकौ ॥
"सिंदूरनेत्रकोणेषु तांबूलाद्युपहारकैः । सर्वौषधियुतं प्रेतं कृत्वा पूजां यथोदिताम् ॥ २५
"साग्निकेनापि विधिना यज्ञपात्रं न्यसेत्क्रमात् । 'शिरो मे श्रीः पुनंतु मां' 'इमं मे वरुणेति' च ॥
"प्रेतस्य पावनं कृत्वा शालिग्रामशिलाजलैः । विष्णुमुद्दिश्य दातव्या सुशीला गौः पयस्विनी ॥
"तिलालोहं हिरण्यं च कार्पासं लवणं तथा । सप्तधान्य क्षितिं गां च एकैक पावनं स्मृतम् ॥
"तिलपात्रं ततो दत्वा पट्टदानं तथैव च । ततो वैतरणीं दत्वा सर्वाभरणभूषिताम् ॥
"कर्तव्यं वैष्णवं श्राद्धं प्रेतमुक्तार्थमात्मनि । प्रेतमुख्यं ततः कुर्याद्धृदि विष्णुं प्रकल्प्य च ॥ ३०
"ओं विष्णुरिति' संस्मृत्य प्रेतं तं विष्णुमेव च । अग्निदाहं ततः कुर्यात्सूतक च दिनत्रयम्" ॥ इति ।

प्रागुक्तसर्ववचनैकवाक्यतया सिद्धम्। मूलस्य निर्गलितार्थमाह। **ततश्चेति**। सर्वैकवाक्यत्वा-च्चेत्यर्थः। **एवेन** दाहनिरासः। अत एवाऽऽह। **न चोदेति**। नापीत्यर्थः। **ततः** नामकर-णात्। **ततः** तृतीयवर्षात्। **वर्षत्रयात्** तृतीयवर्षपूर्तेः **प्रागपि** तूष्णीमेवेत्यनुषंगः। **लौकिकेति**। जातारण्यभावे इति शेषः। यद्यप्यत्र व्याख्याताऽग्न्युदकदानमात्रं प्रतीयते तथाऽपि "असंस्कृता-
५ नां भूमौ पिंडं दद्यात् संस्कृतानां कुशेष्विति" प्रागुक्तसगुणविधेः पिंडदानमपि। तथा

"द्वादशाद्वत्सरादर्वाक् पौगण्डमरणे सति। सपिंडीकरणं न स्यादेकोद्दिष्टानि कारयेत्" ॥
इति **देवलात्**सापिंडीकरणं विना तत्प्रागभावि सर्वं कार्यम्। अत्र च पूर्वावध्यपेक्षायां यद्यपि

"चूडाकर्मणि संज्ञाने विपत्तिस्तु यदा भवेत्। सूतकांते प्रकर्तव्यं वृषस्योत्सर्जनं तथा।
"तत्र दाहः प्रकर्तव्य उदकं तत्र निश्चितम्। श्राद्धानि षोडशापि स्युः सपिंडीकरणं विना"॥
१० इति **देवयज्ञ**कोदाहृतवचनाद्**धरदत्ते**नौर्ध्वदेहिकोपलक्षणतया व्याख्यानात् उदकग्रहणकात्"उदक-दानं सपिण्डैः कृतचूडस्येति" (अ. १४ सू. ३१) **गौतमसूत्राच्च** चूडाया एव पूर्वा-वधित्वं प्रतीयते तथापि **लौगाक्षे मानवे** चोदकदानस्य दाहसाहचर्यावगमेन 'नात्रिवर्षस्ये'-त्यत्र तस्योपलक्षणत्वेन च दाह एव पूर्वावधिरिति बोध्यम्। **देवयाज्ञिक**निबंधे तु दंतजनना-दर्वाङ्मृते दुग्धदानं सवयोभ्यः। चौलादर्वाक् पायसक्षीरवस्त्रादिदानं तेभ्य एव निखननं चोभ-
१५ यत्र तदूर्ध्वं पंचवर्षसमाप्तिपर्यन्तमग्न्युदकं पिंडदानमात्रं तेभ्य एव भोजनादिदानं तदूर्ध्वमुपनयना-त्सपिंडीकरणवर्जं सर्वमित्युक्तं। वचनानि च तत्रोक्तानि। यथा हि

"गर्भे नष्टे क्रिया नास्ति दुग्धं देयं शिशौ मृते। परं च पायसं क्षीरं दद्याद्बालविपत्तितः॥
"एकादशद्वादशाहवृषोत्सर्गविधिं विना। महादानविहीनं च कुमारे कृत्यमाचरेत्" ॥ इति
तथा

२० "यत्र प्रमीयते बालस्तत्र प्रायः प्रदीयते। किंचित्समावयोज्यं तत्कृत्यान्नं तु यथाविधि॥
"भक्ष्यं भोज्यं च दातव्यं तथा च सुखभक्षिका। तद्वस्त्राणि प्रदेयानि सोपानत्कानि तत्समे"॥इति

अत्र बालग्रहणं कुमारस्यापि उपलक्षणम्। "कुमाराणां च बालानां भोजनं वस्त्रवेष्टन-मिति" तत्रैवोक्तेः। तथा

"भूमिनिक्षेपणं बाले आवर्षद्वयमाशिखम्। ततःपरं खगश्रेष्ठ देहदाहो यथाविधि"॥ इति
२५ प्रथमवर्षकृतचूडस्यापि निखननविनित्तार्थम्। आशिखमिति उपनीतकालादौ करिष्यमाणचूड-स्यापि तदर्थम्। आवर्षद्वयमिति। तथा

"शिशुरादन्तजननाद्बालः स्याद्यावदाशिखम्। कथ्यते सर्वशास्त्रेषु कुमारो मौंजिबंधनात्" ॥
इति अत्र यद्यप्यामौंजिबंधनादित्युक्तं तथापि पूर्ववाक्यानि पंचवर्षपर्यन्तमेव प्रवर्तंते तदूर्ध्वं तु

३० "पंचवर्षाधिके बाले विपत्तिर्यदि जायते। वृषोत्सर्गादिकं कर्म कर्तव्यं उदकं ततः॥
"अहन्यहनि संप्राप्ते कुर्यात् श्राद्धानि षोडश। पायसेन गुडेनैव पिण्डं दद्याद्यथाक्रमम्॥
"उदकुंभप्रदानं तु पद्दानानि यानि च। भोजनानि द्विजे दद्यान्महादानानि भक्तितः॥

"दीपदानानि यत्किंचित्पंचवर्षाधिकं सदा । कर्तव्यं तु खगश्रेष्ठ व्रतार्वाक् प्रेततृप्तये ॥
"स्वाहाकारेण वै कुर्यादेकोद्दिष्टानि षोडश । ऋजुदर्भैस्तिलैः शुक्लैः प्राचीनावीति निश्चितम्"॥इति।

प्राचीनावीति यथा स्यात्तथा येषामपि षोडशश्राद्धपर्यंतं सर्वं क्रियते तेषामपि सपिंडीकरणाभावात्सांवत्सरिकादीनि न भवंत्येव। तदभावे तद्देवतात्वापादकपितृत्वाभावात् । यतिवच्च तद्दिनैव तत्संपत्तौ प्रमाणाभावात् । स्त्रीणां तु कृतचूडानामपि आपरिणयादुदकदानादि वैकल्पिकं ५ "तत्स्त्रीणां चैके[1]ऽप्रत्तानामिति" (अ.१४ सू. ३२।३३) **गौतमसूत्रात्** । शूद्राणामप्येवं "स्त्रीशूद्राश्च सधर्माण" इत्युक्तेरिति दिक् ॥ १ ॥ २ ॥

## याज्ञवल्कीये ३ श्लोकः ।

मूले वा आ अपीति छेदः । स च मर्यादायां । **तदार्वागिति** । तत्पर्यंतमित्यर्थः । **दिवसाद्वा** दिवसादपि वा । **पिबेत्यस्य** व्याख्या **दक्षिणेति** । गत्यर्थकेण धातुना १० जहत्स्वार्थलक्षणयाऽभ्युपगमनपूर्वकमुदकदानमुच्यते इत्याह**अभ्युपगमनेनेति** । तदर्थकेनेत्यर्थः । अनेन शक्यार्थ उक्तः । संबंधमाह । **तत्प्रयोजेति** । वैशिष्ट्यं च तन्निष्ठविशेष्यतानिरूपितप्रकारतासंबंधेन बोध्यम् । अनुपपत्तिरूपबीजमाहैवं **मातेति** । **अनन्तरं** अव्यवहिताग्रिमश्लोके । अत एवाभ्युपगमप्रयोजनत्वाविशेषेऽपि न स्नाने लक्षणा । आवश्यकोदकदानलक्षणयैवानुपपत्तिशांतिः । स्नानरूपांगानुक्तिस्तु पाषाणाद्यनुक्तिवदुपपन्ना । तथा च 'अपेति' १५ मंत्रस्य दक्षिणामुखत्वस्य चोदकदानेनैवान्वयः । लक्ष्यशरीरमध्ये स्नाननिवेशेऽपि प्राधान्यात्तस्य तेनैवान्वयो न तु स्नानेन । एवं च "अप नः शोशुचदघमिति" "दक्षिणामुखा निमज्जतीति" (३। १०।१९–२०) **पारस्करान्मंत्रे** शेषि विकल्पः । समुच्चयो वाऽस्तु। न तु तदनुरोधादत्र स्नानान्वयः। उदकदाने दक्षिणामुखत्वं च ब्राह्मणविषयमिति न वक्ष्यमाणेन विरोध इति भावः। केचित्तु अभ्युपगमनपूर्वकोदकदाने लक्षणया सप्तमाद्दशमादपि वा पुरुषादर्वाक् ज्ञातयोऽपोभ्युपयन्ति। २० उदकसमीपं गत्वा तत्र स्नात्वोदकं प्रयच्छन्ति। स्नाने च मन्त्रे पितृदिङ्मुखत्वान्वयः। उदकदाने तु वक्ष्यमाणो नामादियुक्त एव मंत्रो वर्णभेदेन दिङ्नियमश्चातो न विरोधः। सिद्धांते तु समंत्रो वक्ष्यमाणविधेरप्रेति मन्त्रान्तरं ग्राह्यः। अत एव **पारस्करः**(३।१०।१२-२०) "संयुक्तं मैथुनं याचेरन्नुदकं करिष्यामहे इति। कुरुध्वं मा चैवं पुनरित्यशतवर्षे प्रेते। कुरुध्वमेवेतरस्मिन्। सर्वे ज्ञातयोऽपोभ्यवयंत्या सप्तभावात्पुरुषाद्दशमाद्वा। समानग्रामवासे, यावत्संबंधमनुस्मरेयुः। एकवस्त्राः प्राचीनावीतिनः २५ सव्यानामिकयापनोद्यापनः शोशुचदघमिति दक्षिणामुखा निमज्जन्ति। प्रेतायोदकं सकृत्प्रसिंचंत्यंजलिनाऽसावेतत्ते उदकमिति"। संयुक्तं विद्यादिना प्रेतसंकट्टम्। मिथुनमेव मैथुनं। स्त्रीपुरुषयुग्मं विद्यासंयुक्तमुत्तरदानाभिज्ञं "मैथुनश्यालकम्" इति **कर्कः**। शतन्यूनवर्षे प्रेते कुरुध्वं मा चैवं पुनरिति याचितस्योत्तरं इतरस्मिंच्छतवर्षे कुरुध्वमित्येवसदामदशमग्रहणमविवक्षितं जन्मनाज्ञानपर्यंतमविवक्षितमेतदेव विवृतं यावत्संबंधमिति। एतदर्थमेव मूलेऽपिः। अत्रत्यं प्रेतमरणं हत्वा ३० यथोक्तमग्निं गमयित्वाऽनवेक्षमाणा आपोत्येकवाससोऽरतीभूताः कनिष्ठपूर्वा इति अरण्यं श्मशाने अरतीभूता उद्विग्ना। 'रतीभूता' इति पाठे श्रेणीभूता इत्यर्थकं **वैजवापोक्तेः**

---

[1] "प्रत्तानामिति" गौतमीये पाठः।

चैकवाक्यस्त्वं ब्राह्मणविषयं वक्ष्यमाण**प्रचेतसो**क्तमपसव्ययज्ञोपवीतवासस इति क्षत्र-विड्विषमं "राजन्यवैश्यावप्यपसव्ये वासो यज्ञोपवीते कृत्वेति" **शंखातो** न विरोध इति केचित् । **शंखोक्ता**वपि न विप्रस्यापरिग्रहात्तत्रत्यमेकवस्त्रत्वं उत्तरीयाभिप्रायक-मितिसर्वैकवाक्यतया सर्वत्रैकरूपतेति परे। परे अयनोद्येसत्रादेकमित्यस्यानुषंगः । **अस्त्वावुक्तिः** । यत्र

५ संबुध्यंतप्रेतनामनिर्देश इत्यर्थः इति आह । विशेषं प्रथमपक्षानुरोधेनाहै**तच्चेति** । उदकदानं चेत्यर्थः । एवमग्रेऽपि बोध्यं। संस्कारानंतरं चितामप्रदक्षिणमावर्त्य जलसमीपं गंतव्यं । तथा च **विष्णुः** "निर्दूष-बांधवाः प्रेतं संस्कृत्य प्रदक्षिणेनाचितामभिगम्याप्सु सवाससो निमज्जनं कुर्युरिति"। **आश्वला-यनोऽपि** (गृ. सू. ४।४।९ ) । "सव्यावृतोव्रजंत्यनीक्षमाणा" इति । **शरीरं** प्रेतस्य अनवेक्षेति-संस्कारस्थानमितिशेषः । **अप** इति अभ्युपगम्य स्नातुं प्रविशंतीत्यर्थः । अस्य मूलैकवाक्यतयाऽपि

१० सुयोजत्वादाह **तथेति** वित्रोव्य (?) उक्तोऽन्यश्च । **यथेति** पदार्थनतिवृत्तावव्ययीभावः । **नोद्धर्षेति** । अंगामितिशेषः । **उदकांते** उदकसमीपे तीरे । अपसव्ये यज्ञोपवीतवाससी येषां अभ्यर्हितत्वात-द्वनित्यत्वाद्वा साधुता । **ब्राह्मणस्ये**त्यादि प्रेतविशेषणं अनेन शूद्रेऽनियमः सूचितः । **राजन्ये**-त्यार्षो द्वंद्वः । विरोधपरिहर्तुमाह । **स्मृत्यंतरे त्विति** । तत्र तावदित्यंतांशे मानमाह । **यथाहेति** । अत एव मूलेऽपि द्वितीयपक्ष उक्तः । स च सर्वोपलक्षणं । आवृत्तौ मानमाह । **तथेति** । **अंजलीनि**-

१५ त्यनेन त्रय इति सूचितं। **प्रेतेति** प्रेतोद्देशेनेत्यर्थः ।

उत्तरार्धार्थमाह। **प्रतीति** । एकादशाहादावनतिप्रसंगायाह। **यावद्दशम इति** । अञ्जलि-संख्या पक्षाश्च त्रयः स्मृतिषुक्तास्तत्र सकृत्पक्षो मूले वक्ष्यमाणः । **तथैवाश्वलायने**नापि "एकां-जलिमिति" (गृ. सू. ४।४।१० )। **प्रचेतसा** तु पक्षत्रयमप्युक्तं तत्र दश-द्वादशेत्यादित्यर्थवक्ष्य-माणः सकृत्पक्षः । तथैव 'त्रिः प्रत्येकमि'त्यंजलित्रयपक्षतृतीयः प्रकृतः । तत्र यदि प्रथमदिने

२० त्रयो दत्तास्तदा द्वितीये षट् तृतीये नवेत्यादिक्रमेण त एवांजलीनिति बहुवचनसंगतिः । यद्येक-स्तदा द्वितीये द्वौ तृतीये त्रय इत्यादिक्रमेण दिनसंख्यया द्वैगुण्यत्रैगुण्यादिपक्षवत् । मूलपक्षेण शास्त्रार्थसिद्धावपि गुरुपदानुष्ठाने प्रेतोपकारातिशयः कल्पः । अन्यथा तदुक्त्यानर्थक्यप्रसंग इति भावः । तदेतत्ध्वनयन्नाह। **यद्यपीति** । **अनयो**र्मूलाद्युक्तप्रचेतसोक्तयोः । **गुरुतरेति** प्रचेतसोक्ते-त्यादिः । अस्य चोदकदानस्य तर्पणत्वेनान्वारब्धसव्येनापि पक्षे प्राप्तावंजलिनियमायाह। **वसिष्ठे**-

२५ **नापीति** । **सव्येतरेति** । सव्योतरेति पाठांतरम् ॥ ३ ॥

## याज्ञवल्कीये ४ श्लोकः ।

एतदग्रे उक्तेरेवमित्यनेन तस्य नातिदेश इति भ्रमनिरासायाह । **वक्ष्यमाणेति** । गोत्रे तदुच्चारणादिरूपगुणविशिष्टस्येत्यर्थः । स तु उभयत्र गुणविधिः । अत एवाग्रे तथैवावतारित-मिति भावः । **एवमिति** व्याचष्टे। **यथेति** । बहुवचनोपपत्तये आह । **मातामहानामिति** ।

३० अनेनैकशेषेण मातामह्यादिरपि ग्राह्यात्रेति सूचितम् । अग्रे प्रेतग्रहणाच्चाप्रेता अपि । कामेनोदक-मिति सुप्सुपेति समासः । तात्पर्यार्थमाह । **प्रेतेति** ।

---

१ 'वेक्ष्यमाणा ' इति आश्वलायनीयपाठः । २ ख-स्नातुं न प्रविशन्तीत्यर्थः ।

तस्यापि तात्पर्यमाह। **अकरणे** इति। अदाने इत्यर्थः। **पारस्करेऽपि** (३।१०।३९।४३)। "आचार्ये चैवं। मातामह्यास्वस्त्रीणां चाप्रतानां प्रत्तानामितरेकवीरान्। तांश्च तेषाम्" इति। तत्र स्त्रीणां न मंत्रः। "अमंत्रा हि स्त्रियो मता" इति **बौधायनात्**। "अथ मित्रप्रजास्वस्त्रीययाज्यश्वशुरगुरुसुहृद्याजकानां यथेच्छमिति"। गुरुरुपाध्यायः। सुहृत्संबंधी मातुलमातृष्वस्रीयादिः। **शंखलिखितावपि**। "उदकक्रिया कामं श्वशुरमातुलयोः। शिष्ये सब्रह्मचारिणि राजनि चेति"। मूले चैनानुक्तानामेषां संग्रहो बोध्यः ॥ ४॥

मि. पृ १६४.

## याज्ञवल्कीये ५ श्लोकः ( पूर्वार्धः )।

उदकदाने उभयत्र गुणत्वमुपकारत्वं तत्त्वमुपपादयति। **तच्चोदकेति**। चेन सगोत्राणामपि ग्रहणं। **वाग्यता** इति बहुव्रीहिराहिताग्न्यादिः। तदाह। **मौनिन** इति। **नामगोत्रेणेति** समाहारद्वंद्वत्वेनोपलक्षितमुदकमिति शाब्दोऽर्थः। तत्फलितमाह। **प्रेतस्येति**। तच्चोच्चारणलाक्षणिकमित्याह। **नामेति**। तत्स्वरूपमाह। **अमुकेति**। अमंत्रो "ऽपन इत्युग्रे पांह्व" इति प्रागुक्तमेव। मूले चायमुक्तः **प्रचेतसा**। "प्रेतस्तृप्यत्विति"। **वैजवापेन** "अमुष्मै स्वधेति"। **पारस्करेण** "असावेतत्त" इति। **हारीतेन** "असौ तृप्यतामिति" **कात्यायनेन** "गोत्रनामपदांते च तर्पयामीत्यहं वदेदिति"। **रामायणे** च "इदं पुरुषशार्दूल विमलं दिव्यमक्षयम्। पितृलोकेषु पानीयं मद्दत्तमुपतिष्ठताम्" इति। एषां च विकल्पो बोध्यः। स च व्यवस्थित ऐच्छिको वेत्यन्यत्। सर्वं वाक्यमिति **न्यायेनाह**। **सकृदेवेति**। यद्यप्यत्रोदकमित्येवोक्तं तथापि कुशतिलयुतं देयं। "दक्षिणाग्रान् कुशान्कृत्वा सतिलं तु पृथक्पृथगिति" **कात्तीयात्**। कुशानां च सत्यपि पित्र्यत्वे द्विगुणभुग्नता न कार्या।

"सपिंडीकरणं यावदृजुदर्भैः पृथक् क्रिया[1]। सपिंडीकरणादूर्ध्वं द्विगुणो विधिवद्भवेत्" ॥ इति **विष्णुपुराणात्**। आर्षत्वाद् लिङर्थे लडित्याह। **प्रसिंचयुरिति**। अनुक्तं पूरयति। **त्रिर्वेति**।

**अयं** वक्ष्यमाणः। **तेनैव प्रचेतसैव**। **ततः** संस्कारोत्तरं। **शौचं** मूत्रपुरीषादि। **यथार्थवत्** सप्रयोजनं यथा भवति तथा। **वस्त्रं** उपरि वस्त्रं। **ततः** तच्छोधनानन्तरं। स्नानप्रकारमाह। **सचैलस्त्विति**। **ततः** संस्कारकर्मतः **शुचिः**। **ततः** संस्कारस्थानात्। **पाषाणं** यत्कृच्छिद्रकारकं। **त्रिप्रे** इत्यादिर्दशाहिकसमन्वयंतं। **ततः** अञ्जलिदानानन्तरं।

अत्र दशाद्यंजलिदानं न प्रथमदिन एव विधीयते। किंतु सर्वाशौचं दिनानि मिलित्वेति प्रत्यहमेकांजलिदानमुक्तं भवति। गृहप्रवेशस्तु प्रथमदिने एवोक्तकाले। केचित्तु प्रथमदिने एव दशाद्यंजलिदानविधिमाहुः। अत्र स्नानगृहप्रवेशयोः "पाठक्रमादिति" **न्यायेन** व्युत्क्रमो बोध्यः। **पुनः**शब्देन सकलपूर्वस्नानधर्मातिदेशेन नदीरूपाधिकरणाप्राप्त्या गृहप्रवेशोत्तरं तदसंभवात्पुनर्नदीकल्पने गौरवात्तथैव शिष्टाचाराच्चेति केचित्। आशौचोत्तरदिनस्य स्नानपरमिति परे। गृहशौचस्याशौचान्त्यदिनपरत्ववत्। अत्रापि पक्षे शिष्टाचारादंजलिदानोत्तरं स्नानं भवत्येवेति

[1] प्रेतानात्रोदकक्रिया इति पाठानि प्रायेणेदम्।

बोध्यम् । अत्र नदी भागीरथीत्यादि "धर्म्यास्वप्सु" इति **वैजवापात्** । नद्यभावे तडागादौ **कार्यम्** । अत्रोदकमवहद्भवति तत्प्रायम् । "सकृदुन्मज्यैकांजलिमुत्सृज्य तस्य गोत्रं नाम गृहीत्वोत्तीर्य वासांसि परिधाय सकृदन्यान्यापीड्योदकृदशानि विसृज्यासत आ नक्षत्रदर्शनात्" । **इत्याश्वलायनात्** ( ४।४।१० ) ।

५

## ( उत्तरार्धः )

तत्त्वस्य तावत्पर्यन्तमेव सत्त्वादाह । **समेति** । अत एवाऽवतेति **मनूक्तिः** । तथार्थमाह । **चेति** । अधिकसंग्रहाय तदर्थमाह । **प्रच्युतेति** । उदकपदमुपलक्षणमित्याह । **उदकादीति** । तेन दाहपिंडदानादिसंग्रहः । विशेषमाह । **ब्रह्मेति** । **पूर्वेति** ब्रह्मचर्यावस्थायामित्यर्थः । ततः पूर्वमृतानां तु अजातत्वात्तत्र निषेधाभावात् । **उदकेति** । एकस्मिन्दिने सर्वेषां प्रत्येकमिति भावः । **आदिष्टी-**
१० **त्यनेन** ब्रह्मचार्युच्यते इत्यन्वयः । तत्र हेतुमाह । **ब्रह्मेति** । **आश्वलायन**सूत्रमिदम् (१।२२।३) । **आदिना** भिक्षाचरणादि । तथा च न केवलं रूढिः । किंत्वादेशनं व्रतादेशनमादिष्टं तदस्यास्तीति योगोऽपीति भावः । **आव्रतस्ये**त्यस्याऽऽसमावर्तनादित्यर्थः । न त्वांतरालिकमाहानाम्न्यादि व्रतसमाप्तेरिति ।

**एतच्चेति** मूलोक्तं **मनूक्तं** त्वित्यर्थः । अत एव "अपराध्यत्यादिष्टी नोदकमिति"
१५ **स्मृत्यन्तरम्** । **मेधातिथिरप्येवं** । **विश्वरूपाचार्यमतमाह** । **आचार्य इति** । **प्रक्रांतेति** प्रारब्धेरित्यर्थः । आव्रतस्येत्यत्र व्रतं प्रायश्चित्तरूपमेव । तदेव ध्वनयन्नुत्तरार्द्धार्थमाह । **प्रायश्चित्तेति** । अत्र मन्यते इत्यनेनाचारादिविरोधरूपारुचिः सूचिता । न्यूनतां परिहरति । **तथेति** । आद्यशब्देनांधादयः प्रागुक्ताः । ब्रह्महादय इति केचित् । **व्रात्या** यथाकालमनुपनीताः । **विधर्मिणः** पाषंडिनः । "यतः किंचिन्न कर्तव्यं न चान्येषां करोति स" इति **मनुः** ॥ ५ ॥

२०

## याज्ञवल्कीये ६ श्लोकः ।

संगतिमाहैवमिति । **संप्रदानेति** । उद्देश्येत्यर्थः । तथा च प्रागुक्तब्रह्मचार्यादिभिन्नैरपि सपिंडादिभिर्मृतपाखंड्याद्युद्देशेनोदकादि न कार्यमिति भावः । पदार्थानाह । **नरेति** । अनुगमकमाह । **अकृतेति** । यथाश्रुतानुपपन्नं विवक्षितार्थमाणधीति (?) । अनेन तदभावे तत्त्वाभावः सूचितः । एवमग्रेऽपि । **सवर्णेति** । ब्राह्मणीयान्येत्यादिः । अनिषिद्धसुरापाने दोषाभावादाह ।
२५ **यासामिति** । सकृत्पाने तदभावादाह । **पानरता इति** । स्वाभाविकोऽयमर्थः । वक्ष्यमाणमाह । **विषेति** । एवं पदार्थानुक्त्वा वाक्यार्थमाह । **एते इति** । प्रागवदाह । **उदकेति** । नन्वेतेषां अशौचोदकदानकर्तृत्वाभाव एव प्रतीयते भाजनशब्दस्य पात्रवाचित्वादिति पूर्वतुल्यते चेत् प्रतिज्ञार्थासिद्धिरत आह । **भाजयंतीति** । सेवयंति इत्यर्थः । तदर्थमाह । **सपिंडादीनामिति** । तात्पर्यार्थमाह । **अत** ( स्तन्मरण ) **इति** । असत्यागिन
३० इत्यनुरोधेनायमेवास्यार्थो न तु स इति भावः ।

मि. पृ. १६५

न्यूनतां निराचष्टे । **अत्र चेति** । **अनुपेति** । उद्देश्येत्यर्थः । तेन पुंसामपि ग्रहणमिति भावः । विशेषमाह । **एतच्चेति** । तदभाववचनं चेत्यर्थः । **बुद्धीति पूर्वक** [illegible]

शास्त्रोक्तमार्गेणेच्छापूर्वकमृतानामाशौचादि न कार्यमिति **गौतमार्थः**। अनापदीत्यर्थः। (?) विषभावे गतुलित्याहा**नेति** । अत्र स्फुटं मानांतरमप्याह । **अथेति** । **तस्याशौचमिति** । तच्च प्रत्यक्षशवदाहे पूर्णमेव विशेषानुक्तेः । प्रतिकृतिदाहे तु प्रागुक्तं । उदकग्रहणं चोपलक्षणं । परे तु प्रमादमरणत्वात्तन्निमित्तकप्रायश्चित्तपूर्वकं तत्कार्यम् । तानि च प्रायश्चित्तानि "व्याघ्रेण निहते प्रेते परकन्यां विवाहयेदि"त्यादिना **शातातपीये** गृह्यकारिकायाञ्चोक्तान्यन्यत्र स्पष्टानि । ५

अन्यदप्याह । **तथेति** । **अंगिरोवाक्यमाह** । **चांडालादिति** । **वैद्युतात्** विद्युत्संबंध्यनलात् । **पशुभ्यो** भिन्नगवादिभ्यः । चांडालादिभ्यः प्रत्येकं यन्मरणं तत्पापकर्मणामिति । तेभ्यः प्रेतेभ्यो यत्प्रदीयते उदकं पिंडदानं चोदग्भ्यादि तत्सर्वं तत्र **नोपातिष्ठति** । नोपकरोति । **किंत्वंतरिक्षे** मध्ये एव **विनश्यतीत्यर्थः** । मध्ये ददाति भक्तिः । प्राग्वदाह । **एतदपीति** । अपिना पूर्वसमुच्चयः । ननु **गौतमैक**वाक्यतया प्राक्संभवेऽपि अत्र तदभावात् । निराकांक्षत्वान्निमित्तभेदात्कथं १० तत्त्वमत आह । **गौतमेति** । अत्रापि चंडालादिति । **अंगिरोवाक्ये**ऽपि तादिति चंडालादावुदकसाहचर्येत्यर्थः । अयं भावः । मूलस्य **गौतमैक**वाक्यतया तद्विषयत्वसिद्धौ तदेकवाक्यतयैव चंडालादुदकादित्यत्राप्युदके इच्छासंबंधावश्यकत्वेन तत्साहचर्याच्चांडालादिष्वपि तत्संबंधः । चंडालादिभिर्यन्मरणं तत्पापकर्मणामिति वचनव्यक्त्या चंडालादिहेतुकमरणस्य पापहेतुकत्वप्रतीत्या पापस्य च निषेधातिक्रमहेतुकत्वान्निषेधस्य च पुरुषव्यापारगोचरत्वात्प्रमादमरणे च मरणानुकूल- १५ तदभावात्पापकर्मणामिति विशेषणादपि तथा । अन्यथा पूर्वं जन्मनि पापकर्मणां येषां चंडालादिभिर्ये मृतास्तेषामेवायं सर्वत एवेतिविधेर्मरणमिति तस्यानर्थक्यात् श्वादिदंशवज्जन्मांतरीयपापानुमानेऽपि निषेधे विशेषानाधायकत्वात् । तस्मान्मरणाभिसंधिना दर्पेण वा शास्त्राभ्यनुज्ञां विना चंडालजलादिभिः प्रागुक्तनिषेधस्य चातिक्रमजनितदोषनिमित्तकाशौचौर्ध्वदैहिकनिषेध इति तदाह । **अतो दर्पादिना विध्यतिक्रमानिमित्त इति** बहुव्रीहिः । सोऽपि । उत्तरार्द्धेऽपि एवमित्याह । २० **एवमिति** । अनेन सकलविधिनिषेधातिक्रमजदोषस्य न तन्निमित्तत्वं किं तु कस्यचिदेवेति तु शास्त्रैकसमधिगम्यत्वाद्यथाशास्त्रमिति सूचितम् । तथा च **ब्राह्मे**

"शृंगिदंष्ट्रिनखिव्यालविषवह्निक्रियाजलैः । सुदूरात्परिहर्त्तव्यः कुर्वन् क्रीडां मृतस्तु यः ॥
"नागानां विप्रियं कुर्वन् हतश्चाप्यथ विद्युता । निगृहीतः स्वयं राज्ञा चौर्यदोषेण कुत्रचित् ॥
"परदारान् रमन्तश्च द्वेषात्तु पतिभिर्हताः । असमानैश्च संकीर्णैश्चांडालाद्यैश्च विग्रहम् ॥ २५
"कृत्वा तैर्निहतास्तांश्च चंडालादीन्समाश्रिताः । शस्त्राग्निगरदाश्चैव पाखंडाः क्रूरबुद्धयः ॥
"क्रोधात्पापं विषं वह्निं शस्त्रमुद्बंधनं जलम् । गिरिवृक्षप्रपातं च ये कुर्वन्ति नराधमाः ॥
"कुशिल्पजीविनो ये च सूनालंकारधारिणः । मुखेभगाश्च ये केचित् क्लीबप्राया नपुंसकाः ॥
"ब्रह्मदंडहता ये च ये चापि ब्राह्मणैर्हताः । महापातकिनो ये च पतितास्ते प्रकीर्तिताः ॥
"पतितानां न दाहः स्यान्नांत्येष्टिर्नास्थिसंचयः। नाश्रुपातश्च पिंडो वा कार्यं श्राद्धादिकं क्वचित्॥ ३०
"एतानि पतितानां तु यः करोति विमोहितः । तप्तकृच्छ्रद्वयेनैव तस्य शुद्धिर्न चान्यथा"॥इति ।

---

१ विडभावे मतुबित्याह । २ खन्क्लीमाया । ( पृ. २३ ) ।

व्यालो दुष्टगजः। नागाः सर्पाः। चौर्येति साहसादेरप्युपलक्षणं। रमंतो रमयंतः। क्रोधादिति शोकादेरप्युपलक्षणम्। मरणाभिसंध्यभावे विषादिभिर्मरणं पूर्वमुक्तं। अधुना तत्सत्तायामुच्यत उक्तपौनरुक्त्यम्। कुशिल्पजीविनः। आपद्यपि निषिद्धचर्मकारादिशिल्पोपजीविनः। सूना प्राणिवधस्थानं। तदलंकारांस्तदुपकरणानि शस्त्रादीनि धारयंति। (?) तदनर्हास्तत्राधिकृता इति।
५ मुखेभगा इति अयोनौ रेतःसेकनिषेधात्। क्लीबेषु पतितत्वोक्तिर्भूम्नाग्रद्धौर्ध्वदैहिकदेवतात्वायोग्यत्वरूपपातित्यं पुंकृते मरणोत्तरकालिकं विवक्षितं। न तु द्विजातिकर्महान्यापादकपापवत्वरूपं पूर्वकालिकम्। ब्रह्मदंडः शापकृत्यादिः। उत्पादितहंतृक्रोधास्तेनहताः। ये च ब्राह्मणैःसाक्षाद्धताः। महापातकिग्रहणं **गौतमोक्ता**नामतिपातक्यादीनाम्।

"चतस्रस्तु परित्याज्या शिष्यगा गुरुगा च या। पतिघ्नी च विशेषेण जुंगितोपगता च ये"॥
१० इत्युक्तानां च पतितानाश्रितानां चोपलक्षणम्। अत एव **स्मृत्यंतरं** सर्वग्राहकम्।
"आत्मनस्त्यागिनां नास्ति पतितानां तथा क्रियेति"। **मनु**रपि। (अ. ५ श्लो. ८८–८९)
"वृथासंकरजातानां प्रव्रज्यासु च तिष्ठताम्। आत्मनस्त्यागिनां चैव निवर्तेतोदकक्रिया॥
"पाखंडमाश्रितानां च चरंतीनां च कामतः। गर्भभर्तृद्रुहां चैव सुरापीणां च योषिताम्"॥

वृथाजाता अनाश्रमिणः पंचमहायज्ञादिरहिताः। दंपतिसाध्यकर्मानधिकारात्संकरजाताः।
१५ भिन्नवर्णस्त्रीपुरुषजाताः। ते च प्रतिलोमजा एव निंदितवृथाजातैः सह द्वंद्वात्। प्रव्रज्यासु तिष्ठतां संन्यासिनाम्। यत्तु "बाह्यप्रव्रज्यानां कापालिकदिगंबरादिदर्शनभेदेन बहुत्वाद्बहुवचनोपपत्तेरत्र ग्रहणमित्युक्तं" **मेधातिथिना** तत्तु "पाखंडमाश्रितानां चे"त्यनेन पौनरुक्त्यापत्तेरुपेक्ष्यम्। बहुवचनं तु दर्शनभेदाभावेऽपि हंसपरमहंसैकदंडत्रिदंडादिभेदाद्वैदिकीष्वप्युपपन्नम्। अत एव त्रिदंडग्रहणादेव प्रेतत्वं नैव जायते इति संगच्छते। त्रिदंडग्रहणमुपलक्षणम्। निंदितसाहचर्यमात्रं तु
२० श्रुतिविरोधेऽकिंचित्करम्। अत एव वृथाशब्दान्वयेन तत्परत्वं **वाचस्पत्या**द्युक्तमप्ययुक्तम्। आत्मत्यागस्य तु वाक्यांतरबलादशास्त्रीयस्य ग्रहणं न तु वृथाशब्दान्वयात्। "व्यवायान्नानुषज्येत" इति **न्यायात्** इति दिक्। तदाह। **अनुसंधेयमिति**। विशेषमाह। **अयं चेति**। "नाशौचोदकभाजना" इत्यादिनोक्तं इत्यर्थः। **आदिना** द्वादशाहादि अहादि च। तत्र हेतुमाह। **हतानां नृपगोविप्रैरन्वक्षं चेति**।

२५ तदप्युपलक्षणमित्याह। **तथेति**। **आदिना** पिंडदानपरिग्रहः। **अपि**स्तयोरेव समुच्चये। **अंतकर्म** प्रेतकर्म। **ब्रह्मेति** ब्रह्मदंडाभ्यां हता इत्यर्थः। ब्रह्मशब्दो ब्राह्मणपरः। दंडश्च समभिव्याहारात् ब्राह्मणशापकृत्यादिपरः। तदेतदभिप्रेत्य संग्रहाय साधारणमाह। **ब्राह्मणेति**। प्रसिद्धार्थनिरासायाह। **प्रेतेति**। **न चेति**। यद्यप्यत्राग्निभिरिति सामान्येन श्रुतं तथाप्यग्नित्रयमेव लभ्यते "त्रेताग्निभ्यो दहंति[1] तस्याग्नित्रेतायां पितृमेध" इति च प्रागुक्त**भारद्वाज**सूत्रात्। "दग्ध-
३० व्यस्त्रिभिराग्निभिः" इति प्रागुक्त**वृद्धयाज्ञवल्क्या**द्युक्तेश्च सभ्यावसथ्यौ सभ्यावसथ्यावाहिताग्नेर्दहनकर्मणि न प्रयुज्यते। चिताप्रदेशा अप्युदीच्यां दिशि पंचमक्रमानतिक्रम्योक्त्वा[2] निशायामप्रतिपत्तीति "उपयुक्तस्याकीर्णकरतानिवर्तकं कर्म प्रतिपत्तिकर्म। **आहिताग्नीति** तद्रूपविषयं न

१ स–ती। २ ख–क्रम्योक्त्वतातिशायामपति।

निषेधो विषयीकरोति। स्मृतितः श्रुतेः प्राबल्यादन्यथा तस्या आनर्थक्यापत्तेरित्यर्थः । 'आनर्थक्येति' **न्यायेन** विप्रादिहतान्याहिताग्निविषयतया श्रुतेः सावकाशत्वेन तत्प्रतिपत्यंतरबोधकस्मृत्युपोद्वलित- निषेधस्मृतेरेव प्राबल्यमित्याशयेन सिद्धांतमाह । **यतश्चण्डाल इति । विधीयतेति** । मुनिनेति शेषः । प्रतिपाद्यत इत्यर्थः । **वैतानं** श्रौताग्निं । जातावेकवचनम् । **आवसथ्यम्** औपासनाग्निम् । उभयसाधारणमाह । **पात्राणीति । वृथेति** । उक्तप्रकरणेत्यर्थः । संस्कृतीयानां ग्रामान्तरादा- ५ नीतानाम् । अथ प्रसंगादसद्भर्चां अविहतमार्गे यातियावत् । तच्छरीरस्येति आहिताग्नि- शरीरस्येत्यर्थः । आद्य**स्तथा** चार्थे । द्वितीय**स्तथा** किंत्वित्यर्थे । **गंगेति** संभवाभिप्रायेण । **तथा** च पुण्यनद्युपलक्षणमेतत् । "शूद्रस्तद्देहं दाहयेदिति" तु **हेमाद्रावुक्तम्** । उपसंहरति **तस्मादिति ।** आहिताग्निभिन्नत्वरूपविशेषानादरेणेत्यर्थः । तदेवाह । **सर्वेषामिति ।** आहिता- ग्न्यनाहिताग्न्यादीनामित्यर्थः । एवं च वत्सरांते तेषां मरणे शरदाहादीत्युपदमेव स्फुटी- १० भविष्यति ।

"जलेऽस्थिनिक्षेपक्रिया प्रदर्श्यते । अस्थीन्यादाय गंगातीरेऽवस्थाप्य कर्ता सचैलं स्नात्वाऽऽचम्या- स्थीन्यपि केशवादिद्वादशनामभिर्द्वादशवारं गंगायां निमज्य पुनस्तीरेऽवस्थाप्य ब्राह्मणैरनुज्ञातः प्राचीनावीती दक्षिणामुख उपविश्य प्राणानायम्य तिथ्यादिश्रवणं कृत्वा अमुकगोत्रस्यामुकशर्मणो गंगायां तस्यास्थिनिक्षेपमहं करिष्य इति संकल्प्य अप उपस्पृश्य "गोत्रायाः देव्या अस्थीनीति" स्त्रियाः १५ ततो गायत्र्यादिमंत्रैर्विधिवन्मिलितेन पंचगव्येनास्थीनि स्नापयित्वा शुद्धदेशान्मृदमादाय शरीरा- कृतिं कृत्वा तत्र दक्षिणाग्रान्दर्भान्संस्तीर्य्य तत्रास्थीनि निधाय अस्थिषु "हिरण्यरूपामिति" हिरण्यशकलं निधाय "मधु वाता" इति वचनेन मधु "तेजोऽसि शुक्रमसी" त्याज्यं "तिलोऽसीति" तिलान् गायत्र्या गोमूत्रं "गंधद्वारामिति" गोमयं "स्वादुः पयस्वेति" शर्करां "दधिक्राव्णां" इति दधि "आप्यायस्वेति" क्षीरं "देवस्यत्वेति" कुशोदकं दत्वा मुक्तारूप्यप्रवालादि च तत्र क्षिप्त्वा २० पुनर्मृत्तिकया शरीराकृतिं कृत्वाऽस्थीन्यपिधाय हस्ताभ्यां तत्सर्वं गृहीत्वा

"प्रसीद वरदे देवि सर्वपापप्रणाशिनि । अमुकस्य प्रयच्छाशु गतिं पुण्यस्य शाश्वतीम्" ॥

इति महानदीं प्रार्थयित्वा गंगाजले प्रविश्य निमज्य भूतलपर्यंतं गत्वा "नमोऽस्तु धर्मराजाय स मे प्रीत" इति तत्र निक्षिप्योत्तीर्य "पृथिवीं गच्छांतरिक्षं गच्छ दिशो गच्छ स्वर्गं गच्छ दिशो गच्छ दिवं गच्छांतरिच्छं गच्छ पृथिवीं गच्छापो वा गच्छ यादि तत्र ते हितमोषधीषु प्रतितिष्ठा शरीरैरिति" २५ जपित्वा स्नात्वा वासः परिधायाऽऽचम्याऽनन्तर्दशाहविषयहिरण्यश्राद्धन्तर्पणश्च कृत्वा कर्म ईश्वरार्पणङ्कुर्याद्" इति । "आप्तो वा म्रियते यदि । पशूनामिव तस्येह न कुर्यादौर्ध्वदेहिकम् ॥

"नैवाशौचं प्रसज्येत तत्पुत्राणां विशेषतः ।

"अथैनमपि चोद्दिश्य कर्म चेत्कर्तुमीप्सितम् । कल्याणामेव कुर्वीत भक्ताभक्तांश्च पूजयेत्" ॥ इति दिक् ।

यद्यपीदं काश्यां प्रयागे च तुल्यं तथापि प्रयागमरणं ब्राह्मणस्य कलिवर्ज्येषु परिगणित- ३० मिति न तत्र तस्याधिकारः । अविमुक्ते त्वस्यैवेत्यन्यत्र विस्तरः ।

**अतः** निषेधस्य प्राबल्यात् । **अतिक्रमे** अतिक्रमेण दाहादिकरणे तत्तन्निमित्तं वक्ष्यमाणाशौचमिति कर्तव्यमिति भावः । **स्नानं** शवस्नपनं णिजर्थांतरभावात् । **रज्जुच्छेद**श्च कादाचित्कः । **पातं चेति**

समाहारद्वंद्वः। प्रागुक्तब्राह्मोक्तं तप्तकृच्छ्रद्वयं तु "एतानीति विमोहित" इति च श्रवण इति बुद्धिपूर्वक-समुदितकरणाविषयकम्। बुद्धिपूर्वके तत्र तु द्विगुणं "जानात्तद्द्विगुणं भवेदि"त्युक्तेरित्याशयेनाह। **एतच्च प्रत्येकमिति। बुद्धिपूर्वे** तत्पूर्वककरणे। एतेन च श्रवणादेतस्याऽबुद्धिपूर्वकसमुदितकरणविषयत्वं तत्र विमोहित इति स्नेहाद्यभिप्रायमेव न तु विषयाज्ञानाभिप्रायम् । अत एव विमोहित इति
५ णिच् प्रयोग इति क्तमपास्तं। **नव्योदेवदत्तः** कृषिं कुर्याद्यज्ञदत्तश्चेतिवच्चस्यान्यथोपपत्तेः । णिच्-प्रयोगस्याज्ञानतोऽप्युपपत्तेश्च। तप्तकृच्छ्रश्चात्र **मनूक्तो** द्वादशाहसाध्यः। तदुक्तं **तेन (११।२१४)** "तप्तकृच्छ्रं चरन् विप्रो जलक्षीरघृतानिलान्। प्रतित्र्यहं पिबेदुष्मान्सकृत्स्नायी समाहितः॥" इति।

**अबुद्धीति** प्रत्येकमित्यादिः । वचनत्रयेऽपि वाशब्दश्रवणात्प्रत्येकविषयता स्फुटैव ।

**एषां** पूर्वोक्तानां करसहितोदकक्रियेति मध्यमपदलोपिसमास इति केचित् । **द्वंद्वोत्तरं**
१० तत्पुरुष इति परे । सांतपनं चात्र **जाबालोक्तं** सप्ताहसाध्यं । तदुक्तं **तेन**

"गोमूत्रं गोमयं क्षीरं दधिसर्पिः कुशोदकम्। एकैकं प्रत्यहं पीत्वा त्वहोरात्रमभोजनम् ॥

"कृच्छ्रः सांतपनो नाम सर्वपापप्रणाशन" । इति ।

विरोधं परिहरति। **यः पुनरित्यादिना । पुनस्त्वर्थे । तदिति** पूर्वोक्तपरामर्शकं । **शवमिति** सामान्ये शरीरापेक्षया वा नपुंसकं । **केवलशब्द** इतरनिवृत्तौ । तदेव विशदयति । **पूर्वो-**
१५ **क्तानामिति** । एतदुभयभिन्नानामित्यर्थः । तयोः प्रत्येकं अशक्तस्येति देशकालाद्यनुसारेणेति भावः । एवमग्रेऽपि । **बंधच्छेदने इति ।** बंधनच्छेदने इति पाठांतरं । बंधने छेदने इत्यपि । **माससिति** । कालाध्वनोरिति द्वितीया । **भैक्षेति** भिक्षासमूहेत्यर्थः । भिक्षेति पाठांतरं । **त्रिषवणमिति** त्रिकालस्नानं चेत्यर्थः । उपसंहरति । **एवमिति** । एतेन **मिताक्षरोक्ता** व्यवस्था-वचनाननुगुण्यादप्युक्ता । किं तु **ब्राह्मं** बुद्धिपूर्वसमुदितविषयं । "कृत्वाग्निमिति" अबुद्धिपूर्व-
२० समुदितविषयं स्पर्शाश्रुपातभिन्नदाहादिप्रत्येककरणे बुद्धिपूर्वे **संवर्त्तोक्तं** अबुद्धिपूर्वे तु **समंतूक्तं** स्पर्शाश्रुपातयोस्तु प्रत्येककरणे तच्छवमितीति **नव्यो**क्तमपास्तम्

विशेषमाह। **अयं चेति। अनुष्ठानेति** शौचाचमनाद्यावश्यकनित्यादिकर्मेत्यादिः। जीर्णत्वा-देवाह । **वानप्रस्थेति** । **आदिना** यतिनैष्ठिकब्रह्मचारिपरिग्रहः ।
मि. पृ. १६६
अचिकित्स्यकुष्ठक्षयादिमहाव्याधिग्रस्तलुप्तभिषक्क्रियपरिग्रहश्च । **विषयः**
२५ विषयोऽपि । अत एवाह । **तेषामिति ।** तथा च यदि ते भृग्वग्न्यादिभिरबुद्धिपूर्वं म्रियन्ते तेषामपि विहितमरणत्वेन दोषाभावान्नायमाशौचादिनिषेधः । किं तु तेषां त्रिरात्राशौचमौर्द्ध्वदेहिकञ्च भवत्येवेति भावः । **वृद्धगार्ग्यमाह । वृद्धः शौचेति** । तत्स्मरणतोऽपि रहित इत्यर्थः । यद्वा तद्बोधकस्मृत्यर्थरहित इत्यर्थः । **उदकं** उदकादिसर्वं दशाहकृत्यं । **श्राद्धमे**कोद्दिष्टादिकं । **ब्राह्मे**ऽप्युक्तम्

३० "दुश्चिकित्स्यैर्महारोगैः पीडितस्तु पुमानपि । प्रविशेज्ज्वलनं दीप्तं करोत्यनशनं तथा ॥

"अगाधतोयराशिश्च भृगोः पतनमेव च । गच्छेन्महापथं वापि तुषारगिरिमादरात् ॥

"प्रयागवटशाखाग्रादेहत्यागं करोति च । स्वयं देहविनाशस्य काले प्राप्ते महामतिः ॥

"उत्तमान्प्राप्नुयाल्लोकान्नात्मघाती भवेत्क्वचित्। महापापक्षयात्स्वर्गे दिव्यान्भोगान्समश्नुते॥
"एतेषामधिकारस्तु तपसां सर्वजन्तुषु। नराणामथ नारीणां सर्ववर्णेषु सर्वदा॥
"ईदृशं मृतकं येषां जीवतां कुत्रचिद्भवेत्। आशौचं स्यात्त्र्यहं तेषां वज्रानलहते तथा॥
"वाराणस्यां म्रियेद्यस्तु प्रत्याख्यातभिषक्क्रियः। काष्ठपाषाणभूतस्तु जाह्नवीजलमध्यगः॥
"अविमुक्तोन्मुखस्तस्य कर्णमूलगतो हरः। प्रणवं तारकं ब्रूते नान्यथा कस्यचित्क्वचित्"॥इति। ५

वज्रानलहते तथेत्येतदपि वृद्धादीनामेव तादृशमरणप्रकारविधानपूर्वकं त्र्यहाशौचविधायकम्। दयादिना प्रमादेन वा तथा मृतानामाशौचाभावसम्पूर्णाशौचयोरुक्तत्वात्। "अग्निजलप्रविष्टानां भृगुसंग्रामगामिनाम्। देशांतरमृतानां च त्रिरात्रेण शुद्धिरि"त्यादि **कश्यपादि**वचांस्यपि वृद्धादिविषयाण्येव। **ब्राह्मवृद्धगार्ग्यै**कवाक्यत्वात्।

"योऽनुष्ठातुं न शक्नोति महाव्याध्युपपीडितः। सोऽग्न्युदकं महायात्रां कुर्वन्नामुत्र दुष्यति"। १०
इति **गर्गोक्तेः**। अवृद्धस्याप्येवं। इदमपि वृद्धपरमित्यन्ये। तादृशस्य वृद्धविप्रादेः प्रयागमरणविधौ यद्यपि न विवादस्तथापि तन्मरणस्य कलिवर्ज्येषु भृग्वग्निपतनैश्चैव वृद्धादिमरणं तथेति **माधवीये आदित्यपुराणे** परिगणितत्वेन सांप्रतमनाधिकार एव। एवं फलार्थं विहितप्रयागमरणोऽपि

"सर्वेन्द्रियविमुक्तस्य स्वव्यापाराक्षमस्य च। प्रायश्चित्तमनुज्ञातमग्निपातौ महापथः॥
"धर्मार्जनासमर्थस्य कर्तुः पापांकितस्य च। ब्राह्मणस्याप्यनुज्ञातं तीर्थे प्राणविमोक्षणम्"॥इति १५
**स्मृति**वाक्यं तु प्रायश्चित्तपरं वाराणसीपरं च। अत एव **मात्स्ये**

"अग्निप्रवेशं ये कुर्युरविमुक्ते विधानतः। प्रविशंति मुखे ते मे निःसंदिग्धं वरानन"॥ इति **मात्स्यं** संगच्छते। एवमनशनेनापीत्यपि। तत्र **ब्राह्मं** तूक्तमेव। एवं च तत्र बुद्धिपूर्वं प्राणत्यागिनामपि मोक्ष एव भवति। तत्र वैधप्राणत्यागिनां सद्योमोक्षः। अवैधेन तथा कुर्वतां किंचिद्विलंबः। एवं च तथा वृद्धादेरविमुक्ततोऽन्यत्रमरणं कलिवर्ज्यमेवेति बोध्यम्। अयं च सर्व २०
एषामाशौचादिनिषेधस्तदानीमेव। संवत्सरादूर्ध्वं तु एषामपि सर्वेषामौर्ध्वदैहिकादि सर्वं कार्यमेव।

"गोब्राह्मणहतानां च पतितानां तथैव च। ऊर्ध्वं संवत्सरात्कुर्यात्सर्वमेवौर्ध्वदेहिकम्"॥इति **षट्त्रिंशन्मतात्**। तच्च नारायणबलिपूर्वकं कार्यमिति वक्ष्यते। अत्राहिताग्नेः प्रोषितस्य मरणे **शतद्वयीकारः**। "अग्नौ सति स्यादथ देहकल्पास्थिरस्थ्यस्ति चेदग्निरपेक्षणीयः। अस्थ्नामभावे त्वशरीरकस्य विनष्टवह्नेरुदकक्रियैवेति" अत्र केशवी अग्निसत्त्वात्सुपर्णाशरोत्पत्तिः शरीरेवासतिप्रेता- २५
धानेनाग्न्युत्पत्तिः। अत्रैव विषये यद्यग्नयो नु म्रियंते तदा शरीराभावात्स्त्रीसांनिध्याभावात्प्रेताधानेनाग्न्युत्पत्तेरशक्यत्वात्संस्कारस्य दाहादेर्लोप उदकदानादि भवत्येव। पत्नीमरणेऽप्येवं। स्वामित्वाविशेषात्। तत्रैव क्व मृत इति देशापरिज्ञानेऽपि पार्थिकृती कार्या। कक्षदहने पुरुषाकृतिदहने चोदकदानादिसमानमिति। इदं चिंत्यं। "तदभावे पलाशानां वृंतैः कार्यः पुमानपी"त्यभावे विधानेनास्थिवत्प्रतिकृतेस्तत्तुल्यत्वादित्य**नंतभट्टादयः**। वस्तुतस्तु पूर्वार्धे तथैव। अग्रिमस्यायमाशयः। तस्य ३०
तत्तुल्यत्वेऽपि अरण्यभावात्तत्सत्त्वेऽपि पत्नीसांनिध्याभावात्पत्न्ये॥

**अथ देहपरित्यागविधिः** प्रसंगादुच्यते। तत्र ब्राह्मणस्यापि स्वयंदेहपरित्यागे विधिरधिकारिविशेषणं फलं च निरूप्यते। तत्र **ब्रह्मपुराणे**

१ सर्वेषामिति पाठांतरम्। २ इत ऊर्ध्वं ग्रंथस्त्रुटित इत्यनुमीयते।

"दुश्चिकित्सैर्महारोगैः पीडितस्तु पुमानपि। प्रविशेदनलं दीप्तं कुर्यादनशनं तथा॥
"आगाधतोयराशिं वा भृगोः पतनमेव च। गच्छेन्महापथे वापि तुषारगिरिमादरात्॥
"प्रयागवटशाखाग्रात्पतनं च करोति यः। स्वयं देहविनाशस्य काले प्राप्ते महामतिः॥
"उत्तमान्प्राप्नुयाल्लोकान्नात्मघाती भवेत्क्वचित्। महापापक्षयात्स्वर्गे दिव्यान्भोगान्समश्नुते॥
५ "एतेषामधिकारस्तु तपसां सर्वजंतुषु। नराणामथ नारीणां सर्ववर्णेषु सर्वदा"॥ इति।

अत्र यद्यपि यः कुर्यादित्यनुवादस्तथापि फलश्रवणादधिकारिनिरूपणाच्च विधिरुन्नीयते। दुश्चिकित्सव्याधिपीडायामपि यावद्यथाशक्ति चिकित्सया स्वधर्माचरणं संभवति तावदवस्थेय-मेवेति प्रतिपादयति स्वयमित्यर्द्धेन। अयं च कालविशेषः स्वबुध्यैव परीक्षणीयः। महामति-रित्यनेन विचारधैर्यवैराग्यादिमतैवेदं कर्तुं शक्यमित्युक्तं। यथोक्तः कालविशेषो न महापापिनां १० प्रायश्चित्तरूपयथोक्तमरणस्य फलमपेक्ष्यत इत्याशयेन तेषामेवंविधमरणफलं पृथगाह महापापे-त्यर्द्धेन। तथा चैवं विधिमरणेऽधिकारिविशेषणमसाध्यरोगित्वमहापापित्वे। तत्र च महारोगिणा-मुत्तमलोकप्राप्तिरेव मुख्यं फलं महापापिनां तु मरणस्य प्रायश्चित्तरूपतया पापक्षय एव मुख्यं फलम्। स्वर्गस्तु आनुषंगिकमिति विशेषः। ये तु **जाबालश्रुतौ** संन्यासिनामुक्ता मरणप्रकाराः "अयं विधिः परिव्राजकानां वीराध्वानेऽनाशकेऽपांप्रवेशेऽग्निप्रवेशे महाप्रस्थाने वे"त्यादिना तेऽपि १५ महारोग्यादिविषया एव। निष्क्रमत्वमात्रं विशेषः। यत्तु **याज्ञवल्क्येन** अनाशनाग्निप्रवेशजल-प्रपतनोद्योगीत्यादिना संन्यासिनामनशनाद्यमस्तामसत्वेन निंदितः स ध्यानादिरूपस्वधर्मानुष्ठाने संभवत्यपि कृतकृत्यत्वाभिमानादिनिमित्तकदेहत्यागादिविषय इत्यविरोध इति। सर्वजंतुष्वित्यनेन पश्वादीनामप्यधिकार उक्तः। मनुष्येष्ववांतरभावमाह नराणामित्यर्द्धेन। अत्र सर्वदेत्यनेन चाश्रमादिनियमोऽनग्न्यादिनियमश्चापाकृतः। यत्तु "भृग्वादिपतनमन्यत्र ब्राह्मणादिति" ब्राह्म-२० णस्य स्वयं मरणनिषेधकं वाक्यं तत्काम्यमरणविषयमेव उक्तमरणनिमित्ताऽभावे "न तु पुरायुषः स्वः कामी प्रेयादिति" श्रुत्येकवाक्यत्वात्। यानि च सामान्यान्यात्महत्यानिषेधकवाक्यानि तानि क्रोधादिदोषनिमित्तकमरणविषयाण्येव। यथा तत्रैव **ब्रह्मपुराणे**

"क्रोधात्प्रायां विषं वह्निं शस्त्रमुद्बंधनं जलम्। गिरिवृक्षप्रपातं च ये कुर्वंति नराधमाः॥
"ब्रह्मदंडहता ये तु येऽन्तरा ब्राह्मणैर्हताः। महापातकिनो ये च पतितास्ते प्रकीर्तिताः"॥ इति।

२५ अन्यथा

"यदाऽसौ नियमेऽकल्पो जरवाजातवेपथुः। आत्मन्यग्नीन्समारोप्य मच्चित्तोऽग्निं समाविशेत्"॥

इत्यादिभिर्**मनुयाज्ञवल्क्या**दिसकलस्मृतिषु वानप्रस्थानां स्वयं मरणविधिर्विरुध्येत। वान-प्रस्थाश्रमे ये च यन्मरणविधानं तदप्याश्रमांतरसाधारणं भवत्येव। ब्रह्मचार्याधिकारोक्ताध्ययन-वत्। तपोरूपत्वादेव तु तपःप्रधानाश्रमे विशेषतो विधानमिति मंतव्यं। एवं **व्यासेनापि** इंद्रिया-३० पगमशून्यानामेव स्वयं मरणमपस्मृत्युतयोक्तम्।

"इन्द्रियैरपरित्यक्ता ये ये नृपविषादिन(?भि)ः। घातयंति स्वमात्मानं चंडालाभिहताश्च ये"॥

इत्यादिनेति तस्माद्ब्राह्मणस्य संन्यासिसाधारण्येनास्ति स्वयं देहत्यागाधिकारः।

**अन्या स्मृतिरपि**

"धर्मार्जनासमर्थस्य कर्तुः पापांकितस्य च। ब्राह्मणस्याप्यनुज्ञातं तीर्थे प्राणविमोक्षणम्॥" इति।

**देवलादिस्मृति**ष्वपि "तीर्थे पुण्यतमे यथावद्देहसंन्यासाद्ब्राह्मणो महापातकान्मुच्यत" इति ।
**कौर्मे च** प्रायश्चित्तप्रकरणे

"ब्रह्महत्यां सुरापानं स्तेयं गुर्वंगनागमम् । कृत्वा तैश्चापि संसर्गं ब्राह्मणः कामकारतः ॥

"कुर्यादनशनं विप्र पुण्यतीर्थे समाहितः । ज्वलंतं वा विशेदग्निं ध्यात्वा देवं कपर्दिनम् ॥" इति ।
**गारुडे च** ५

"ब्रह्महा द्वादशाब्दानि कुटीं कृत्वा वने वसेत् । कुर्यादनशनं वापि भृगोः पतनमेव वा ॥

"ज्वलंतं वा विशेदग्निं जलं वा प्रविशेत्स्वयम् । ब्राह्मणार्थे गवार्थे च सद्यः प्राणान्परित्यजेत् ॥" इति।

एवं पुराणान्तरेष्वपि । तस्मान्महारोगमहापातकनिमित्ताभ्यां जरयेन्द्रियवातादिनिमित्तकस्व-धर्मात्यन्तलोपे च ब्राह्मणस्यास्ति देहत्याग इति सिद्धम् । अत एव **रामायणादौ** शरभंगादी-नामाचारोऽपि दृश्यत इति गंगायां वर्णाश्रमाविशेषेण सामान्यतो मरणं **काशीखंडे विहितम्** । १०
"जरारोगाभिपन्नं तु कुणपं जाह्नवीजले । धैर्येण तृणवत्त्यक्त्वा संविशेदमरावतीमिति" । तथा काशीं प्रकृत्य **मात्स्ये**

"अग्निप्रवेशं यः कुर्यादविमुक्ते ममालये । विशेन्माथि स्वयं सोऽपि निस्संदिग्धं वरानने ॥

"अनशनं यः कुरुते मद्भक्तः कृतनिश्चयः । न तस्य पुनरावृत्तिः कल्पकोटिशतैरपि" ॥ इति ।

**लैङ्गे** च योगविस्तारानंतरमाह १५

"एवं ध्यानसमायुक्तः स्वदेहं यः परित्यजेत् । स याति शिवसायुज्यं समुद्धृत्य कुलत्रयम् ॥

"अथवारिष्टमालोक्य मरणे समुपस्थिते । अविमुक्तेश्वरं गत्वा वाराणस्यां सुशोभनम् ॥

"येनकेनापि वा देहं संत्यजन्मुच्यते नरः ॥" इति । **भागवते** च

"गतस्वार्थमिमं देहं विरक्तो मुक्तबंधनः । अविज्ञातगतिर्जह्यात्स वै धीर उदाहृतः" ॥ इति ।
तस्मान्महारोगे महापापे जरादिभिः स्वधर्मानुष्ठानासामर्थ्ये च अरिष्टादिभिः सन्निहितमरण- २०
निश्चये च ब्राह्मणस्यापि अनशनादितपस्यधिकारोऽस्तीति । **महाभारते** च "रोगपापाद्यभावेऽपि ब्राह्मणस्यापि काम्यमनशनं विहित"मिति विशेषः । यथा ब्राह्मणक्षत्रियावधिकृत्य,

"अनार्तो व्याधिरहितो गच्छेदनशनं तु यः । पदे पदे यज्ञफलं स प्राप्नोति न संशयः ॥

"आर्तो वा व्याधितो वाऽपि मच्छेदनशनं तु यः । शतवर्षसहस्राणां मोदते स दिवि प्रभो" ॥ इति
अनशनविधानेन तीर्थेऽत्र गमनं विवक्षितम् । एवं रोगपापाद्यभावेऽपि योगप्रवृत्तस्यारिष्टादिनाऽऽसन्न- २५
मरणज्ञाने स्वयं देहत्यागप्रकाराः **शिवपुराणे वायुसंहितायां** चोक्ताः । यथा

"यस्त्वासन्नां मृतिं मर्त्यो दृष्ट्वाऽरिष्टं च भूरिशः । स योगारंभनिरतः शिवक्षेत्रं समाश्रयेत् ॥

"स तत्र निवसन्नेव यदि धीरमना नरः । प्राणान्वितोऽपि रोगाद्यैः स्वयमेव परित्यजेत् ॥

"कृत्वाऽप्यनशनं वैधं हुत्वा वह्निं शिवानले । क्षिप्त्वा वा शिवतीरेषु स्वदेहमवगाहनात् ॥

"शिवशास्त्रोक्तविधिवत्प्राणान्यस्तु परित्यजेत् । सद्य एव विमुच्येत नात्र कार्या विचारणा" ॥ इति । ३०
ततश्च यथाकालमरणादपि शिवक्षेत्रवासिनां मुक्तिमुक्त्वा उक्तम्

"तथापि मरणं शस्तमुशन्त्यनशनादिभिः । शास्त्रविश्रंभधीरेण मनसा क्रियते यतः ॥

"एतेष्वन्यतमोपायं कथमप्यवलम्ब्य वा। षडंगसिद्धिं विधिवत्काश्यां संस्थीयते यदि ॥
"यतीनामिव तस्येह न कुर्यादौर्ध्वदैहिकम्। नैवाऽऽशौचं प्रसज्येत न पुत्राणां विशेषतः॥
"अथैनमपि चोद्दिश्य कर्म चेत्कर्तुमीप्सितम्। कल्याणमेव कुर्वीत भक्त्या भक्तांश्च पूजयेत्"॥
इति ... ... ... ... ... काश्यां प्रयागे च तुल्यार्थेऽपि प्रयागमरणं ब्राह्मणस्य
५ कलिवर्ज्येषु परिगणितमिति न तत्र तस्याधिकार इति उक्तम्। अविमुक्ते त्वस्त्येवेत्यन्यत्र विस्तरः। एतयोरुभयोरभावाद्वा तदभावः। यद्वा तत्स्वदेशविषयमेव पूर्वदाहेनास्थिशरीरस्यैव नाशे ततो वृष्ट्याग्निनाशे मस्तकावशेषेऽपि तन्न। अशरीरकस्येति बहुव्रीहिद्वयं। अन्यथा पौनरुक्त्यं स्पष्टमेव। तथा च यमः

"यजमाने चितारूढे पात्रन्यासे तथा कृते। वर्षाद्यभिहते चाग्नौ ततः पृच्छामि याज्ञिकाः ॥
१० "शेषं लब्ध्वा च लब्धेन निर्मथं तत्र कारयेत्। शेषालाभे तथा कुर्याद्दग्धशेषस्य वा पुनः ॥
"अप्सु प्राप्स्यंति तं शेषमाग्नेयास्ताः स्मृता बुधैः"॥ इति। शेषं अरण्यादिकाष्ठशेषं। लब्धेन तेनाग्न्युत्पादनसमर्थेन। निर्मथं कृत्वाऽग्निमुत्पाद्य तेन दहेत। अरण्यादिकाष्ठशेषालाभे दग्धशेषकाष्ठस्य तथा कृत्वा दहेत्। तस्याप्यभावेऽप्सु प्रक्षिपेदित्यर्थः। एवमनाहिताग्नेरपि तुल्यन्यायत्वात्। तदभावान्मन्थनाभाव इति मात्रं विशेष इति बोध्यम्[1]

१५ तदेतदभिप्रेत्याह। **एवमित्यादिना**। निद्वेषु सत्सु पुनरिति वाक्यालंकारे। **नारायणेति**।
"राजभिर्निहतानां च शृंगिदंष्ट्रिसरीसृपैः। आत्मनस्त्यागिनां चैव श्राद्धमेषां न कारयेत्॥"
इत्यादि। **तथा** तथैव। अत एवाह। **नान्यथेति**। **तस्मा**त्तत्करणेनौर्ध्वदैहिककरणे शुद्धेः संपादनात्। **अन्नं** श्राद्धं। **एवो**ऽप्यर्थे। तेनान्यसमुच्चयः। **वा** चार्थे। द्वितीयदिने शिवोद्देशेनापि पिंडदानसत्त्वात्। इदं च सकलवैष्णवोक्तप्रकारोपलक्षणं बोध्यम्। **नैतदिति**। एतदन्यथा न
२० किं तु तथ्यमेवेत्यर्थः। प्राच्यग्रंथेषु तु शवं यावदिति पाठः। तदा विष्णुरूपं प्रेतं ध्यात्वेत्यर्थः। विष्णुबुद्धौ समालंब्येत्युक्तेः। प्रागभिसंहितं प्रकाशयति। **एवमिति** अग्रेऽस्यान्वयः। षट्त्रिंशद्भिः कृतं धर्मशास्त्रं **षट्त्रिंशन्मतम्**। आपिना **व्यासादि**समुच्चयः। फलितमाह। **एवं चेति**। एवेन पूर्वव्यवच्छेदः। एवं व्यवच्छेद्यं विशेषरूपं न तु सर्वमिति ध्वनयन्नाह। **अत्रेति**। पुनर्गृह्येत्येकपदं। पश्चात् गृहीत्वेत्यर्थः। **ततः** क्षालनोत्तरं। **पुनरिति** द्वितीयवारम्। अस्य
२५ तात्पर्यमाह। **संवत्सरादिति**। "पतिते च मृते शुद्धौ प्राजापत्यांस्तु षोडशेति" सामान्यत उक्तं। तदावृत्त्या आह। **द्विगुणादिकमिति**। **आयुषश्चेति**। चेन भक्तिसमुच्चयः। साऽपि करणे निमित्तं तावत्कालं पुत्रादेर्जीवनसंदेहादित्यर्थः। **गृह्यपरिशिष्टे**ऽप्युक्तम्। चांडालादित्याद्युक्त्वा।
"न संस्कारविधिस्तेषां नैव कार्योदकक्रिया। रोदनं नैव कर्तव्यं सूतकं न च बंधुभिः ॥
"दग्ध्वा शरीरं प्रेतस्य संस्थाप्यास्थीनि यत्नतः। प्रायश्चित्तं तु कर्तव्यं पुत्रैश्चांद्रायणत्रयम्"॥ इति।
३० **स्मृतिरत्नावल्यादावप्युक्तम्**

"आत्मनो घातशुद्ध्यर्थं चरेच्चांद्रायणद्वयम्। तप्तकृच्छ्रचतुष्कं वा त्रिंशत्कृच्छ्राणि वा पुनः ॥
"अर्वाक्संवत्सरात्कुर्याद्दहनादि यथोदितम्। कृष्णनारायणबलिमनित्यत्वात्तदायुषः॥" इति।
इदमेवादिग्रह्यामादौ। तत्प्रकारं स्फुटत्वायाहेति। **नारेति**। **इत्थं** वक्ष्यमाणप्रकारेण वैवस्वतं च

---

१ अत्र शोधपत्रत्रयम्।

यममित्येका देवता। **नद्या**मित्यस्य तात्पर्यमाह। **न पत्न्यादीति**। न योषितः। अहोरात्रमिति शेषः॥ यज्ञावृता तत्प्रक्रियया। **अवनेजनं** जलसेचनं। **परिवारेति** यमविशेषणम्। **तन्मध्ये** शेषषष्ठ्या समासः। पत्रित्तर्भाणं (?) **यावत्** तत्समाप्तिपर्यंतम्। भाद्रपदशुक्लपंचम्या प्रारभ्य वर्ष-पर्यंतं प्रतिशुक्लपंचमि यथाक्रममनंतादिद्वादशनामभिर्नागपूजां विधाय यथाशक्ति ब्राह्मणान्भोज-यित्वा प्रतिपंचम्युपवासं चतुर्थ्येकभक्तपूर्वकं पंचम्यां नक्तभोजनं कृत्वांऽते नागादिव्यासोद्देशेन ५ ब्राह्मणाय दत्वौर्ध्वदेहिकं कुर्यादिति सर्वार्थः। एवं प्रकारमुक्त्वा तत्करणे मानमाह। **नारेति**। **वैष्णवे** विष्णुपुराणे। **एकेति**।

"इंद्रियैरपरित्यक्ता ये च मूढा विवादिनः। घातयंति स्वमात्मानं चांडालादिहताश्च ये॥

"तेषां पुत्राश्च पौत्राश्च दयया समभिप्लुताः। यथा श्राद्धं प्रतन्वंति विष्णुना वै प्रतिष्ठितम्॥

"तत्सर्वं संप्रवक्ष्यामि नमस्कृत्य स्वयंभुवे" इत्यादि। अत्र सर्वत्रानुपूर्वी प्रागुक्तैव। क्वचित्पाठ- १० क्रमस्यान्यथात्वेऽपि "पाठक्रमादिति" **न्यायात्**। अन्यथा **समाहित इति**। समाहितानिति पाठांतरम्। **यथाज्येष्ठं** ज्येष्ठक्रमेण। **हविषेति**। हविष्येति पाठांतरम्। **एवो**ऽप्यर्थे। **आचम्य** आचम्य। तत्र विशेषमाह। **एकमिति**। **वृद्धतमं**। अन्यतममिति पाठांतरं। **तिलांभ इति** शाकम्। पार्थिवादिः। तदीयं **गोत्रं नाम** च बुध्यारूढं कृत्वा **विष्णुमते** तदभिमते।

सर्पहतोक्तविशेषे मानमाह। **सर्पदंशनिमित्तमिति**। बहुव्रीहिः। विधेरदर्शनादाह। **परकृति-** १५ **रूपेणेति**। तथा च तेन विधिः कल्प इति भावः। **सुवर्णभारेति**।

"नागदष्टः पिता यस्य भ्राता वा दुहिताऽथ वा। मातापुत्रोऽथ भर्त्ता वा कर्तव्यं तद्वदस्व मे॥" इत्यादिः अस्यादिः। "तुलास्त्रियां पलशतं भारः स्याद्विंशतिस्तुला" **इत्यमरः** (२।९।८७)। सुवर्णतारेति पाठांतरम्। तदा **तार**मुत्तमं च तत्सुवर्णं चेति कर्मधारये राजदंतादित्वं कल्प्यम्। यद्वा तारं रौप्यं द्वंद्वं कृत्वेत्यस्य व्यासाय दत्वेत्यत्रान्वयः। **तथैव गामित्यस्यापि** गामेव २० चेत्यर्थकस्य। **एवेन** प्रत्यक्षत्वसूचकेनेतरनिरासः। 'आप्तवानितीति' पाठः। यद्यपि **वैष्णवा-**दात्मघातिनामेव नारायणबलिरायाति तथापि निमित्तमात्रस्य संवत्सरादूर्ध्वमौर्ध्वदैहिकस्य विधायक**षट्त्रिंशन्मता**त्तदर्हता संपादनार्थं प्रायश्चित्ताहाणां ब्रह्महादीनामपि सः। तथा च **बौधायनसूत्रम्**। (३।२१।१-२२) "अथातो नारायणबलिं (संस्कारविधिं) व्याख्यास्यामः

"चंडालादुदकात्सर्पाद्ब्राह्मणाद्वैद्युतादपि। दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्मिणाम्॥ २५

विषशस्त्ररज्जुपाषाणदेशांतरमृते वाऽभिशस्तसुरापात्मत्यागिनां ब्राह्मणहतानामन्येषां च द्वादशवर्षाणि त्रीणि वा यत्र मरणं यस्य यस्य तत्र कुर्वीत। असंहितानां पालाशाग्रमेवासूयवर्ण-सुरणां कृष्णाजिने पुरुषाकृतिं कृत्वा होतारकल्पेन वा पैतृमेधेन वा संस्कारं कुर्यात्। अथ प्रयोग-मंत्रानपोद्धृत्य पुरुषसूक्तस्य प्रत्यृचं तत्तन्मन्त्राणां स्थाने पृथक्प्रयोगो भवत्यपि वा तूष्णीं सर्वं क्रियेत। याम्यसूक्तेनोपोषणं पौरुषेणोपस्थानं समानमत ऊर्ध्वम्। तीर्थे स्नात्वा प्रेतायोदकक्रियां ३० कृत्वा नामगोत्रमनसा ब्रूते 'नारायणैतत्ते उदकमिति' वाचाभिव्याहरेत्। स एवमेव सायंप्रातर्दश-रात्रं करोति त्रिरात्रं वा करोति त्रिरात्रेण वा पिंडप्रदानेऽसावेतत्ते पिंडम् इति विशेषः।

एकादश्यामेकोद्दिष्टम् । "एवं प्रेतायामुष्मै यमाय च स्वाहेति" अग्नौकरणे वा प्रतिग्रहणे प्रदाने विसर्जने च "नारायणाये"त्यनेन मंत्रेण करोति । सर्वं मनसा संकल्पयेद्वाचाऽभिव्याहरेत् । पर्व-त्रये च षाण्मासिके च समानम् । संवत्सरे सपिंडीकरणम् ।

"सपिंडीकरणस्थाने नारायणबलिक्रिया । सायंप्रातर्न विद्यते सोयं बौधायनमतं यथा ॥

५ "द्वयोरयनसंक्रात्योः पुण्येषु दिवसेषु वा । अथवाऽपरपक्षस्य क्रिया भवेत् । सपिंडीकरण-मेतेषामन्येषां च समानम् । प्रेतपात्रं पितृपात्रे वा असिंचेत् । प्रेतपिंडं निनयेत् । त्रिषु पितृ-पिंडेषु निदध्यात् । असौ पितृभिः पितामहैः प्रपितामहैः संगच्छध्वं भूर्भुवः स्वरोम् । इति व्याख्यातो नारायणबलिः "। **अथातो नारायणबलिं व्याख्यास्यामो** ( ३।२० ) "दक्षिणोत्तरायणयो-रपरपक्षस्य द्वादश्यां क्रियेत । पूर्वेद्युर्द्वादशषड्वा ब्राह्मणान्निमंत्रयेत् । योनिगोत्रश्रुतवृत्तसंप-
१० न्नान् । अथाऽपरेद्युर्देवगृहे नदीतीरे वाऽग्निमुपसमाधाय संपरिस्तीर्य आप्रणीताभ्यः कृत्वोपोत्थायाग्रे-णाग्निं दैवतमावाहयति पुरुषसूक्ते द्वे ऋचौ जपित्वा व्याहृतिभिर्देवतामावाहयति । अथैनं स्नापयति पुरुषसूक्तेन अथैनं गंधपुष्पधूपदीपैरष्टाक्षरेणार्चयित्वाऽथाद्भिस्तर्पयति केशवं तर्पया-मीति द्वादशनामभिः । परिधानप्रभृत्याग्निमुखात् कृत्वा पक्कात् जुहोति "विष्णोर्नुकमिति" पुरो-नुवाक्यमनूच्य "परोमात्रयेति" याज्यया जुहोति । अथाज्याहुतीरुपजुहोति "केशवाय स्वाहे"-
१५ त्येतैरेव नामधेयैः । अथ गुडपायसघृतामिश्रमन्नं निवेदयति "देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां विष्णवे महापुरुषाय हविर्निवेदयामीति" सप्तव्याहृतीभिः स्वाहाकारेण जुहोति। व्याहृतिभिराचमनम् । अथ ब्राह्मणानाहूय सदर्भोपक्लप्तेष्वासनेषूपवेश्याथैनान्वस्त्रगंधपुष्पधूपदीप-माल्यैरभ्यर्च्य आभ्यनुज्ञातस्तिलमिश्रं हविः समुदायुत्य हस्ते जुहोति "पितृभ्यः स्वधा नमो नारायणाय स्वाहा पितामहेभ्यः स्वधा नमो नारायणाय स्वाहा प्रपितामहेभ्यः स्वधा नमो
२० नारायणाय स्वाहे"त्यादि मंत्रमूह्य "सर्वाभ्यः स्वधा नमो नारायणाय स्वाहा । अग्नये कव्यवाह-नाय स्विष्टकृते स्वधा नमो नारायणाय स्वाहा" इत्यथ ब्राह्मणानन्नेन परितोष्य आचम्य तेषां यथाशक्ति दक्षिणां ददाति । प्रदक्षिणीकृत्य शेषमनुज्ञाप्य दक्षिणेनाग्निं प्रागग्रान्दर्भान्संस्तीर्य तेषु बलिं ददाति "विश्वेभ्यो देवेभ्यो नमः । साध्येभ्यो देवेभ्यो नमः । सर्वेभ्यो नमः । सर्वाभ्यो देवताभ्यो नमो विष्णवे नमः । नारायणाय नमः । सहस्रशीर्षाय नमः । यज्ञात्मने नमो यज्ञ-
२५ पुरुषाय नमो विश्वात्मने नमः सर्वात्मने नमः । सर्वेश्वराय नमः इति । स्विष्टकृत्प्रभृतिसिद्ध-माधेन वरप्रदानात् सर्वान्पितॄनधिगच्छति ब्रह्मलोके महीयत इत्याह भगवान्बौधायन इति" । यद्यप्युक्तवाक्यपर्यालोचनयौर्ध्वदेहिकयोग्यतासंपादने नारायणबलेरेव निरपेक्षसाधनता प्रतीयते तथापि जलाग्न्युद्बंधनभ्रष्टाः प्रव्रज्यानाशकच्युता इत्यादिमवाक्ये विषप्रपतनप्रायशस्त्रघात-हताश्च य इति पाठानुसारादात्मघातिनां तावत्तेष्वमृतेष्वपि आत्मघातनिमित्तं प्रायश्चित्तमपि
३० तत्पुत्रादिभिः कार्यं । तच्च व्याख्यानपर्यालोचनयाऽत्रैव चांद्रायणेन शुद्ध्यंति तप्तकृच्छ्रद्वयेन वेति पाठाच्छक्त्याद्यपेक्षया चांद्रायणं तप्तकृच्छ्रद्वयं वा । अत एव

"कृत्वा चांद्रायणं पूर्वं क्रिया कार्या यथाविधि । नारायणबलिः कार्यो लोकगर्हाभयान्नरैः ॥

---

१ ख-विषय ।

"अन्नमिष्टं प्रियं चैव विप्रे दद्यात्सदक्षिणम्। पिंडोदकक्रिया पश्चाद्वृषोत्सर्गादिकं च यत्॥

"एकोद्दिष्टानि कुर्वीत सपिंडीकरणं न चेत्" **हेमाद्रावुक्तम्**। तत् **षट्त्रिंशन्मतवाक्येऽपि** केवलं चांद्रायणमुक्तम्। **स्मृत्यर्थसारादौ** तु द्वयेन चेति पठित्वा समुचितमुक्तम्। **गृह्यकारिकायां** तु

"प्रमादादपि निःशंकस्त्वेकस्माद्विधिचोदितः। शृंगिदंष्ट्रिनखिव्यालविषविद्युज्जलादिभिः॥ ५

"चांडालैर्ब्राह्मणैश्चौरैर्निहतो यत्रकुत्रचित्। चांद्रायणं तदा कृच्छ्रद्वयं तस्य विशुद्धये॥

"षट्कृच्छ्रान्यं च दश कृत्वा तु विधिना दहेदि"त्याद्युक्त्वा "बुद्धिपूर्वमृतानां तु त्रिंशत्कृच्छ्रं समाचरेत्" इत्युक्तम्। मृत्युविशेषाच्च प्रायश्चित्तविशेषोऽप्युक्तः। इदं चात्मघातप्रायश्चित्तं तत्तज्जातिवधप्रायश्चित्तसमुच्चितं कार्यम्। ब्रह्महादीनां च प्रायश्चित्तार्हाणां तत्तत्पापक्षयार्थं तत्तद्योग्यप्रायश्चित्तं कृत्वा नारायणबलिः कार्य इति **मदनपारिजातस्मृत्यर्थसारादावुक्तम्**। १० सर्वत्र प्रमाणं मृग्यम्। पुत्रादिकर्तृकप्रायश्चित्तेन तत्पापक्षयस्य वचनं विना असंभवात्। सत्यपि च पापे नारायणबलिमात्रेण वचनात्तद्योग्यताऽस्तु। अत एव **माधवेन** "जलाग्निपतने चैव प्रव्रज्यानाशकेषु च"इत्यादि **पराशर**वाक्ये मर्तुमध्यग्यजीवितानामेवेदं प्रायश्चित्तं न तु मृतानां तत्कर्तुरेवाभावादित्युक्तम्। तत्र "शस्त्रघातहताश्च ये" इति वाक्यादात्मघातप्रायश्चित्तं मृतेष्वप्यस्तु। जातिवधपाखंडित्वादिनिमित्तं तु वचनं विनाकथं स्यादिति केचित्। वचनानि प्रागुक्तान्येवेति। तदुक्त- १५ मेवेति परे। इदमपि सर्वं प्रागुक्तं। प्रायश्चित्तार्हाणामेव तदनर्हाणां तु ब्राह्मे प्रकारान्तरमुक्तम्।

"पतितस्य तु कारुण्याद्यस्तृप्तिं कर्तुमिच्छति। स हि दासीं समाहूय सर्वगोदत्तवेतनाम्॥

"अशुद्धघटहस्तां तां यथावृत्तं ब्रवीत्यपि। हे दासि गच्छ मूल्येन तिलानानय सत्वरम्॥

"तोयपूर्णं घटं चेमं सतिलं दक्षिणामुखी। उपविश्य तु वामेन चरणेन ततः क्षिप॥

"कीर्तयेः पातकीं संज्ञां त्वं पिबेति मुहुर्वद। निशम्य तस्य वाक्यं सा लब्धमूल्या करोति तत्॥ २०

"एवंकृते भवेत्तृप्तिः पतितानां न चान्यथा"। इति येषां मध्यौर्ध्वदेहिकं कार्यं तेषामपि सपिंडीकरणं न।

"गोब्राह्मणहतानां च पतितानां तथैव च। व्युत्क्रमाच्च प्रमीतानां नैव कार्या सपिंडता॥"

इत्युक्तेः।

"ब्राह्मणादिहते ताते पतिते संगवर्जिते। व्युत्क्रमाच्च मृते देयं येभ्य एव ददात्यसौ"॥ इति। २५ श्राद्धविधेश्च। एवं च पतितानां नारायणबल्यादेर्नित्यत्वेन "ब्राह्मणादिहते" इत्यत्र पतितग्रहणस्य प्रायश्चित्तानर्हविषयत्वेन कथंचित्संभवेऽपि ब्राह्मणहतादिग्रहणस्यासंभवेनोपपत्तेः प्रेताभ्युदयकामनाप्रयुक्तत्वेन यत्तस्य पाक्षिकत्वं कैश्चिदुक्तं तन्नादर्तव्यं। लोकगर्हेति विशेषणेन नित्यत्वावगमाच्च। नष्टायां फलेच्छायां प्राप्ते वा फले प्रारब्धसमाप्तेरावश्यकत्वं गर्हापरिहारार्थत्वेनैवोक्तं न्यायविद्भिः। अत एव संवत्सरात्प्रागपि तत्कार्यमिति विशेषः प्रागुक्तः। **हेमाद्र्यादौ** ३० तु प्रागुक्त**षट्त्रिंशन्मत**बलात्पतितादीनां सपिंडीकरणमपि निषेधस्तु पित्रादिभिन्नविषय इत्युक्तम्। तन्मते ब्राह्मणादीति वाक्यबलात्तदौर्ध्वदेहिकानुष्ठानस्य पाक्षिकत्वं वत्सरादर्वाक् क्रियमाणवृद्धि-

श्राद्धादिविषयत्वं वा तस्याश्रयणीयं स्यात्। यदपि **तेनोक्तं** गोब्राह्मणहतपतितानामेव संवत्सरादूर्ध्वं नारायणबल्यादि अन्येषां त्वर्वागिति तदपि न **षट्त्रिंशन्मतस्य** पतितग्रहणस्य ब्राह्मपरिभाषितपतितपरत्वात्। ब्राह्मणवसिष्ठ**न्यायेन** गोब्राह्मणहतानां पृथगुक्तेरिति दिक् ॥ ६ ॥

## याज्ञवल्कीये ७ श्लोकः।

५ व्यवहितसंगतिमाह। **एवमिति**। तत्र बीजमाह। **साफ्वादमिति**। तत्रैवादावाकांक्षोदयादिति भावः। **अनन्तरं** उदकदानात्। प्रेतपरत्वनिरासायाह। **कृतमिति**। उदकशब्दो लाक्षणिक इत्याह। **दानमिति**। अन्यथा पाठक्रमे यथार्थक्रमादाह। **स्नातानिति**। पुनः स्नातानित्यर्थः। समर्थमाह। **सम्यगिति**। अनेन वस्त्रपरिवर्तनादिकमपि सूचितम्। "शाद्वोजं वालघासयोः। शाद्वलः शादहरिते" इति **कोशादाह**। **नवोद्गतेति**। इदं मृदुत्वलब्धं। अन्यार्थ-
१० निरासायाह। **सम्यगिति**। दिवामरणे नक्षत्रोदयपर्यंतं रात्रिमरणे सूर्योदयपर्यंतं स्थितानित्यर्थः। अनेन वस्त्रशोषणप्रावरणादिकमपि सूचितम्। तानित्यस्यार्थः **पुत्रेति**। योग्यतयाऽऽह। **कुलेति**। **वक्ष्यमाणैरपवदेयुरिति**। अपगतदुःखान्कुर्युरित्यर्थः ॥ ७ ॥

## याज्ञवल्कीये ८ श्लोकः।

तदेवाह। **शोकेति**। न्यूनतानिरासायाह **मनुष्येति**। **आदिना** स्वेदजोद्भिज्जपरिग्रहः।
१५ **भूतजातं** प्राणिसंघरूपं। सप्तम्यर्थमाह। **तत्रेति**। तस्मिन्संसार इत्यर्थः। अस्य विशेषणद्वयमाह। **संसरणेति**। धर्मत्वेनेति पाठः। अनिजंतमेतत्। संदिग्धसाध्यधर्मेतिवत्। **संसारः** प्रपंचः। तात्पर्यार्थमाह। **तस्मादिति** ॥ ८ ॥

## याज्ञवल्कीये ९ श्लोकः।

**किंचेति** अन्यदप्याहेत्यर्थः। एवमग्रेऽपि। कर्मभिरित्यस्य संभूतत्वेऽन्वय इत्याह। **जन्मा-**
२० **न्तरेति**। तत्र यानि स्वीयशरीराणि तज्जनितैः कर्मरूपबीजैरित्यर्थः। स्वकर्मप्रकारमिति क्रियाविशेषणम्। काय इत्यस्यास्तीति शेषः। वाक्यभेदात्तस्य प्रतिपाद्यत्वेन सिद्धवदनुवादासंभवात्। अत एवाह। **स यदीति**। तत्र सूचितमनुक्तं बीजमाह। **फलोपेति**। **पुनः** पश्चात्।

**तत्र** विषये। आत्मा तु नित्य एवेति भावः। क्वेत्यस्यार्थः **किमर्थेति**। **परीति** प्रलाप इत्यर्थः। शोक इति यावत्। प्राग्वदाह। **निरिति**। तत्त्वमेवाह। **वस्तुन** इति।
२५ मि. पृ. १६८ वस्तुनः पदार्थस्य तथात्वान्नश्वरत्वादित्यर्थः। तदेवाह। **न हीति** ॥ ९ ॥

## याज्ञवल्कीये १० श्लोकः।

**किं चेत्यस्यैवार्थोऽपि चेति**। अनेन किंचेति न पठितमिति सूचितमिति परे। **नामेति** निश्चये। इदं मरणमाश्चर्यं न वसुमती ग्रहणमुपलक्षणमित्याह। **पृथिव्यादीनीति**। 'गंत्रीति'-त्रिजंतप्रकृतिकमित्याह। **गच्छतीति**। उदधिरिति जातावेकवचनमित्याह। **तथेति**। **पूर्वतो**
३० विशेषमाह। **जरामरणेति**। तत्वेन प्रसिद्धा इत्यर्थः। **चार्थोऽपीति**. **कथमित्यस्य** न

यास्यतीत्यत्रान्वयः । अपि तु सर्वथैव यास्यतीत्यर्थः । 'प्रख्या'शब्दः सादृश्यार्थक इत्याह । **सन्निभेति** । मर्त्येति सूचितमाह । **मरणेति** । प्राग्वल्लक्ष्यार्थमाह । **भूतेति** । कथमिवेति सूचितमाहोचितमेवेति । हि यतः । **प्रापणं** गमनम् । प्राग्वदाह । **अत इति** । **समेति** अभिवेश इत्यर्थः ॥ १० ॥

## याज्ञवल्कीये ११ श्लोकः । ५

**अनुशोचनं** रोदनं । यत इत्यस्यार्थो **यस्मादिति** । **वदनेति** यथासंख्यमन्वयः । मुक्तमित्यंतर्भावितण्यर्थमित्याह । **निर्गतमिति** । निर्गलितमिति । पाठो अत्राऽपि । तथा **'श्लेष्मेति'** समाहारद्वंद्व इत्याह । **श्लेष्मेति** । अवशः इत्यस्यार्थोऽ**कामोपीति** । अत **इत्यस्याशयार्थस्तस्मादिति** । ह्यर्थमाह । **किंत्विति** । इत्यर्थः ॥ ११ ॥

## याज्ञवल्कीये १२।१३ श्लोकौ । १०

**एवमिति** योग्यत्वात्कर्माह । **कुलेति** । संश्रवणं न गमने हेतुरित्यतोऽध्याहारेणाऽऽह । **त्यक्तेति**। **बालानिति** । तान्सर्वान्यथाक्रममग्रतः कृत्वेत्यर्थः । **गृहमिति** । मृतस्येति शेषः । **द्वारि** । द्वार्येव । योग्यत्वादाह । **स्थित्वेति** । विदिश्येति । प्राग्वदित्याह । **दशनैरिति** । **खंडेति** । **न** तु भक्षयित्वेत्यर्थः । ततस्तत्केतिशेषः । **अलभ्य** संस्पृश्य । शंखोक्तिमाह । **दूर्वेति** । प्रवालशब्दार्थः **अंकुरेति**। **अपिना** तैलयवाद्यक्षतादिसमुच्चयः । **अश्मनि** द्वारपाषाणे । **पदमेकं** पादं । 'कृत्वे'त्यस्यार्थो १५ **निधायेति** । न तु तमुल्लंघ्येति भावः । **प्रविशेयुरिति** । बालपुरःसरा एवेति भावः । **आश्वलायनो**ऽपि ( ४।४।१०-१३ ) "आसत आनक्षत्रदर्शनात् । आदित्यस्य वा दृश्यमाने प्रविशेयुः । कनिष्ठप्रथमा ज्येष्ठजघन्याः । प्राप्यागारमश्मानमग्निं गोमयमक्षतांस्तिलानप उपस्पृशंतीति" । अवधिद्वयव्यवस्थोक्ता **पारस्करेण** ( ३।१०।३५-३६ ) । "प्रेतस्पर्शिनो न ग्रामं प्रविशेयु रा नक्षत्रदर्शनात् । रात्रौ चेदतीतस्य" इति । **हारीतेन** तु बहिःस्थित्यसंभवेऽनु- २० कल्प उक्तः । "ब्राह्मणानुमत्या चेति" । **आश्वलायनोक्ता**श्मस्पर्शश्च पादनिधानरूपय एव एकमूलकल्पनालाघवात् । **पारस्करे**ऽपि (३।१०।२४) । "निवेशनद्वारे पिचुमन्दपत्राणि विदश्याऽऽचम्योदकमग्निं गोमयं गौरसर्षपां तैलमालभ्याऽश्मानमाक्रम्य प्रविशंतीति"। **वैजवापेन** तु केषांचिदालम्भे मंत्राप्युक्ताः । शमीमालभते "शमीपापं शमयत्विति" अश्मानमालभते "अश्मवत्स्थिरो भूयासमिति" अग्निम् । "अग्निर्नः शर्मयच्छत्विति" । "यस्तु विप्रः शुध्यतीति" **मनूक्तो** २५ ( ५।९८ ) वार्यादिस्पर्शः स आशौचोत्तरदिने शुध्यतीत्युक्तेः । एवं चाशौचांत्यदिनकर्त्तव्यमधोयद्दाहनादित्यंशलिखनं **वाचस्पत्यादेस्तद्भ्रांतिमूलकं** आशौचांत्यदिनेऽपि **स्नानोत्तरं** गोहिरण्यादिस्पर्शो बोध्यः ॥ १२ ॥ १३ ॥

## याज्ञवल्कीये १४ श्लोकः ।

**अतिदेशमाहेति** । अव्यवहितोक्तस्येत्यादिः । अस्यातीति क्वचित्पाठ एव । **तदेवाह** । ३० **यदेतदिति** । अर्थार्थमाह । **तत्र केवलमिति** । परेषामित्यस्य पूर्वत्राप्यन्वय इत्याह । **परेषामपीति** । अ[illegible]नामपीत्यर्थः । प्रसक्तिबीजमाह । **धर्मेति** । प्रेतेत्यादार्थमाह । **प्रेतेति**। **संस्पर्शेति** । प्रसिद्ध इत्याह । **निर्हरेति** । तदप्युपलक्षणमिति भावः । अस्य सिद्धत्वेन विधेयत्वादाह ।

**भवतीति**। अत एवातथैवावतारितम्। नन्वेवं विवरणविव्रीयमाणयोर्विरोधस्तत्क्रमवैपरीत्यादत आह। **प्रवेशनेति**। **अमांगलिकत्वात्**। मंगलरूपकर्मभिन्नकर्मसंग्राहकत्वात्। द्वितीयवाक्यार्थमाह। **तेषां चेति**। परेषामित्यर्थः। प्रेतेत्यादेरत्राप्यन्वय इत्याह। **धर्मेति**। शुद्धिरिति न पाप इत्याह। **शुद्धिमिति**। **स्नानेति**। सर्वं वाक्यमिति **न्यायेनाह**। **एवेति**। अर्थादाह। **शुद्धिरिति**। भवतीति
५ शेषः। **अनाथमित्यनेन** धर्मार्थैरेवं प्रवृत्तिः सूचिता। यज्ञश्चात्र प्राथम्यादग्निष्टोम एव। अत एवाऽऽ**नुपूर्वमिति** सफलम्। अयं चार्थवादः। **अशुभम्**। अनिष्टं। तत्र हेतुगर्भं विशेषणं **शुभेति**। अत्रावगाहनं प्राणायामस्याप्युपलक्षणं। तेन च सति संभवे नद्यादिस्नानं सूचितम्। मौलमुभयमग्निस्पर्शस्याप्युपलक्षणम्। तथा च **पराशर** एव

"असगोत्रमबंधुं च प्रेतीभूतं द्विजोत्तमम्। वहित्वा च दहित्वा च प्राणायामेन शुध्यति॥" इति।
१० **अंगिरा** अपि

"यः कश्चिन्निर्हरेत्प्रेतमसपिंडः कथंचन। स्नात्वा सचैलः स्पृष्ट्वाऽग्निं तस्मिन्नेवाह्नि वै शुचिः॥" इति। अत्र ब्राह्मणस्य द्विजोत्तमस्य च ग्रहणमुपलक्षणम्। "मृतं द्विजं न शूद्रेण हारयेन्न शूद्रं द्विजेनेति" **विष्णुस्मृतौ**। शूद्रमात्रस्य कर्तृत्वेन कर्मत्वेन च निषेधात्। धर्मार्थमित्युक्तेः फलमाह। **स्नेहादिनेति**। बंधुवत्स्नेहादिना धर्मेण न तु मूल्येनेति तु **मेधातिथिः**। **मातुराप्तान्बांधवांश्चेत्येकं** निमित्तम्। आप्तग्रहणं प्रत्यासन्नबांधवमातुलादिग्रहणार्थम्।
१५
मि. पृ. १६९
अत एवासपिंडोऽसमानोदको न सर्वः सपिंडादन्यः। **अन्नमिति** सिद्धमसिद्धं वेत्यर्थः। **गृहे चेति**। चोऽन्वाचये। तथा च वासे सत्यसति वाऽसनेन दशाहमित्यर्थः। अत एव तथैव वचने उक्तम्। केवलमित्यस्य व्यावर्त्यमाह। न **पुनरिति**। एवमग्रेऽपि। **न चाश्नातीति** तत् ग्रामे वसति चेत्यपि बोध्यम्। अत एव "ग्रामान्तरवासिनः प्रतस्पृशो ग्रामं न विशे-
२० युरानक्षत्रदर्शनाद्रात्रौ चेदादित्यस्येति" **हारीतेन** 'सज्योतिरि'त्युक्तम्। भृतिग्रहणेन सवर्णाशवनिर्हरणे तु तदन्नभोजनाद्यभावेऽपि तज्जात्याशौचम्।

"यदि निर्हरति प्रेतं प्रलोभाक्रांतमानसः। दशाहेन द्विजः शुध्येत् द्वादशाहेन भूमिपः॥

"अर्धमासेन वैश्यस्तु शूद्रो मासेन शुध्यति"। इति **कौर्मात्**। विशेषमाह। एतत्सजातीये **अवर इति**। हीनवर्ण उत्कृष्टम्। उत्कृष्टश्च हीनवर्णं निर्हरणीयाशौचादिनैः शुद्धिरित्यर्थस्तदाह।
२५ **विप्रस्येति**। एवंप्रकारेण **ब्राह्मे**ऽप्युक्तम्

"ब्राह्मणस्त्वन्यवर्णानां न करोति कदाचन। कामान्मोहाद्भयाल्लोभात्कृत्वा तज्जातितां व्रजेत्॥

"पुत्राः कुर्वंति विप्रस्य क्षत्रविट्शूद्रयोनयः। स तादृशेभ्यः पुत्रेभ्यो न करोति कदाचन॥

"राज्ञि मृतेऽसपिंडे तु निरपत्ये पुरोहितः। मंत्री वा तदशौचं तु चीर्त्वा पश्चात्करोति सः॥" इति। अनपत्येऽविद्यमानसपिंडे च राजनि मृते स पुरोहितस्तत्प्रयुक्ताशौचं चीर्त्वा तस्मै राज्ञे श्राद्धं
३० कुर्यादित्यर्थः। भृत्यासवर्णनिर्हारे तु एतत् द्विगुणम्। "अवरश्चेद्वरंचरो वाऽथ वरं यदि वहेच्छते तदा गौ च दृष्टाथे द्विगुणं भवेदिति" **व्याघ्रपादोक्तेः**। यद्वा त्वलंकरणमपि करोति तदा

"कृच्छ्रपादोऽसपिंडस्य प्रेतालंकरणे कृते। अज्ञानादुपवासः स्यादशक्तौ स्नानमिष्यते"॥ इति

**शंखोक्तं** प्रायश्चित्तं च कार्यम् । शवसंस्पर्शनिमित्तं त्वाशौचं स्पर्शवत एव । तत्तद्भावादेस्तत्तद्द्रव्यादेश्च । तथा **चांगिराः**

"अशौचं यस्य संसर्गादापतेत् गृहमेधिनः । क्रियास्तस्य न लुप्यन्ते गृह्याणां च न तद्भवेत् ॥" इति ।
क्रियाः वैतानोपासनाद्याः । गृह्याणां गृहे भवानां । अतिक्रांताशौचेऽप्येवमेव ।

"अतिक्रांते दशाहे तु पश्चाज्जानाति चेद्गृही । त्रिरात्रं सूतकं तस्य न तद्द्रव्यस्य कर्हिचित् ॥" ५
इति **स्मृतेः** । इदं च मातापितृभिन्नविषयमित्याद्यग्रे स्फुटीभविष्यति ॥ १४ ॥

## याज्ञवल्कीये १५ श्लोकः ।

**निर्हृत्यापीति** । इदं च सकलदाहाद्यौर्ध्वदेहिकस्याप्युपलक्षणम् । "व्रत्येवे"त्यस्य तात्पर्यार्थमाह । **न पुनरिति** । ब्रह्मतेत्यर्थः । तथा च लुप्तव्रतसंधानार्थं पुनरुपनयनं प्रत्यवायपरिहारार्थं प्रायश्चित्तं च न कार्यम् । आशौचं तु निर्हरणनिमित्तं प्रागुक्तव्यवसायं कार्यमेवेति भावः । **मनुदेवलावपि** ( ५-९० ) १०

"आचार्यं स्वमुपाध्यायं पितरं मातरं गुरुम् । निर्हृत्य तु व्रती प्रेतव्रते न वियुज्यते" ॥ इति ।
**कटशब्देनेति** । प्रागुक्तार्थकेनेत्यर्थः । **तत्सह** सब्रह्मचारी । **कटान्नमाशौचान्नमिति** । **मदनपारिजातकृत्** तात्पर्यार्थमाह । **एवमिति** । **व्रतलोप इति** । तथा च भ्रष्टब्रह्मचर्यसंधानार्थं पुनरुपनयनं प्रत्यवायपरिहारार्थं प्रायश्चित्तमाशौचं च कार्यमेवेति भावः । **शवेति** तत्संबंधि कर्म कुर्वत १५ इत्यर्थः । **देवलोऽपि** ।

"ब्रह्मचारी न कुर्वीत शववाहादिकाः क्रियाः । यदि कुर्याच्चरेत्कृच्छ्रं पुनःसंस्कारमेव च ॥"
इति । अत्रादिनाऽलंकरणादिकमेव न तु दाहादि । तत्र गुरुप्रायश्चित्तस्य वक्ष्यमाणत्वात् । द्वंद्वांते श्रूयमाणस्य प्रत्येकं संबंधादाह । **क्रीतमिति** ॥ १५ ॥

## याज्ञवल्कीये १६ श्लोकः । २०

अस्यासिद्धत्वेनानुवादासंभवादाह । **भवेयुरिति** । **शेष इति** । क्रीतं यथा लब्धं वा । "एकान्नमेव भोक्तव्यं क्रीत्वा लब्ध्वा वान्यगृहादेकान्नमलवणमेकां रात्रिं भुंजीरन्निति" **वैजवापात्** । आशौचमध्ये भोजनं च ज्ञातिभिः सह कार्यम् । "आशौचमध्ये यत्नेन भोजयेच्च स्वगोत्रजान्" इति **ब्राह्मात्** ।

"तिलान्ददत पानीयं दीपं ददत जाग्रत । ज्ञातिभिः सह भोक्तव्यमेतत्प्रेतेषु दुर्लभम् ॥" इति २५
**भारतीयाच्च** । **मरीचिना** तु दिनविशेषेषु सहभोजनमुक्तम्

"प्रथमेऽह्नि तृतीये च सप्तमे नवमे तथा । ज्ञातिभिः सह भोक्तव्यमेतत्प्रेतेषु दुर्लभम्" ॥ इति ।
तच्च दिवैव कार्यम् । "दिवा चैव हि भोक्तव्यममांसं मनुजर्षभ" इति **वैष्णवात्** । भोजनपात्राणि चोक्तानि **हारीतेन** "पाणिषु मृण्मयेषु पर्णपुटेषु चाश्नीरन्निति" । अन्नविशेषनिषेधश्च **गृह्यकारिकायाम्** ३०

"लवणक्षीरमाषान्नापूपमांसानि पायसं । वर्जयेदाहृतान्नेषु बालवृद्धातुरैर्विना" ॥ इति ।
एते धर्मा अन्यत्रोक्ता बोध्याः । एषु धर्मेष्वनुक्तकालविशेषाणामवधित्रयं वैकल्पिकमुक्तं

बोध्यम् । **त्र्यहमिति** । अनेन दिनत्रयपर्यंतं अयं नियम इति सूचितम् । गृह्यकारोऽप्येवम् । **तृणमय इति** । अतः कटादिरित्यर्थः । यद्यपि अनशनं नैवोक्तमिति स्मृत्यन्तरारोधाय मौल-पक्षस्यैव प्राधान्यमभिप्रेत्य व्याख्यात्रा अनशनस्य गौणत्वमुक्तम् तथापि तथा स्पष्ट**वसिष्ठानु-रोधेन** वैपरीत्यमुचितभेदेन शक्ताशक्ते च व्यवस्था । अत एवा**श्वलायनोऽपि** (४।४।१४–१५)
५ 'नैतस्यां रात्र्यामन्नं पचेरन् । क्रीतोत्पन्नेन वा वर्त्तेरन्निति" बोध्यम् । **अक्षारेति** अक्षारलवणोभयकान्नाका इत्यर्थः । अत्र क्षिताविल्युक्तेः खट्वाकंबलादिनिषेधो न तु कटस्य "भूमौ स्रस्तरशायिन" इति **विष्णोः** । "अधः प्रस्तरे" इत्युक्त**वसिष्ठाच्च** । अत एवैवव्यावर्त्यं न खट्वादावित्येवोक्तम् । क्षारगणश्चोक्त **अग्निपुराणे**

"तिलमुद्गावृते शैब्यं सस्ये गोधूमकोद्रवौ । धान्यकं देवधान्यं च शमीधान्यं तथैक्षवम् ॥

१० "स्विन्नधान्यं तथा पण्यं मूले क्षारगणस्मृत" इति । क्षारो यवक्षारादि । लवणं सैंधवादि । लवणविशेषणं वा क्षारग्रहणं तेन सैंधवादेरनिषेध इति **मेधातिथिः** । निमज्जनं च नदी-तडागादावतीर्यांबुपरिघर्षणादिवर्जितं मार्जनरहितं स्नानमात्रं । मांसाशनं च यावदाशौचं **स्मृत्यं-तरे** निषिद्धम् । "न स्त्रियमुपेयुर्न मार्जयेयुर्न मांसमश्नीयुरिति" **अध** इति द्वंद्वाद्युत्तरं मत्वर्थीयः । **सर्वे इति** "न मार्जयीरन्मांसं न भक्षयेयुराप्रदानादिति" शेषः । सर्वैः ज्ञातयः सह स्नायुरित्यर्थ
१५ इत्यन्ये । प्रदानमेकादशाहादिकं श्राद्धं तत्पर्यंतं । तथा च मांसभक्षणादौ **मनूक्त**त्र्यहेण विकल्पो बोध्यः । **वैपूडवे** त्वस्थिसंचयनमेवावधित्वेनोक्तम् ।

"शय्यासनोपभोगस्तु सपिंडानामपीष्यते । अस्थिसंचयनादूर्ध्वं संयोगस्तु न योषिताम्" ॥इति ।
मैथुनं तु यावदाशौचमेव नेत्यर्थः ।

"सपिंडः पुत्रभिन्नः । तस्य तु यावदाशौचमेव । तत् दशाहं कटमुपासीरन्मातापित्रोरेक मरणे"
२० इति **बौधायनात्** । **बृहस्पतिरपि**

"अधःशय्यासना दीना मलिना भोगवर्जिताः । अक्षारलवणान्नाः स्युर्लब्धक्रीताशनास्तथा" ॥इति।

दीना हर्षहास्यादिरहिताः । मलिना मार्जनवस्त्रक्षालनादिरहिताः । अत एव क्षालनार्थं निर्णेजकादिभ्यो वाससस्त्यागस्तेनैवाऽऽशौचोपान्त्यदिन उक्तः । "नवमे वाससां त्यागो नखरोम्णां तदंतिके" इति । **ब्राह्मे** तु अंत्यदिने एव वस्त्रशुद्धिरुक्ता

२५ "यस्य यस्य तु वर्णस्य यद्यत्स्यात्पश्चिमं त्वहः । स तत्र गृहशुद्धिं च वस्त्रशुद्धिं करोत्यपि" ॥ इति

"प्रथ... [illegible] ...षूदकक्रिया वाससां च त्यागोंऽते त्वंत्यानामिति" **गौतमो-क्त**स्तु तत्त्यागः परिवर्तनमन्नं पिंडदानाद्यौर्ध्वदेहिककालधृतयोस्तु त्याग एव

"ग्रामाद्बहिस्ततो गत्वा प्रेतस्पृष्टे तु वाससी । अंत्यानामाश्रितानां च त्यक्त्वा स्नानं करोति च" ॥इति **ब्राह्मात्** । यत्तु **मिश्रै**र्गौतमेनांत्यानां शूद्राणामंतेवासस्त्यागविधानाद्बार्हस्पत्यवासस्त्यागस्य द्विज-विषयतया संकोचः कृतः स भिन्नविषयत्वादयुक्तः । भोगवर्जिताः स्रक्चंदनादिधारणोच्चासनादि-रहिताः । तेन तैलाभ्यंगतांबूलचर्वणादिनिषेधः । यत्तु **मार्कंडेयपुराणे**

"तैलाभ्यंगो बांधवानामंगसंवाहनं च यत् । तेन चाप्यायते जंतुर्यच्चाश्नंति स्वबांधवाः" ॥ इति ।

तैलाभ्यङ्गो विहितः । स त्वन्त्यदिने "ग्रामान्निष्क्रम्य आशौचांते कृतश्मश्रुकर्मणस्तिल-कल्कैर्वा स्नाता विपरिवर्तितवाससो गृहं प्रविशेयुरिति" **विष्णूक्त**तिलकल्कादिस्नानविकल्पितो द्रष्टव्यः । यद्यपि पितृयज्ञावृतेत्यनेन तत्प्रकारोऽतिदिष्टस्तथापि

"पितृयज्ञं स्वधां चैव न प्रयुंजीत कर्हिचित् । अनुशब्दं तथा चेह प्रयत्नेन विवर्जयेत् ॥

"उपतिष्ठतामयं पिंडः प्रेतायेति" समुच्चरेत् । तूष्णीं प्रत्येकं पुष्पं च धूपं दीपं तथैव च"॥ इति ५ **मरीचि**वाक्यात्स्वधादेर्निवृत्तिरित्याह । **प्राचीनेति** । रमेयाह । **तूष्णीमिति** । अन्नस्य पिंडरूपत्वे तूष्णींत्वे च मानमाह । **यथाहेति** । **विवर्जितमिति** क्रियाविशेषणम् । **प्रागुदीची** । ईशानी । बहिःपदार्थविवरणमिदम् । इदमुपलक्षणं । देशांतरमपि **ब्राह्मे** उक्तम् । "द्वारोपांते ततः क्षिप्त्वा स शुद्धां गौरमृत्तिकाम्" । इति ।

"ग्रामाद्बहिश्च कर्तव्यं जलाशयसमीपतः । पिंडदानं दशाहानि प्रेतायारण्यमाश्रितैः"॥ इति च । १० **शुनःपुच्छो**ऽपि "द्वारदेशे प्रदातव्यो देवतायतनेषु वेति" मृत्तिकाक्षेपश्च स्थंडिलनिर्माणार्थं

"स्थांडिले प्रेतभागं तु दद्यात्पूर्वाह्ण एव तु । कृत्वा तु पिंडसंकल्पं नामगोत्रेण सुंदरीति" ॥

**वाराहात्** । विशेषमाह । **दर्भेति** । दर्भास्तरण इत्यर्थः । **अनुपनीतेति** । तथा च वचने संस्कार उपनयनमेवेति भावः । विशेषांतरमाह । **तथेति** ।

एवमग्रेऽपि । तदेवाह । **असगोत्र इति** । अत्र यद्यपि दद्यादिति सामान्येनोक्तं तथापि १५ प्रतिग्रहाभावेऽपि पिंडकर्मश्राद्धादौ तदुद्देशत्यागमात्रेणादाधातुप्रयोगसंभवा-दुत्तरार्द्धे चाद्यदिनकर्मण एव दशाहसमाप्त्यन्यत्रप्रतीतेर्दाहस्य च तद-संभवात् (मि. पृ. १५०)

"प्रथमेऽहनि यो दद्यात्प्रेतायान्नं समाहितः । अन्नं नवसु चान्येषु स एव प्रददात्यपीति" ॥

**ब्राह्माच्च** पिंडं दद्यादित्येवार्थो बोध्यः । पूर्वोत्तरसंदर्भेण व्याख्यातृसंमतमेवेदम् । **विवोदासीये** तु २०

"सगोत्रो वाऽसगोत्रो वा योऽग्निं दद्यात्सखे नरः । सोऽपि कुर्यान्नवश्राद्धं शुध्येत्तु दशमेऽहनि" ॥ इत्युक्तम् । अत्र अपिनाऽन्यसमुच्चयः । तथा च तत्र विकल्पः । तथा च पुत्राद्यसंनिधाने विप्र-कृष्टाधिकारिणा पिंडदानरूपप्रक्रिया आरब्धा तत्र मध्ये संनिकृष्टसंनिधानेऽपि विप्रकृष्टेनैव दशा-हांता क्रिया एकादशाहादि तु संनिकृष्टाधिकारिणैवेति भावः । **भविष्योत्तरे** देशनियमोऽप्युक्तः

"गृहद्वारे श्मशाने च तीर्थे देवगृहे तथा । यत्राद्यो दीयते पिंडस्तत्र सर्वं समापयेत् ॥" इति । २५ **वाप्य** अथवा शाकैरपि । अत्र शालिपक्षो मुख्यः । अन्ये मुख्यासंभवेऽनुकल्पाः । तथा च स एव

"फलमूलैश्च पयसा शाकेन च गुडेन च । तिलमिश्रं तु दर्भेषु पिंडं दक्षिणतो हरेत् ॥" इति ।

दशाहो विद्यते यस्य तद्दशाहिकम् । एवमुत्तरीयाद्यविपर्ययो द्रष्टव्यः । एतेषां च विपर्यये उक्तं **गृह्यकारिकायाम्** "उत्तरीयशिलापात्रकर्तृद्रव्यविपर्यये । पूर्ववत्तांजलीन्दद्यात्पिंडदानं तथैव च" इति । एवं चार्थभेदेन दोष इति तत्रार्थे चमिति केषांचिद्वचोनिर्मूलं बोध्यम् । ३०

**पाषाणे इति** । भूमौ पाषणे वा तत्र । अत एव "असंस्कृतानामिति गृहद्वारि तस्मै प्रेताय पिंडं निर्वपेयुः । भूमौ माल्यं पानीयं चोपलिप्तायां दद्युरिति" च **प्रचेतः** स्मरणमपि स्मृति राणादिकं

"कुशास्तीर्णभूमौ पैतृमेधिकसंस्कारं मंत्रपूर्वकमादित" इति। अत्र चौरस इत्येकत्वं कर्तृत्वे विवक्षित-माधिकारे त्वविवक्षितम्। "प्रमीतस्य पितुः पुत्रैः श्राद्धं देयं प्रयत्नतः" इति **बृहस्पतिना** सर्वेषा-मधिकारोक्तेः। एवं "मृते पितरि पुत्रेण क्रिया कार्या विधानतः" इत्यादि**शंखादा**वेकत्वं साक्षात्कर्तृ-त्वाभिप्रायमेव। अधिकारस्तु फलस्वाम्याख्यः सर्वेषामपि अविभक्तानां स्वत एव साधारण्येन
५ विभक्तानां च स्वस्वांशप्रदानसंपादितसाधारण्यकेन च द्रव्येण साक्षादेकेन कृतेऽपि सपिंडी-करणांतकर्मणि अनुमतिविधानेन कर्तृत्वात्। अन्यथा साधारणस्यैकेन विनियोक्तुमशक्यत्वात्। यत्तु **मिश्रै**रेकस्य कर्तृत्वेऽपि सर्वेषामधिकारोऽस्त्वित्याशंक्य न ह्यन्यकर्तृके प्रयोगेऽन्यस्य कर्तृता संभवतीत्युक्तं तत्कर्तृत्वाधिकारविवेकज्ञाननिबंधनम्। यद्यप्यन्येषां ज्येष्ठाधिकरणबोधकं संगच्छते। केचित्तु **शंखो**क्तावप्युपल इति पाठः। तथापाठेऽपि पाषाणमये देशे इत्यर्थ इत्याहुः।
१० व्याख्यातृसंमतं तु **वा** चार्थे इत्येक एव पक्ष इति शंकानिरासद्वारा विशेषमाह। **न चेति**। न हीत्यर्थः। हि यतः। असंभवात्स्मृत्यंतरविरोधाद्बहुवचनस्य सर्वाधिकारिसामान्यपरतयोपपत्तेश्चेति तदर्थः। **ज्येष्ठेनैवेति**। अत्र किंचित् मूलाद्यनुक्तमाकांक्षितं सविशदमुच्यते। विभक्तानामवि-भक्तानां वौरसपुत्राणां बहुत्वे सर्वसान्निध्ये च सर्वज्येष्ठ एव पुत्रोऽधिकारी। तस्य स्वरूपतोऽभावे-ऽसांनिध्ये पातित्यानाधिकारित्वे वा तस्मादवरो वा तादृश इति व्यवस्थितविकल्पः। सर्वज्येष्ठ-
१५ कनिष्ठानामपि बहुत्वे पूर्ववदेव। तथौरसपौत्रिकेयादीनां समवाये पूर्वपूर्वपठित एव तदभावेऽवरोऽवरः। तथा च **सुमंतुः** "मातुः पितुश्च कुर्वीत मृतयोरौरसः सुतः" कर्त्तव्यप्रयोगोपसंहारासामर्थ्यं तत्र कारणमुक्तं। तदपि व्यधिकरणम्। अनुमतिद्वारककर्तृत्वस्य शंकितत्वात्साक्षात्कर्तृत्वासामर्थ्येऽपि च तत्रान्येषां सामर्थ्यस्याविघ्नत्वात्। न ह्यत्रासामर्थ्ये नान्यत्रासामर्थ्यं भवति हौत्रासामर्थ्ये न त्वाध्व-र्यवे सपिंडीकरणोत्तरभाविनि तु आष्टिकादीन्यविभक्तानामेकस्यैव विभक्तानां तु पृथक् पृथक्

२० "भ्रातॄणामविभक्तानामेको धर्मः प्रवर्तते। विभागे सति धर्मोऽपि भवेत्तेषां पृथक् पृथक्॥" इति **नारदात्**। एतेन "सपिंडोत्तरभविष्यविभक्तानामनियमः"। इति **शूलपाण्युक्त**मपास्तम् यदपि "सपिंडीकरणांतानि यानि श्राद्धानि षोडश। पृथक् नैव सुताः कुर्युः पृथक् द्रव्या अपि क्वचित्"॥ इति **लघुहारीतोक्तिः**। पृथक् द्रव्याः। अपिशब्दादपृथक्द्रव्याश्च सपिंडांतानि पृथक् नैव कुर्युः। तदग्रिमाणि तु विभक्तानां पृथक् अविभक्तानां तु पृथगपृथग्वेति वचनव्यक्त्यंगीकारेण तत्र मान-
२५ त्वेन तेनोक्ता साऽपि वचनव्यक्त्यज्ञाननिबंधना अविभक्तानामन्यवत्सपिंडीकरणांतानि अपृथगेव भवंति विभक्तानां त्वन्यवत्तेष्वपि भेदानुष्ठाने प्राप्ते पृथक् द्रव्या अपि सपिंडांतानि पृथक् नैव कुर्युरन्ये तु पृथक् कुर्युरिति हि तत्र वचनव्यक्तिर्न तु सा पृथक् द्रव्या अपीत्यस्यानर्थक्यापत्तेः।

"एकपाकेन वसतां पितृदेवद्विजार्चनं। एकं भवेद्विभक्तानां तदेव स्याद्गृहे गृहे"॥ इत्यादि-**बृहस्पति**विरोधाच्च।

३० "अर्वाक् संवत्सराज्ज्येष्ठः श्राद्धं कुर्यात्समेत्य च। ऊर्ध्वं सपिंडीकरणात्सर्वे कुर्युः पृथक् पृथक्"॥ इति **व्यासोऽपि** विभक्तानामुत्तरार्धार्थानुवादेन पूर्वार्धार्थविधायकः। अन्यथा समेत्यस्यानर्थक्या-पत्तेरिति दिक्। एवञ्च बहुष्वौरसेषु सर्वेषामधिकारित्वेऽपि साक्षात्कर्तृत्वमेकस्यैवेति **सुमंत्वा**-दितः प्राप्ते तत्कस्येत्यपेक्षायां प्रागुक्तसिद्धांतसिद्धार्थे **मरीचिनोक्तम्**।

"मृते पितरि पुत्रेण क्रिया कार्या विधानतः।

"बहवः स्युर्यदा पुत्राः पितुरेकत्रवासिनः। सर्वेषां तु मतं कृत्वा ज्येष्ठेनैव तु यत्कृतम्"॥

"द्रव्येण चाविभक्तेन सर्वैरेव कृतं भवेदिति"। यदा एकत्रवासिनः अविभक्ता बहवः पुत्राः स्युस्तदा सर्वानुमत्या ज्येष्ठेन यत्कृतं तत्सर्वैरेव कृतं भवेत्। फललाभात्। यदापि विभक्तास्तदापि अविभक्तेन साधारण्येन कृतेन द्रव्येण सर्वेषां तु मतमित्यादीति भिन्नविषयतया योज्यं। संपूर्णस्य ५ अविभक्तमात्रविषयत्वे द्रव्येण चाविभक्तेनेत्यस्यानर्थक्यापत्तेः। द्रव्येण चावीत्येतच्च सपिंडन-पर्यंतक्रियाविषयम्।

"नवश्राद्धं सपिंडत्वं श्राद्धान्यपि च षोडश। एकेनैव तु कार्याणि संविभक्तधनेष्वपि"॥ इत्युक्तेः प्रागुक्तबृहस्पतेश्च। तस्माद्विभक्तानामभुक्तानां वाऽनेकौरसानां समवायेऽपपतितोऽपि विद्यमानज्येष्ठसपिंडनांतं कुर्यात्। तदसंनिधानादौ त्ववरेऽपि पुत्राः षोडशश्राद्धपर्यंतं तावत्कुर्युरेव। १० तस्य नियतकालकर्तव्यत्वात्प्रतिनिध्यनुकल्पयोश्च मुख्याभावोपाधिकत्वाविशेषात्तुल्यन्यायत्वेऽपि मुख्यद्रव्येणान्यस्य कर्तृत्वं स्वत्वाभावादसंभविस्वद्रव्येण कर्तृत्वे तस्मैवाधिकारापत्तिरित्येवंरूपस्य प्रोषिते मृते वा यजमाने याजमाने याजमानेषु प्रतिनिध्यभावन्यायस्य द्रव्याधिकारसाधारण्या-त्पत्न्यामिव पुत्रेष्वप्यप्रवृत्तेः कर्तृत्वांशे तेषामनुकल्पत्वस्य न्यायत्वाद्वक्ष्यमाणपुत्रातिरिक्ताधिकारिणां यद्यपि न्यायात्तन्नैव प्राप्नोति वचनं च "पिंडदोंऽशहरश्चे" त्यादिपूर्वपूर्वस्वरूपाभावोपाधिकमेव १५ तेषामंशग्रहण इव पिंडदानेऽपि कर्तृत्वं विदधाति तथापि "असगोत्रः सगोत्रो वा" इति वाक्या-रंभसामर्थ्यात्"त्प्रोषितावसिते पुत्र" इति वचनसामर्थ्याच्च पूर्वपूर्वसान्निध्यशक्त्याद्यावपि तेषां तत्र कर्तृत्वमवसीयते। यदि स्वरूपेण पूर्वपूर्वभाव एवोत्तरोत्तरस्य कर्तृत्वं तदेदं वचनद्वयमनर्थकं प्राप्त-त्वात्तदर्थस्य यदा तु पूर्वपूर्वसंनिधानाद्यभावेऽप्युत्तरोत्तरकर्तृत्वं तदा तत्सन्निधानादिना तदन्येनाद्य-दिनकृत्ये कृते पश्चात्प्रत्यासन्नसन्निधौ "प्रवृत्तेऽपीति" चेदिति न्यायेनोत्तरकर्मणि तस्यैव कर्तृत्वे २० प्राप्ते पुत्रासंनिधौ च सपिंडनेऽपि तत्पूर्वक्रियास्विव भ्रात्रादीनामप्यधिकारे प्राप्ते इदं वचनद्वयम-नर्थवद्भवति। सपिंडनं तु पुत्राः साग्निकाश्चेत्तदा एकादशाहे द्वादशाहे वा कुर्युरेव पिंडः पितृयज्ञार्थ तेषां तत्काले तस्यानर्थत्वात्। निराग्निकैस्तु चरमकालं यावज्ज्येष्ठप्रतीक्षा कार्या। तन्मध्ये ज्ञाते ज्येष्ठेनैव कार्यम्। नोचेच्चरमकाले कनिष्ठैरपि कार्यम्। पूर्वोक्तादेव न्यायात् पुत्रभिन्नानां विशेषो वक्ष्यते। सहगमने तु लौगाक्षिः "मृताहनि समासेन पिंडनिर्वपणं पृथक्। नवश्राद्धं च दम्प- २५ त्योरन्वारोहण एव तु"॥ इति समासेन पाकादितंत्रेण पृथक् पिंडनिर्वपणं कुर्यान्नवश्राद्धं च तथा कुर्यादित्यर्थः। दर्शे वर्गद्वयवदिति भावः। अत एव च संगतिः। तथा च प्रचेताः

"एकचित्यां समारूढौ म्रियेते दंपती यदि। तंत्रेण श्रवणं कुर्यात्पृथक्पिंडं समापयेत्"॥ इति।

गार्ग्यः

"एकचित्यां समारूढौ दंपती निधनं गतौ। पृथक् श्राद्धं तयोः कुर्यादोदनं च पृथक् पृथक्"॥इति। ३०

ओदनं पिंडः। स्पष्टार्थमिदम्। भृगुः

"वाह्यन्वारोहणं कुर्य्याद्भर्तुश्चित्यां पतिव्रता। तां मृताहनि संप्राप्ते पृथक् पिंडे नियोजयेत्॥

"प्रत्यब्दं च नवश्राद्धं युगपत्तु समापयेत् ।" इति । मृताहनीति प्रथमाब्दिकविषयम् । अत एव प्रत्यब्दमिति सफलं युगेत्यनेन समास उक्तः । आद्यंतग्रहणान्मध्येऽपि तथेति सूचितम् ।

**वृद्धपराशरः**

"आरुह्य भर्तुश्चितिमंगना या प्राप्नोति मृत्युं खलु सत्त्वयुक्ता ।
एकादशाहे तु तयोर्विधेयम् श्राद्धं पृथक् स्वर्गनियद्भिरद्भिः ॥ ५
एकलमिति मतिप्रहीना एकदशाहादिषु येन तार्पोः ।
ते स्वर्गमार्गं विनिहत्य कुर्युस्त्रीसत्वघातान्नरकाधिवासम् ॥

"भर्ता सह मृता या तु नाकलोकमभीत्सती । सा पृथक् पिंडा सौभाग्यश्रीरस्तु सततं तयोः ॥

"पृथगेव हि कर्तव्यं श्राद्धमेकादशाहिकम् । यानि श्राद्धानि सर्वाणि तान्युक्तानि पृथक् पृथक्"॥

१० इति **पराशरमाधवे** स्पष्टमिदं एतेन **श्राद्धनिर्णयामृतपृथ्वीचंद्रोदयादि**ष्वन्यथोक्तमपास्तम् । इदं चैकमातृविषयेऽपुत्रभिन्नमातृकविषये च । सपुत्रभिन्नमातृकाविषये तु सहगमने सर्वज्येष्ठेन पितुरौर्ध्वदेहिककरणेऽपि तस्याः कनिष्ठोऽपि औरस एव सर्वं कुर्यात्पृथक् न सपत्नीपुत्रो ज्येष्ठ एव तत्र तन्निरूपितमुख्यपुत्रत्वाभावाभावात् । दाहस्त्वेकस्यामेव चितौ । सपिंडनं तु सर्वज्येष्ठेन पितुरेव पितामहादिभिः कनिष्ठेन तु पितृसपिंडनदिने दिनांतरेव तदपि पितृसपिंडनोत्तरमेव संभवति पितृत्व-

१५ यन्मेनसंयोजने प्रेतसंयोगात् । स्पष्टं चेदं **पृथ्वीचंद्रोदये त्रिस्थलीसेतौ श्राद्धमयूखे** च । एतेन नवश्राद्धमेव पृथगिति परिसंख्यया ऽन्यत्र पृथगुक्तेष्वपि वार्षिकतीर्थसपिंडने चाष्टक्यादिषु समास एवेति **मदनपारिजातनिर्णयामृता**ष्वनुरोधेन समासविधिवाश्रकाज्ज्येष्ठपुत्रस्य कर्तृत्वे सपत्नमातुरन्वारोहणं तत्पुत्रे सत्यपि तत्पूर्विकादिकमविभक्तः सपत्नीपुत्र एव ज्येष्ठः कुर्यात्तथौरस इति **निर्णयसिंधू**क्तमपास्तम् । औरसाभावेन पुत्रिकापुत्रादयो मूलोक्तप्रकारेण कुर्युः । तथा च

२० "औरसो धर्मपत्नीज" इत्याद्युक्तं व्याख्यातं च । तथा ब्राह्मणक्षत्रियजयोक्षत्रियावैश्यापुत्रयोरप्यौरसत्वमित्यादि प्रागुक्तम् । अत एव **ब्राह्मे** "पुत्राः कुर्वन्निति" "क्षत्रविट्शूद्रयोनयः" इति क्षत्रियावैश्यापुत्रयोरपि पितृक्रियाकारित्वमित्युक्तम् । शूद्रापुत्रस्य तु द्वादशविधम् । पुत्राभावे तच्चानुपदमेव वक्ष्यते । औरसाभावे पुत्रिकापुत्रः । स च द्विविध इत्युक्तम् । तदभावे क्षेत्रजः । सोऽपि द्विविध इत्युक्तम् । तदभावे गूढजः । तत्स्वरूपमुक्तम् । तदभावे कानीनः । तत्स्वरू-

२५ पमप्युक्तम् । तदभावे पौनर्भवः । तत्स्वरूपमप्युक्तम् । तदभावे दत्तकः । तत्स्वरूपमप्युक्तं प्राक् । यत्तु तत्स्वरूपबोधक**मानवे** "आपदीत्यस्य ग्रहीतुः पुत्राभावे इत्यर्थ" इति प्राच्यैरुक्तम्

"आज्यं विना यथा तैलं सद्भिः प्रतिनिधिः स्मृतः । तथैकादश पुत्राः स्युः पुत्रिकौरसयोर्विना"

इति **बृहस्पत्युक्तेः**

"क्षेत्रजादीन्सुतानेतानेकादश यथोदिताः । पुत्रप्रतिनिधीन्प्राहुः क्रियालोपान्मनीषिणः" ॥ इति

३० क्रियालोपहेतुकौरसप्रतिनिधित्वोक्तेश्चेतरवद्दत्तकस्याप्यौरसपुत्राभावविषयत्वसिद्धेरानर्थक्यात्समभिव्याहारविरोधाच्चोपेक्ष्यम् । दत्तकाभावे क्रीतः । तदभावे कृत्रिमः । तदभावे स्वयंदत्तः । एतेषां स्वरूपाण्युक्तानि । तदभावे सहोढजः । ननु एतत्स्वरूपं **मानवे** उक्तम् ।

"या गर्भिणी संस्क्रियत" इति तदनुपपन्नं। "कन्यामुपपद्येतेति" कन्याया एव विवाहविधाना-द्गर्भिणीसंस्कारासंभवादिति चेदत्र केचित् संबंधेन कन्यात्वहानिः किंतु मंत्रवत्संस्कारेणैव

"पाणिग्रहणिका मंत्रा नियतं दारलक्षणम्। तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे"॥ इति

**मनोः** (अ० ८।२२६)। अत एव तेन व्यवायपूर्वकत्वेनोक्तयोरपि गांधर्वपैशाचविवाहयो-रस्त्येव पाणिग्रहणहोमादिः संस्कारः। तथा च **देवलः** ५

"गांधर्वादिविवाहेषु पुनर्वैवाहिको विधिः। कर्त्तव्यश्च त्रिभिर्वर्णैः समयेनाग्निसाक्षिकम्"॥ इति। तत्रोपगंतैव संस्कर्त्ता गर्भिण्यास्त्वन्य इत्यन्यदेतत्। अत एव च युक्तागमनांगविवाहवत्तत्र धर्ममात्रं होमादि न तु भार्यात्वलक्षणलौकिकातिशयजनकं संस्कारकर्मविवाह एव कन्यामुपयच्छेतेति विधिर्द्वितीयनिर्देशादित्यपि नांगीकार्यम्। क्षतयोनित्वेऽपि संस्काराभावेन कन्यात्वानपगमादत्रापि तद्विधिप्रवृत्तौ बाधकाभावात्प्रथमव्यवायेन स्त्रीपुंसयोः कन्यापत्यन्यगमननिषेधातिक्रमनिमित्तप्रत्य- १० वायसंभवेऽपि अग्रे गांधर्वादौ तस्यैव पुंसो गर्भिणीविवाहेऽन्यस्य स्त्रियाश्चोभयत्र तत्परिहारार्थं गांधर्व-गर्भिणीविवाहादेरपि भार्यापत्नीभावसंपादकत्वेन संस्कारकर्मत्वाच्च। अत एव गांधर्वाद्यूढायां गर्भिण्यां च जातः पुत्रो वोढुरेवं तस्यां भार्यात्वेन स्वत्वात् नियुक्तायास्तु संस्कृतात्वेनाऽकन्यात्वा-द्देवरादिपरिणयनं धर्ममात्रमेव। यद्यपि च नियोगो वाग्दत्ताविषयस्तथापि वाग्दानसंप्रदानस्य पतित्वोक्तेर्नियुक्ताजस्य क्षेत्रपुत्रत्वोक्तेश्च संपूर्णभार्यात्वाभावेऽपि वाग्दानमात्रेणैव ज्येष्ठस्वत्वं कन्या- १५ त्वापगमश्च बोध्यः। कन्योक्तिस्तु संपूर्णसंस्काराभावाशयेन संपूर्णसंस्कृताया नियोगं निषिध्यमानाया. "यस्यी म्रियेत"इत्याद्युक्तेः। अन्यथा ( **मनुः** अ. ८।२२६ )

"पाणिग्रहणिका मंत्राः कन्यास्वेव प्रतिष्ठिताः। नाकन्यासु क्वचिन्नॄणां लुप्तधर्मक्रिया हि ता"॥ इति निषेधाप्रवृत्तेस्तद्विवाहविधिवैयर्थ्यप्रसंगात्। अत एवाप्राप्तत्वेनानेकगुणोपादानेन च विधेय-त्वात् भिन्नेऽस्मिन्विवाहे प्रजार्थविवाहाच्चोदकप्राप्ताऽन्यपूर्वा पर्युदासापवादत्वेन "अपुत्रां गुर्वनुज्ञात" २० इत्यादि व्याख्यातं व्याख्यात्रा। अनन्यपूर्वाशब्दश्च कन्याशब्दसमानार्थत्वाद्दत्तापर एव। न त्वन्यानुपभुक्तापरोपि गर्भिणीसंस्कारानुपपत्तिप्रसंगात्। न चात्र संस्कारो विधीयते। येन नियुक्तावद्वाचनिकं धर्ममात्रमित्युच्यते।

"बलादपहृता कन्या मंत्रैर्यदि न संस्कृता। अन्यस्मै विधिवद्देया यथा कन्या तथैव सा"॥ इत्यनेनापि वाचोयुक्तिविशेषेणापहरणेन कन्यात्वनिवृत्तिशंका पिशाचीनिरासमात्रं क्रियते। न २५ त्वकन्याया एव तस्याः कन्यातुल्यत्वेनान्यस्मै दानं विधीयते। वचनभारकल्पनापत्तेः। अकन्यात्वे बीजाभावाच्च। अत एव च कानीनः कर्ण इत्यपि युज्यते। अक्षतयोनिवचनत्वे कन्यायाः पुत्र-वाक्यात् वर्ण्यते च शकुंतलोपाख्यानादावितिहासपुराणेषु क्षतयोनिनामपि विवाहः। एवं च

"सर्ववर्णेषु तुल्यासु पत्नीष्वक्षतयोनिषु। आनुलोम्येन संभूता जात्या ज्ञेयास्त एव ते"॥ इति **मानवे** (१०।५) क्षतयोनिषु वोढुरप्युत्पन्नानां तज्जातीयत्वनिवृत्त्यर्थमक्षतयोनिग्रहणं ३० पृथगुक्तम्। अन्यथा तासां विवाहसंस्काराभावेन मुख्यपत्नीत्वाभावात् तत्तद्ग्रहणेनैव तत्फल-लाभात्तदानर्थक्यापत्तेः। न च तासां विवाहः। सत्वेऽपि कर्मानधिकाराद्यज्ञसंयोगानिमित्तपत्नीत्वं नास्त्येवेति वाच्यम्। विवाहरूपयज्ञसंयोगादेव तदुपपत्तेः। तस्यापि पूषवरुणादियागरूपत्वात् "पाणिग्रहणिका मंत्रा" इत्यादिनिषेधोऽपि संस्कृताविषय एव न क्षतयोनिविषयः। मंत्रलिंगस्य हेतु-

त्वोक्तेः। मंत्राणां च गार्हपत्याय "भार्यापतिभावाय ते वा मह्यमेव त्वां अददुर्दत्तवंतो न त्वन्यस्मै अहमेव त्वामिमां पितृकुलात्प्रमुंचामि न त्वन्येन त्वं तथा कृता अर्यमादयो देवा इदानीमिमामितः प्रमुंचंतु न तु पूर्वं प्रमुक्तवंतः तानावामिह विवहावहै न तु पूर्वं व्यूढावि"त्यादिप्रकारेण संस्कृतापरत्वात् । न त्वेवमक्षतयोनिपरत्वे किंचिन्मंत्रलिंगं पश्यामः । सम्भोगमात्रेण तत्स्वत्वापनयनरूपपितृकुलप्रमोका-
५ संभवात् कानीनपैत्रिकेययोर्मातामहपुत्राद्यनुपपत्तिप्रसंगात् । यत्त्ववैवाहिकत्वान्मंत्रार्थमजाननैस्साहसिकैर्मिश्रकुल्लूकभट्टादिभिः "कन्या अग्निमयक्षतेति" (आश्व. गृ. १।७।१३) मंत्रलिंगमुदाहृतं तदपक्षतेति बहुवचनांतभूतनिर्देशसमभिव्याहारादिवृत्तिपाठाच्च बहुवचनांतादेव कन्यापरकन्याशब्देन संस्क्रियमाणकन्याप्रकाशनाभावादसंस्कृताक्षतयोनिपरत्वेन तस्य संदिग्धत्वादुपेक्ष्यम् । अत एव "अर्यमण"मित्यादिमंत्राणां पत्न्या होतृत्वेऽपि पतिप्रयोज्यत्वमुक्तं वृत्तिकृता। तस्मात्पुरुषसंयोगाया
१० अपि संस्काराभावेन कन्यात्वान...ज्यत एव गांधर्वादिवद्गर्भिण्या अपि विवाहः केवलं निषेधातिक्रमपूर्वकत्वात्कन्यागमननिषेधाप्रवृत्तिसंपादनेन च केवलदृष्टार्थत्वात्तद्वदेव निंद्यः । अत एव गांधर्वादीनां मैथुनमात्रं विहितत्वलक्षणमैथुन्यत्वं तज्जातपुत्राणां च संतानावर्धनत्वमुक्तं **स्मृतिषु** पूर्वोपगंतुर्वोढुश्चान्यत्वेन निंद्यतमत्वाच्च विवाहेषु गर्भिणीविवाहस्यापाठ इत्याहुः । **मेधातिथ्यादयस्तु** कन्याकुमारीशब्दौ प्रथमवयोवचनावनुपभुक्तपूर्वस्त्रीवचनौ च **कोशा**त्प्रयोगाच्च न त्वसंस्कृतमात्र-
१५ वचनौ तदभावादेशजीविनी नाम संस्कृतानां गमने कन्यागमनदोषापत्तेश्च । विवाहप्रकरणे तु अनुपभुक्तवचनावेव लोकेऽपि तत्प्रसंगे अज्ञानात् क्षतयोनिं परिणेतुकामस्यान्यैर्नैषा कुमारी नष्टमस्यां कौमारमित्यादिबोधनादिव्यवहारस्य तत्विषयत्वात् अन्यत्रापि प्राचुर्येण तत्रैव प्रयोगाच्च क्षतयोनेरपि विवाहे च गर्भाधानादिसंस्कारांगमंत्राणां "विष्णुर्योनिं कल्पयात्वि"त्यादीनामसमवेतार्थत्वापत्तिर्मैथुनक्षमत्वरूपस्य योनिकल्पना स्यादेव। वृत्तत्वेन प्रार्थनाऽसंभवात्। न च गांधर्वादिभिन्नोढा-
२० विषयत्वं तेषां युक्तम् । अविशेषश्रवणात् । तथा च "कन्यामुपयच्छेते"त्यक्षतयोनेरेव विवाहविधानाद्गांधर्वलक्षणार्थे "इच्छयाऽन्योन्यसंयोगः कन्यायाश्च वरस्य चेति" **मानवे** संयोग एकत्रदेशे संगतयोरन्योन्येच्छया "त्वं मे भार्या भवेति" समयरूपो द्रष्टव्यः। पैशाचलक्षणार्थे च "सुप्तां मत्तां प्रमत्तां वा रहो यत्रोपगच्छति" इत्यत्रोपगच्छतिरालिंगनोपगूहनचुंबनाद्युपगमनार्थव्यापारो बोध्यः । अत एवा**श्वलायन**सूत्रमूलस्मृत्यादौ मिथः समयछलापहरणमात्रं तयोर्लक्षणमुक्तम् । एवं च
२५ विवाहविधौ कन्याशब्दस्याक्षतयोनिवचनत्वेन गर्भिण्यास्तदप्राप्तेः "या गर्भिणी" इत्यत्र संस्कारस्यानुवादप्रतीतावप्युपपत्त्या विधिरेव बोध्यः । स च संस्कारः कन्यासंस्कारवत् न भार्यापत्तिभावसंपादकः प्रमाणाभावात् । किं तु तद्धर्मकं धर्ममात्रं नियुक्तसंस्कारवत्। तस्य च फलं तस्याः कन्यात्वपरभार्यात्वविधिबाधत्वाभावात्तद्गमने द्वितीयोपगंतुः कन्यादिगमननिमित्तदोषाभावेऽपि स्वभार्यात्वस्याप्यभावात् "स्वदारनिरतः सदेति" नियमातिक्रमनिमित्तप्रसक्तदोषपरिहारे भार्यात्वासंपा-
३० दनेऽपि तद्वदेवान्यथानर्थक्यापत्तेः। वोढुरित्यनेनापि न विवाहप्रत्यभिज्ञातस्य स्वीकर्तृमात्रवाचित्वात् पूर्वोक्तरीत्या गर्भिण्या विवाहाभावात् "तं कानीनं वदेदि"त्यत्राप्येवमेव यद्यनूढा तदा मातामहस्य यद्यूढा तदा वोढुरिति **मिताक्षरा**पि। यद्युपगंत्रे दीयते तदा तस्य नो चेन्मातामहस्येत्येवं व्याख्येया विवाहासंभवात् तत्रोपगंतैव स्वीकर्त्ता गर्भिण्यास्त्वन्य इति विशेषः । एवं च

"सा चेदक्षतयोनिः स्याद्गतप्रत्यागतापि वा । पौनर्भवेन भर्त्रा सा पुनः संस्कारमर्हति" ॥

इति ( ९।१७६ ) **मानवे**ऽक्षतयोनेः पुनर्भ्वाः संस्कारार्हत्वोक्तिः संगच्छते । अन्यथा तस्याः संस्कृतत्वेन तदनुपपत्यापत्तेः । गतप्रत्यागतायामप्यक्षतयोनित्वमपेक्षितमेव । पूर्वा तु पत्या त्यक्ता विधवा वा । इयं तु स्वयमेव जीवंतं पूर्वपतिं त्यक्त्वा आगतेति भेदः । अत एव च गर्भिण्यादिपरिणयस्य विवाहेष्वपाठः । यत्तु सर्ववर्णेष्वित्यादिवर्णलक्षणार्थं **मानवे**ऽक्षतयोनिग्रहणं तल्लोकेऽसंस्कृतास्वपि लक्षणया रजेकस्य पत्नीत्यादिपत्नीशब्दप्रयोगदर्शनादत्र च लाक्षणिकग्रहणार्थे ५ प्रमाणाभावेऽपि मंदमत्याशंकानिरासार्थमिति प्रपंचेनोक्तं **मेधातिथिना** तद्व्याख्यानावसरे "पाणिग्रहणिका मंत्रा" इत्याद्यपि अक्षतयोनिपरमेव "कन्यामुपयच्छेतेति" नियमविधेः प्रागुक्तयुक्त्या तत्परत्वात् तत्सिद्धार्थानुवादत्वाच्चैतस्य मंत्रगतानां च तत्वात्त्वमिमामित्यादीनां संनिहितवाचिपदानां विधिपरतंत्रत्वेन विधिविषयीभूततत्परत्वात् नियमादिगर्भत्वे च प्रमाणाभावेन मह्यं त्वादुदित्यादीनामौदासीन्यात् यथाकथंचिद्व्यानः । अस्मभ्यमुरुविश्रया ते विवृणोति विवहावहै ततः पश्चादेव १० प्रजां जनयावहै प्रजोत्पत्त्यनुकूलं व्यवायलक्षणव्यापारं करवावहै न तु पूर्वकृतवंतावित्यादिप्रकारेणाक्षतयोनिपरत्वस्यापि सुदर्शनत्वात् । अत एव **मेधातिथिना** कन्याशब्दस्याक्षतयोनिवचनत्वात् "कन्या अग्निमयक्षतेति" मंत्रे पुरा कल्पे कन्यानां विवाहयागे कर्तृत्वनिर्देशान्मंत्रबलादेव क्षतयोनीनां विवाह इत्युक्त्वा तत्रापरितोषात् परमार्थतस्तु कन्यामुपयच्छतेति विधिबलादेव तासां विवाहः । मंत्राः पुनर्विहितमेवार्थमभिवदंति । न पुनर्मंत्रेषु कन्याशब्दश्रवणात्कन्यानां विवाह इत्युक्तः । १५ प्राच्यैस्तु मीमांसाऽनध्ययनात्तद्ग्रन्थतात्पर्यार्थमजानानैः संस्क्रियमाणकन्याप्रकाशकत्वेनैव "कन्या अग्निमयक्षतेति" तनोदाहृतमिति भ्रमेण कन्याविवाहे तस्यासमवेतार्थत्वापत्तिरित्युक्तम् । तदुपेक्ष्यमेव । कानीनः कर्ण इत्यादौ तु लक्षणयाऽसंस्कृतापरत्वं कन्याशब्दस्येत्याहुः । अन्ये तु कन्याशब्दस्यानन्यपूर्वाशब्दपर्यायत्वात्सार्वजनीनप्रयोगाच्चादानाक्षयभोगाभावः प्रवृत्तिनिमित्तं एवं चान्यतरसत्वे तदभावेन कन्यात्वाभावान्मुख्यविवाहाप्राप्तेः **स्मृतिसूक्तः** पुनर्भूसंस्कार उपभुक्तासंस्कारश्चेति द्वयमपि वाचनिकं धर्ममात्रं फलं च तस्य पूर्वोक्तमेवात एव चोभयोरपि विवाहेष्वपाठः । २०

तथा च **मिताक्षरायाम्** ( पृ. १२ पं. १८ ) "दानेनोपभोगेन पुरुषांतरापरिगृहीता"-मित्यनन्यपूर्वापदं व्याख्यातम् । अन्यपूर्वा न परिणेयेत्युक्तम् । का साऽन्यपूर्वेत्यपेक्षायां तत्स्वरूपप्रतिपादकत्वेन "अक्षता च क्षता चैवे"त्यादि व्याख्यातम् । अन्यत्तु पूर्वोक्तमेवेत्याहुः ।

अत्र प्रसंगात्पुनर्भूविषये किंचिदुच्यते । यत्रैका कन्या पित्रादिदत्ता बलाद्हृता वा २५ स्वगृह्योक्तविधिना सप्तमपदपर्यंतं संस्कृता पुनरन्येन तत्र द्वितीयेन समं संभोगे व्यभिचारप्रायश्चित्तमपि अन्यथा तु पुनर्विवाहमात्रं पित्राद्यनुमत्या बलादिना वा तथैव संस्क्रियते तत्र सा व्यभिचारवत्किंचित्प्रायश्चित्तं कृत्वा पूर्वपत्युः स्वीकारार्हा न वेति विचारः । तत्र केचित्तावन्नेति मन्यंते । अयं च तन्मतपरिष्कारः । पुनर्विवाहं विना तादियं पूर्वपतिना स्वीकर्तुमशक्या "सा चेदक्षतेति" **मानवात्** । पूर्वपतिस्वीकारविचारगोचरापन्नायाश्चास्यागतप्रत्यागतात्वात् पूर्वस्मिन् जीवत्येव ३० क्षतयोनिरक्षतयोनिर्वा । यत्तु **सर्वज्ञस्य** गतप्रत्यागतायामप्यक्षतयोनिपदानुषंगकरणं तन्निर्बीजम् । अक्षतयोनिकल्पितोक्तायाः क्षतयोनित्वस्यैव प्रतीतेर्विरुद्धं चात **एवापरार्ककुल्लूकभट्टा**दिभिरन्य-

१ अ-नवादयम् ।

संभोगपर्यंतं व्याख्याता। यत्तु **मेधातिथे**रक्षतयोनिपदानुषंगकरणं तत्र बीजमुक्तम्। अग्रेऽपि च किंचिद्वक्ष्यते। **वसिष्ठेनापि** गतप्रत्यागतापुनर्भूलक्षणेऽन्यैः सहाचरित्वेति सामान्येनैवोक्तम् पौनर्भवत्वञ्च यद्यपि न पूर्वपत्युः पुनर्भूत्वहेतुभूतविवाहकर्तृतया संभवति लोकव्यवहारबलात्कौमारपतिभिन्नविवाहेनैव पुनर्भूत्वापत्तेर्द्वितीयस्यैव तथात्वात् तथापि द्वितीयविवाहेनैव तथाभूतायाः
५ संबंधमात्रेण तत्पूर्वपत्त्युरपि संभवेत्येव। एतेषां तु

"कन्यैवाक्षतयोनिर्या पाणिग्रहणदूषिता। पुनर्भूः प्रथमा प्रोक्ता पुनःसंस्कारकर्मणेति" ॥

सामान्यवचनात्पूर्वपतिकृतद्वितीयविवाहस्यापि पुनर्भूत्वहेतुत्वस्याभिमतत्वात्पुनर्भूत्वहेतुभूतविवाहकर्तृतयापि पौनर्भवत्वं पूर्वपत्युः संभवति। यद्यपि **चापरार्ककुल्लूकभट्टा**दिव्याख्यानपर्यालोचनया

"कौमारं पतिमुत्सृज्य या त्वन्यं पुरुषं श्रिता। पुनः पत्युर्गृहं यायात्सा द्वितीया प्रकीर्तिता" ॥

१० इति **नारदोक्ता**[1] स्वैरिणी गतप्रत्यागता न तु पुनर्भूस्तथापि **मानव**पौनर्भवपद**वसिष्ठ**वचनस्वरसानुसारि**सर्वज्ञ**व्याख्यानस्यैव तैः पुरस्कृतत्वादक्षतयोनेरेव च विचारविषयत्वांगीकारादेतदुक्तम्। तस्मात्पुनर्विवाहं विना तादृदियं पूर्वपत्युः स्वीकारानर्हा। पुनर्विवाहश्च कलौ निषिद्धः "ऊढायाः पुनरुद्वाह"मिति। यद्यपि चेदं निबद्धव्यवहारात्पुनर्भूविवाहनिषेधकं तथापि पूर्वपतिक्रियमाणपुनर्विवाहस्यापि संबंधमात्रेण सामान्यवचनबलात्पुनर्भूत्वापादकत्वेनैव च पूर्ववत्पुनर्भूविवाहत्वं द्रष्टव्यम्।
१५ निषेधस्य प्रापकवचनसापेक्षत्वात्।

न च युगांतरे पुनर्भूविवाहस्यानिषिद्धत्वेन गांधर्वादिरूपत्वादानानपेक्षस्यैवोत्तरभार्यात्वापादकत्वसंभवाद्युगपच्चोभयभार्यात्वासंभवात् द्वितीयपुरुषविवाहेन तद्भार्यात्वोत्पादकेन पूर्वभार्यात्वनाशस्यावश्यांगीकार्यत्वान्नष्टभार्यात्वसंधानार्थं युगांतरे गतप्रत्यागतायाः पूर्वपतिना पुनर्विवाहोऽपेक्षितः पुनरुपनयनमिव नष्टव्रतसंधानार्थं पापविशेषे ब्रह्मचारिणः। कलौ तु तस्य निषिद्धत्वेन
२० सपिंडादिविवाहवदुत्तरभार्यात्वानापादकत्वात्पूर्वभार्यात्वस्यानिवृत्तेर्न तत्संधानार्थं पुनर्विवाहापेक्षानिषेधातिक्रमनिमित्तप्रायश्चित्तमात्रानुष्ठानोत्तरं तु पूर्वपतिना तत्स्वीकारे न कोपि विरोध इति वाच्यम्। निषिद्धेनापि पुनर्भूविवाहेन रोगिणीसंचारिरोगदोषान्वितकुलजाविवाहेनेव भार्यात्वोत्पत्तौ बाधकाभावात्। तत्र प्रजानुत्पत्तिरोगसंचारादिरूपदृष्टविरोधपरिहारवदत्र "इत्येताः **कश्यप**प्रोक्ता दहंति कुलमग्निवत्" इत्यादिवचनबोधितकुलक्षयादिपरिहारस्यैव फलत्वात्। अत एव
२५ **मेधातिथिना** ब्राह्मणादीनां निषिद्धेषु गांधर्वादिविवाहेषु विवाहकार्यसिद्धिरंगीकृता। किं च विवाहप्रकरणाधीतोऽन्यपूर्वापर्युदासस्तदंगमपि विषयविशेषे पुनर्भूविवाहविधिना बाधित एव। युगविशेषपुरस्कारतन्निषेधस्तु विवाहप्रकरणाधीनतो न तदंगमिति न तदतिक्रमे भार्यात्वानुत्पत्तिः। किं तु स्वतंत्रः पुंसः प्रत्यवायः। किं च विवाहप्रकरणाधीनयोः कन्यानन्यपूर्वाशब्दयो**र्मेधातिथि**मतेऽनुपभुक्तपूर्वस्त्रीवचनात्क्षतयोनिपुनर्भ्वामस्तु भार्यात्वानुत्पत्तिः। एतैस्तु अक्षतयोनेरेव
३० विचारगोचरत्वांगीकाराद्दत्तसंस्कारमात्रायामक्षतयोनौ तस्यां भार्यात्वोत्पत्तौ किं बाधकम्। तस्मात्

---

१ अ. १२ श्लो. ४७.

द्वितीयविवाहोत्पन्नोत्तरभार्यात्वापोदितपूर्वभार्यात्वापादनाय पूर्वपतिना समं तद्विवाहस्यावश्य-
कत्वात्तस्य च कलौ निषेधान्नेयं पूर्वपतिस्वीकारार्हा । किं च सर्वधर्मशास्त्रे पुनर्भूतत्पतितदपत्या-
नामसंव्यवहारत्वमात्रं तत्र तत्रोक्तम् । न तु क्वापि प्रायश्चित्तम् । किंचित् तेन तेषां पतितो-
त्पन्नमपत्यवत्प्रायश्चित्तानर्हत्वावगमात्पुनर्भूसंसर्गपरिहाराय स्वस्य पुनर्भूपतित्वपरिहाराय च शास्त्रतो
न सा पूर्वपतिना स्वीकार्येति प्रत्यक्षरव्यधिकरणवाचोयुक्तावपि कथंचित्परिष्कृतेऽस्मिन्केषां- ५
चिन्मतेऽभ्युपेक्ष्य तावद्ब्रूमः । भवत्वियं पुनर्भू गतप्रत्यागता भवतु च तस्या विवाहविना पूर्वपत्यसंग्रा-
ह्यत्वम् । न पुनरयं विवाहः कलौ निषिध्यते । "ऊढायाः पुनरुद्वाहमि"त्यस्य "हृताक्षतायाः कन्यायाः
पुनर्दानं परस्य च" इति **स्मृत्यंतरैक**वाक्यतया "सा चेदक्षतयोनिः स्यादि"त्येतद्वाक्यविहित-
कौमारपतिभिन्नकर्तृकद्वितीयविवाहनिषेधकत्वादेकमूलकल्पनालाघवात् । अत एव पूर्वपतिकर्तृक-
द्वितीयविवाहस्य पुनर्भूत्वापादकत्वेऽपि न निषेधविषयता । १०

वस्तुतस्तु न तस्य तथात्वं परिवेत्तृकर्तृके द्वादशादिवर्षप्रतीक्षोत्तरकृतौर्ध्वदैहिकपुनरागत-
कर्तृके च पुनर्विवाहे पुनर्भूव्यवहाराभावेन लोकव्यवहारबलात्पूर्वपतिभिन्नकर्तृकस्यैव विवाहस्य
तथात्वावसायात् पुनःसंस्कारनिमित्तकपुनर्भूलक्षणार्थे "कन्यैवाक्षतयोनिर्वेत्यादि"**नारदीये** सामा-
न्योक्तावपि तत्तुल्यार्थे "सा चेदक्षतयोनिः स्यादिति" **मानवे** सर्वैः कौमारपतिभिन्नस्यैव पौनर्भवत्वेन
व्याख्यानाच्च उपपदाभावादाद्यविवाहपरेणोढाशब्देन समभिव्याहारात्पुनःशब्दाच्च तदव्यवहित- १५
तत्सजातीयविवाहपरात्पुनरुद्वाहशब्दादप्याद्यपरिणेतृभिन्नविवाहस्यैव निषेधोऽवगम्यते । यद्यपि ताव-
त्पुरुषसंप्रयोगमात्रापनोद्यस्य कन्यात्वस्य संस्कारमात्रेणानपगमात्संस्कृताया अपि कन्याशब्दवाच्य-
त्वादनन्यपूर्वाशब्दस्य च तत्पर्यायत्वादनिषिद्धत्वान्निषिद्धत्वेऽपि वा रोगिण्यादिविवाहवदाद्य-
वोढृतदन्यकर्तृकयोर्द्वयोरपि आद्यभिन्नविवाहयोर्भार्यात्वोत्पादकत्वं तथापि भिन्नकर्तृक एव विवाह-
स्तत्कर्तृकाद्यविवाहसजातीयोऽपूर्वभार्यात्वोत्पादकत्वम् । तथापि भिन्नकर्तृक एव विवाहस्तत्कर्तृकाद्य- २०
विवाहसजातीयोऽपूर्वभार्यात्वोत्पादकतयाऽभिमतो न तु तत्कर्तृक एवान्यस्तस्य नष्टतत्संधानार्थत्वात् ।
यदा त्वन्यपूर्वापुनर्भूशब्दयोः पर्यायत्वात्पुनर्भूत्वे च संस्कारपुरुषसंयोगयोर्द्वयोरपि प्रत्येकं हेतुत्वस्य
**मूलकृन्नारदा**दिस्मृतिकारै**र्विज्ञानेश्वरा**दिनिबन्धभिश्च बहुषु स्थलेषूक्तत्वादादानेनोपभोगेन वेत्या-
दिविवरणाच्चानन्यपूर्वाशब्दस्य तत्पर्यायत्वात्संस्कृतान्यानुपभुक्तस्त्रीवचनत्वम् । या तु **मेधातिथेः**
कन्याशब्दस्यानुपभुक्तमात्रस्त्रीवचनत्वोक्तिः पैशाचविवाहलक्षणव्याख्यानावसरे सा तस्यान्यासं- २५
स्कृतामात्रवचनत्वरूपप्राचीनमतनिराकरणमात्राशया । तथा च संस्कृतोपभुक्तपूर्वयोर्द्वयोरपि विवाहः
पर्युदस्त एव । यत्तु "वोढुः कन्यासमुद्भवामिति" "वोढुः स गर्भो भवतीति" च पुरुषसंप्रयोगहेतुक-
पुनर्भूविवाहदर्शनं तत्र यद्यपि कन्यायाः प्रायश्चित्तापनीतदोषाया विवाहसंभवोक्तुं शक्यस्तथापि
"मातामहसुतोमत" इति पक्षे पुत्रस्य मातामहेन संगृहीतत्वात्केवलायास्तत्संभवेऽपि "वोढुः कन्येति"
पक्षे गर्भिण्या इव सपुत्रायास्तदसंभवादेकस्तावदयं परिहारः । नात्र नियुक्ताक्षतपुनर्भूवद्विवाहो ३०
विधीयते । कन्याया एव च विवाहविधानादन्यतोऽपि नासौ प्राप्नोति । अतो अनन्यगत्या तत्सं-
स्कारवोढृत्वोक्तिः स्वीकारमात्रविषया । संस्क्रियते स्वीक्रियते वोढुः स्वीकर्तुरित्यर्थः । तथा च नेदं
विवाहदर्शनमिति । अपरस्तु भवत्विदं विवाहविधानम् । तथापि नासौ भार्यात्वोत्पादको नियुक्ता-
विवाहवत् । किं तु वाचनिकं धर्ममात्रं सहोढकानीनपुत्रपरिग्रहांगं दत्तकपुत्रपरिग्रहांगहोमादि-

वत् । भार्यात्वोत्पादके संस्काररूपविवाह एव च द्वितीयानिर्देशात्कन्यात्वमंगं नान्यत्र स्वभार्यात्वा-
भावान्नियुक्तावच्च तद्गमनविधानाभावात्तद्गमने तु प्रत्यवाय एवेति । यदपि "सा चेदक्षते"त्यादि-
संस्कारहेतुकपुनर्भूविवाहदर्शनं तत्र विवाहविधेः स्पष्टत्वादाद्यपरिहारासंभवात्पौनर्भवपुत्रोत्पादक-
गमनांगभूतमक्षतयोनौ वाचनिकं तत्र विवाहविधेः स्पष्टत्वादाद्यपरिहारासंभवात्पौनर्भवपुत्रोत्पादक-
५ गमनांगभूतमक्षतयोनौ वाचनिकं धर्ममात्रमित्येवतावदेकः परिहारः'। पुनःसंस्कारत्वोक्तिश्च भार्या-
त्वाभावे सहोढादीनां कथं तत्पुत्रत्वमिति वाच्यम् । तदभावेऽपि लौकिकस्वत्वमात्रेण पौत्रिकेय-
कानीनयोरिव मातामहपुत्रत्वस्य तेषां तत्पुत्रत्वस्य संभवात् । अत एव तत्र तत्र तेषु ब्राह्मणाद्य-
भावोक्तिर्दृश्यते । स्वत्वं च कन्यायां गर्भिण्यां "या पत्या वा परित्यक्तेति" प्रागुक्तायां सा चेदिति
तच्छब्दपरामृष्टायामक्षतयोनौ च पित्रादिदानात्स्वयंदानाद्वेति ।

१० अपरस्तु पुनःशब्दात्संस्कारविवाहस्यैव प्रत्यभिज्ञानात्सामान्यभूतानन्यपूर्वापर्युदासापवादेन
विषयविशेषे भार्यात्वोत्पादकतद्विधिरेवायं पर्युदासश्च क्षतयोनिभर्त्रधीनाक्षतयोनिविषयकः भर्तृ-
परित्यागेन तन्नाशेन वा मध्यकायाश्च वचनवशात्पित्रादिभिः परिग्रहेण स्वत्वमापाद्यदानसंभवान्न
ब्राह्मणादिरूपत्वेऽपि तद्विवाहस्य वैगुण्यं गांधर्वादिरूपत्वाद्वा न तदपेक्षेति । यद्वा द्विविधाया
अपि पुनर्भ्वा अयं विवाहो वैधोऽपि श्येनतुल्य एव । अत एव तत्पतितत्पुत्राणां श्राद्धादौ प्रति-
१५ षेधादसंव्यवहार्यत्वं तत्र तत्रावगम्यत इति प्राचीनसरणयः । अत्र च सर्वत्र मूलभूताः प्रामाणिक-
निबंद्धृणामुक्तयो न्यायाश्च सम्यक्परिशीलितधर्मशास्त्रपूर्वमीमांसानामुपासितगुरूणां सुलभा एव ।

मम तु प्रतिभाति संस्कारपुनर्भूविवाहविधिवदुपभोगपुनर्भूविवाहविधिरपि विषयविशेषे
सामान्यभूतानन्यपूर्वापर्युदासापवादरूपो भार्यात्वानुकूल एव । पर्युदासश्चासंजातपुत्रा संजात-
गर्भोपभोगपुनर्भूविषयकः । उपभोगमात्रेण च पुत्रिकावदुपगंतृस्वत्वाभावात्पित्रादिभिर्दानमुपभुक्त-
२० मात्रायाः संभवत्येव शास्त्रातिक्रमपूर्वकत्वात्केवलदृष्टार्थत्वाच्च केवलं निंद्योऽन्यपूर्वाविवाहः । यद्वा-
ऽनन्यपूर्वायामलभ्यमानायामनुकल्पत्वेन द्विविधाया अप्यन्यपूर्वाया विवाहः शास्त्रेण विधीयते ।
यथा केषांचिन्मते पंचमसप्तमपर्यंतं विवाहे निषिद्धेऽर्वाक् तद्विधिरनुकल्पतया तद्वत् ।

अत्रायं निष्कर्षः । संस्कारपुनर्भूविवाहवन्नियुक्ताविवाहवच्चोपभोगपुनर्भूविवाहस्यापि भार्यात्व-
जनकतया धर्ममात्रतया वा धर्म्यत्वे कलौ शिष्टानां तदननुष्ठानस्य मूलभूतं कलिनिषेधवाक्यं
२५ कल्प्यं भवति । "ऊढायाः पुन"रित्यनेन तन्निषेधासंभवात् । द्विविधपुनर्भूविवाहस्यापि श्येनतुल्यत्वे
च कलौ संस्कारपुनर्भूविवाहनिषेधानुपपत्तिः । "कलौ युगे त्विमान्धर्मानि"त्यन्ययुगधर्माणामेवं कलौ
निषेधावगमात् यथाश्रुततृतीयदशमादि**मेधातिथि**ग्रंथालोचनया संस्कारपुनर्भूविवाहस्य भार्यात्वो-
त्पादकतया वैधत्वमेव । उपभोगपुनर्भूविवाहस्य तु वोढुरिति पदस्य स्वीकर्तृवचनत्वाद्वैधत्वमेव न ।
वैधत्वेऽपि वा धर्ममात्रत्वमित्यंगीक्रियमाणेऽपि **विज्ञानयोगि**प्रभृतीनां श्राद्धादिषु पौनर्भवादि-
३० निषेधस्य भ्रमप्रसक्तिपूर्वकत्वांगीकारः "सजातीयेष्वयमि"त्युपसंहारोपपत्तये च तेषामेव जनकद्वारा
सजातीयत्वोक्तिरूपनयनाद्यभावोक्त्यादिकं च सर्वं विरुद्धमापद्येत । **मेधातिथे**रपि वर्णलक्षणा-
व्याप्तिशंकाग्रंथे पौनर्भवग्रहणमसंगतं स्यादिति बहु व्याकुलं भवति । तस्मादुपभोगपुनर्भूविवाह-
विधेरस्पष्टत्वादस्तु तत्रावैधत्वपक्षोऽपि । वैधत्वेऽपि श्येनतुल्यत्वं धर्ममात्रं वा अंत्ये चाचारानुमितः

कलौ तन्निषेधः संस्कारपुनर्भूविवाहस्य तु विधेः स्पष्टत्वात्कलिनिषेधानुपपत्तेश्च वैधत्वेऽपि धर्ममात्रत्वमेवेति दिङ्मात्रमत्र। विस्तरस्त्वन्यत्र बोध्यः। ततश्चानन्यपूर्वाशब्देन संस्कृतोपभुक्तपूर्वयोर्द्वयोरपि विवाहस्य पर्युदस्तत्वात्तदतिक्रमे च रोगिण्यादिवद्दृष्टविरोधाभावेन भार्यात्वानुत्पत्तेरेव स्वीकार्यत्वान्न द्वितीयकर्तृकविवाहस्य भार्यात्वोत्पादकता न च "दहंति कुलमग्निवदि"त्यादिवाक्यबोधितकुलक्षयादिरूपदृष्टविरोधसत्वान्नदभावोऽसिद्ध इति वाच्यम् । तस्यार्थवादमात्रतया भार्यात्वानुत्पत्तेरेव तत्रालंबनत्वात् । अनन्यपूर्वत्वस्य कुलक्षयादिपरिहारमात्रोपयोगित्वे च विवाहस्यावांतरभार्यात्वे परमफले च रतिप्रजादावनुपयोगितया स्वतंत्रपुरुषार्थत्वापत्तेर्वाक्यप्रकरणावगम्यमानविवाहांगत्वभंगापत्तेः । "कांताऽरोगिणी भ्रातृमती"त्यादीनां दृष्टरतिप्रजाद्युपभोगसंभवादट्टष्टभार्यात्वानुपयोगित्वेऽपि फलिसंस्काराणामिव न विवाहांगत्वानुपपत्तिः । संचारिरोगदोषरहितकुलजत्वस्यापि दौःशील्यव्याध्यादिपरिहारार्थतया तस्मादनुशिष्टं पुत्रं लोकामाहुरित्यादिवाक्यावगते समीचीनप्रजारूपे दारसंग्रहफले उपभोगितया विवाहांगत्वोपपत्तेर्दृष्टार्थत्वमेव । अस्ति च कन्याकुलरोगदोषाणां प्रजायामपि संचारे स्वतंत्रप्रमाणम्। "मातुः कुलं द्विपदो हरंति"। "सर्वे संक्रामिणो रोगा वर्जयित्वा हि क्रामि"त्यादि। एतदर्थमेव च विवाहप्रकरणे संचारीति रोगदोषाणां। न च पुनर्भूत्वस्य कुलक्षयादिहेतुत्वे किंचित्प्रमाणं तादृशमास्ति । दहंति कुलमित्यादेर्विवाहविधिशेषतयाऽर्थवादमात्रत्वात् ।

यस्तु **मेधातिथेर्ब्रा**ह्मणादिष्वपि गांधर्वादेर्भार्यात्वहेतुत्वाभ्युपगमः स ब्राह्मणादिष्वपि गांधर्वादेः "षडानुपूर्व्या विप्रस्ये"त्यादिना विहितत्वात्। "चतुरो ब्राह्मणस्याद्यान्प्रशस्तान्कवयो विदुः" इति वचनादनुकल्पत्वं तु तेषां न त्वत्यंतनिषिद्धता ।अत एव "निंदितैर्निन्दिता नृणां तस्मान्निंद्यान्विवर्जयेत्" इति निषेधः प्रशस्तब्राह्मादिविवाहाभावमनपेक्ष्याद्यप्रभृतिविषयतया तेन व्याख्यातः । अत एव च विहितप्रतिषिद्धा निंदिता अत्यंतनिषिद्धा गर्ह्या इति विभागो ग्रंथांतरे **नारायणादीनां मेधातिथिग्रं**थाशयमज्ञात्वा यत्किंचित्प्रलापितमुपेक्षैव युक्ता ।

तथा च द्वितीयकर्तृकविवाहस्य निषिद्धत्वेन दानरूपांगाभावेन च भार्यात्वानुत्पादकत्वादाद्यकर्तृकस्यापि द्वितीयस्य न भार्यात्वोत्पादकत्वम् । किं तु पुनरुपनयनवत्प्रायश्चित्तमात्ररूपत्वमिति प्रामाणिकबहुनिबद्धसम्मतः पक्षः समाश्रीयते। तदापि "ऊढायाः पुनरुद्वाहमि"त्यनेन रागप्राप्तत्वेन सजातीयो द्वितीयकर्तृक एव विवाहो निषिध्यते । न तु प्रायश्चित्तरूपतया विधिमात्रप्रयुक्तत्वेन विजातीय आद्यकर्तृको द्वितीयः । तथा चास्य कलावप्यनुष्ठानसंभवात्पुनर्भूत्वनिमित्तप्रायश्चित्तपूर्वकं गतप्रत्यागतात्वनिमित्तकद्वितीयाविवाहपूर्वकं च पूर्वपतिनाऽस्याः स्वीकारेण कोऽपि विरोध इति । वस्तुतस्तु नेयं पुनर्भूगतप्रत्यागता **वसिष्ठोक्ते**स्तस्याः पुनर्भूत्वेऽपि द्वितीयपुरुषसंप्रयोगमात्रापेक्षित्वेन तद्विवाहानपेक्षत्वात्क्षतयोनित्वस्यापेक्षितत्वाच्चात एव **कुल्लूकभट्टादिभि**स्तथैव सा व्याख्याता । **सर्वज्ञ**व्याख्यानं तु निर्मूलं "या पत्या वा परित्यक्ते"त्येतस्या एव तच्छब्देन परामृश्यगतप्रत्यागतात्वोक्तेः पूर्वापरानालोचनपूर्वकं चेत्यज्ञव्याख्यानमेव । वस्तुतस्तु गतप्रत्यागता स्वैरिणी न तु पुनर्भूः "कौमारं पतिमुत्सृज्येति" **नारदेन** स्वैरिणीमध्येऽस्या उक्तेः । यत्तु **वसिष्ठे**नास्या अन्यमेवाश्रितायाश्च पुनर्भूत्वमुक्तं तत्पुनर्भूशब्दस्यान्यपूर्वामात्रवचनत्वमभिप्रेत्य द्वितीयाज्जातो यदि तमेवाश्रिता तस्यैवासौ पौनर्भवः पुत्रः यदि पुनः पूर्वमाश्रिता ततः पूर्वस्येति विभा-

गेन तत्पुत्रस्य पौनर्भवमध्येऽन्तर्भावार्थम् । नियोगाभावेन तस्याक्षेत्रजत्वात् । एवमाशयकत्वं च तस्य पुत्रप्रकरणे उक्तेर्गम्यते । **मानवस्य** पुनर्भूत्वोक्तेरप्ययमेवाशयस्तत्रैवोक्तेः । अन्यथा पुनर्भूलक्षणोक्तिपर**योगीश्वरनारदादि**वाक्यविरोधापत्तेः ।

यद्वा पुनर्भवते प्राप्नोतीति व्युत्पत्त्या तत्र पुनर्भूपदं यौगिकं उद्देश्यभेदेनावश्यावृत्तिकस्य ५ **मानवे** पौनर्भवपदस्य भिन्नार्थकत्वेऽपि क्षम्यभावादित्यादिदिङ्मात्रं । विस्तरस्त्वन्यत्र बोध्यः । ततश्च गतप्रत्यागतात्वाभावात्पुनर्विवाहोऽपि पूर्वपतिना सहास्या नापेक्षितः । अदृष्टार्थस्यास्य यावद्वचनमेव प्रवृत्तेरन्यथाव्यभिचारमात्रे तदपेक्षापत्तेः । किं तु पुनर्भूत्वनिमित्तकप्रायश्चित्तमात्रं । तच्च यद्यपि न क्वचिद्विशिष्योक्तं तथापि तत्परिणेतुः कौमारपतिभिन्नस्य पुंसो यत्तदेवार्धक्लृप्तं तस्या अपि यद्यपि पुनर्भूविवाहेऽपि प्रायश्चित्तं न क्वचित्तथोक्तं तथापि सगोत्रासपिंडादिविवाहे यदुक्तं तदेव १० तत्रापि भवति

"बहूनामेककार्याणामेकस्यापि यदुच्यते । सर्वेषां तद्भवेत्कार्यमेकरूपा हि ते स्मृता" ॥

इत्युक्तेः । न च यस्मिन्निमित्ते पुंसो यश्चित्तं स्त्रिया अपि तस्मिन्निमित्ते तदेव स्त्रीणामर्धं प्रदातव्यमित्युक्तेरर्धकल्पनया युक्तम् । पुनर्भूविवाहप्रायश्चित्तस्य त्वर्धं स्त्रियाः कथं भवेत् । तन्निमित्ताभावात् । अत एव स्त्रियाः परपुरुषगमने निमित्ताभावेन परदारागननिमित्तकप्रायश्चित्ताप्राप्तौ १५ तत्प्राप्त्यर्थं वचनं पृथगारब्धम् । "यत्पुंसः परदारेषु तच्चैनां चारयेद्व्रतमिति" सपिंडादिविवाहप्रायश्चित्तार्थं तु स्त्रिया युक्तं तस्या अपि तन्निमित्तसत्वादिति वाच्यम् । पुनर्भूत्वापादकस्य विवाहस्य प्रायश्चित्ते निमित्तभूतस्य स्त्रिया अपि विद्यमानत्वात् । रजस्वलागार्भिण्यादिगमने स्त्रिया अपि प्रायश्चित्तप्राप्त्यर्थं प्रतियोगित्वादिसंबंधविशेषाविवक्षया संबंधसामान्यविवक्षावादिहापि तथा संभवाच्च । यद्यप्यनेन न्यायेन परदारापगमनविशेषकर्तृत्वस्य पुंसि वा स्त्रियामपि संभवात्परदारागमननिमित्तक- २० प्रायश्चित्तोपदेशेनैव स्त्रिया अपि तत्प्राप्तिसंभवाद्यत्पुंसः परेत्यतिदेशवैयर्थ्यमाभाति तथापि तत्परिहारोऽन्यत्र स्पष्टस्तत एव बोध्यः ।

न च सपिंडादिविवाहप्रायश्चित्तस्यैव पुनर्भूविवाहेऽपि स्वीकारे तद्वदेव तत्कर्तृपरिपाल्यत्वस्यापि प्राप्तौ पूर्वपतिस्वीकार्योक्तिः पुनर्भ्वाः कथमिति वाच्यम् । न हि मात्रैवच्चैनां विभृयादिति प्रायश्चित्तांतगत्या विधीयते । किं तर्हि । प्रायश्चित्तेन दोषनिरासाद्वोढुः सपिंडादिस्त्रीगमनशंकायां २५ तत्प्रतियोगिकभार्यात्वाभावात्पित्रादिना तस्या अन्यस्मै दानसंभवशंकायां चोभयनिवृत्त्यर्थं स्वातंत्र्येणेदं विधीयते । न चेह पूर्वपत्युर्विद्यमानत्वात्तथा काऽपि शंकेति । नात्र तद्विधिप्रवृत्तिः । किं तु प्रायश्चित्तस्यैवापेक्षितत्वादिति युक्तम् । यश्च पुनर्भूभर्तुः श्राद्धादौ प्रतिषेधः सकृतप्रायश्चित्तस्यापि कृतघ्नादिवन्निवृत्त्यर्थः । विहितपुनर्भूविवाहविषयो वा न त्वकृतप्रायश्चित्तविषयस्तस्यैवास्वेभिरनिर्णिक्तैरित्यनेनैव प्रतिषेधात् तदपत्यानां तु वर्णानुलोमजबहिर्भूतानां प्रायश्चित्तानर्हाणां श्राद्धादौ ३० प्रसक्तिरेव नास्तीति कुंडगोलकादिवत्प्राकट्यार्थ एव तेषां तत्र प्रतिषेधः । एवं पुनर्भ्वा अपि यदि क्वचित्संहारप्रतिषेधः स्यात्ततः सोऽनंतरोक्तयुक्त्या कृतप्रायश्चित्तविषय एवेति तद्बलात्पूर्वपतिना तत्संग्रहो न स्यात् । न तु स क्वचिदस्ति पुनर्भूपतिनिंदाप्रतिषेधौ तु पुनर्भूत्वापादकविवाहकर्तृविषयकौ । पुनर्भूत्वस्यापि विशेषणत्वात्तस्यैव निषिद्धाच्चान्यथोपलक्षणत्वस्य निषेधांतरकल्पनस्य चापत्तेः । न च पूर्वपत्युस्तत्परिणयाभ्युपगमेऽपि स पुनर्भूत्वापादकः । किं तु तदन्यकर्तृक एवे-

त्युक्तम्। तस्मात्कैश्चिदपि प्रामाणिकैर्निबंधकारैरचुंबितेऽस्मिन्विषये मम तावदेवं प्रतिभा। यदेकेन यथाविधिपरिणीता तेन क्षतयोनिरक्षतयोनिर्वा तस्मिन् जीवत्येव याऽन्येन तथैव परिणीतमात्रा भुक्ताऽपि वा सा द्वितीयविवाहनिमित्तकं सपिंडादिविवाहप्रायश्चित्तमेव पूर्वोक्तरीत्या पुनर्भूविवाहेऽपि प्राप्तमर्धक्लृप्त्या कृत्वोपभोगे तन्निमित्तकमिति प्रायश्चित्तं कृत्वा त्यक्ततत्संसर्गा पुनः पूर्वपतिना धर्ममात्रं विवाहं कृत्वाऽकृत्वैव वा स्वीकर्तुं योग्येति। अनुष्ठानं तु प्रामाणिकैः सह विचार्य कार्यमिति दिक्। ५

प्रकृतमनुसरामः। सहोढजाभावेऽपविद्धः। तत्स्वरूपमप्युक्तम्। अयमेव मूलोक्तः क्रमो नान्योक्तोऽन्यादृश इत्यपि प्रागुक्तम्। प्राच्यानां तु मूलाद्युक्तवैधक्रमत्यागेन **नारदीय**पाठजक्रमाङ्गीकरणांतबलाबलाज्ञाननिबंधनामिति बोध्यम्। अत अत्र वयं ब्राह्मणस्तु शूद्रायामित्याद्युक्त्या

"क्षेत्रजादीन्सुतानेतानेकादश यथोदितान्। पुत्रप्रतिनिधीन्प्राहुः क्रियालोपान्मनीषिणः" ॥ इति १० **मनुनोक्तत्वात्** (९।१८०), "यत्र क्व च नोत्पादिदस्तु द्वादश" इति **विष्णूक्तेः**, "ब्राह्मणेन न कर्त्तव्यं शूद्रस्यैवौर्ध्वदेहिकम्। शूद्रेण वा ब्राह्मणस्य विना पारशवात् क्वचित्" इति **पारस्करोक्तेश्च** प्रागुक्तद्वादशविधपुत्राभावे शूद्रापुत्रस्यापि द्विजपित्रौर्ध्वदेहिकेऽधिकार इति प्रतीयते। **विज्ञानेश्वरादिभिस्तु** मूलाद्यनुक्तत्वात् "यद्यपि स्यात्तु सत्पुत्र" इत्यादि **मनुना** चान्यपुत्राभावेऽपि तस्य कृत्स्नदायालाभोक्ते "यश्चार्थहरः स पिंडदायीति" च **विष्णवापस्तंबाभ्या**मुत्सर्गतो १५ रिक्थग्रहणस्य श्राद्धाद्यधिकारप्रयोजकत्वोक्तेः षंढादिवत्तस्याप्यनधिकारावगमनाधिकारिषु परिगणितः। तत्त्वं तु प्रागुक्तमेव। "भ्रातॄणामिति" **मानवस्य** गतिरप्युक्तैव। सपत्नीपुत्रस्य तु गौणपुत्रत्वमस्त्येव। तेन स्त्रीश्राद्धे औरसस्तदभावे पौत्रिकेयस्तदभावे सपत्नीपुत्रस्तदभावे क्षेत्रजाद्यधिकारिक्रमः। "बह्वीनामेकपत्नीना"मिति **मानवस्य** प्राग्वद्व्याख्यानसंभवेऽपि

"विदध्यादौरसः पुत्रो जनन्या और्ध्वदेहिकम्। तदभावे सपत्नीजः क्षेत्रजाद्यास्तथा वृता ॥ २०
"तेषामभावे तु पतिस्तदभावे सपिंडकाः"। इति **कातीयात्**।

एतेन "पुत्राभावे दुहिता तदभावे सपत्नीज" इति **शूलपाण्युक्त**क्रमः परास्तः। पुत्रस्य चानुपनीतस्याप्यधिकारः।

"न ह्यस्मिन्युज्यते कर्म किञ्चिदामौंजिबंधनात् ॥ "नाभिव्याहारयेत् ब्रह्म स्वधानिनयनादृते" इति (२।१७१-७२) **मनोः**। स च कृतचूडस्यैव। त्रिवर्षादूर्ध्वं त्वकृतचूडस्यापि। तथा च **सुमंतुः**

"अनुपेतोऽपि कुर्वीत मंत्रवत्पैतृमेधिकम्। यद्यसौ कृतचूडः स्याद्यदि स्याच्च त्रिवत्सरः" ॥ इति। एवं चानुपनीत इत्यत्राब्राह्मण इतिवदर्थो बोध्यः। अत एव ततः पूर्वस्य न तेन ग्रहणम्। यत्तु **श्राद्धदीपिकादौ**

"कृतचूडस्तु कुर्वीत उदकं पिंडमेव च। स्वधाकारं प्रयुंजीत वेदोच्चारं न कारयेत्" ॥ इति **व्याघ्रनाम्ना** लिखितं तन्**मनु**विरोधादुपेक्ष्यम्। यदपि **देवयाज्ञिकेना**स्याद्यवर्षकृतचूडविषयत्व- ३० मुक्तं तदपि **सुमंतुवाक्ये** "यदि स्याच्च त्रिवत्सर" इति पृथगुक्तेस्ततप्रागपि कृतचूडस्य मंत्रवदधिकारावगमादयुक्तम्। अशक्तौ त्वग्निदानमात्रं समंत्रकम्। तेनाकार्यमन्यच्चान्येन।

"असंस्कृतेन पत्न्या च ह्यग्निदानं समन्त्रकम् । कर्तव्यमितरत्सर्वं कारयेदन्यमेव हि"॥ इति **कातीयात्** । यत्तु **देवयाज्ञिकेन** शक्तेनाप्यनुपनीतेनाग्निदानमेव कार्यमित्युक्तं (पृ. ३३५ पं.८) तत्

"कुर्यादनुपनीतोऽपि श्राद्धमेकस्तु यः सुतः । पितृयज्ञाहुतिं पाणौ जुहुयाद्ब्राह्मणस्य सः" ॥ इति **वृद्धमनोः** श्राद्धेऽप्याधिकारावगमादयुक्तम् । एतच्चौरसाविषयमेव । अन्ये तूपनीता एवाधिकारिण ५ इति **कालादर्शे** । प्रागुक्तसर्वपुत्राभावे पौत्रस्तदभावे प्रपौत्रः ।

"पुत्रः पौत्रः प्रपौत्रो वा भ्राता वा भ्रातृसंततिः । सकुल्यसंततिश्चैव क्रियार्हा नृपजातयः"॥ इति **वैष्णवात्** ( ३।१३।३० )

अत्र च पुत्रपदं जातावेकवचनांतं मुख्यगौणपुत्रपरम् । "पुत्रेषु विद्यमानेषु नान्यं वै कारयेत्स्वधामिति" **ऋष्य्‌गोक्तेः** । "नैतत्पौत्रेण कर्तव्यं पुत्रवांश्चेत्पितामह" इति **काती-** १० **याच्च** । क्षेत्रजादिषु पुत्रत्वोक्तेश्चेदमेव फलम् यत्पुत्रग्रहणेन तेषामपि ग्रहणमिति । तथा च

"पौत्रश्च पुत्रिकापुत्रः स्वर्गप्राप्तिकरावुभौ । ऋक्थे च पिंडदाने च समौ तौ परिकीर्तितौ"॥ इति **बार्हस्पत्यं** न पौत्रगौणयोर्विकल्पार्थं किं त्वधिकारमात्रबोधनार्थमिति बोध्यम् । **कालादर्शे** तु औरसाभावे पौत्रः प्रपौत्रश्च । तदभावे क्रमेण पुत्रिकापुत्रः क्षेत्रजदत्तकक्रीतकृत्रिमस्वयंदत्तापविद्धा इत्युक्तम् । "पुत्रः पौत्रः प्रपौत्रश्च पुत्रिकासुत एव चेति" **सुमन्त**वाक्यं च तत्र १५ मानत्वेन लिखितम् । प्रपौत्राभावे पत्युः पत्नी पत्न्याश्च पतिः । तथा च **शंखः**

"भार्यापिंडं पतिदद्याद्भर्त्रे भार्या तथैव च । श्वश्र्वादेश्च स्नुषा चैव तदभावे सपिंडकाः" ॥ इति । "न भार्यायाः पतिर्दद्यात्पत्येभार्या तथैव च "इति **छंदोगपरिशिष्टं** प्रपौत्रसद्भावविषयम् । "सर्वाभावे स्त्रियः कुर्युः स्वभर्तृणाममंत्रकमिति" **मार्कंडेयम्** (२७।२२)। "कुलद्वये चोत्सन्ने स्त्रीभिः कार्या क्रिया नृपेति" **वैष्णवं**(३।१३।३२)चाऽसुरादिविवाहोढाविषयस्त्रीग्रहणात् । तथा च **शातातपः**

२० "धर्म्यैर्विवाहैरूढाया सा पत्नी परिकीर्तिता । स्हाधिकारिणो ह्येषा यज्ञादौ धर्मकर्मणि ।

"क्रयक्रीता तु या नारी न सा पत्न्यभिधीयते । न सा दैवे न सा पित्र्ये दासीत्वं मुनयो जगुरिति"॥ असवर्णाविषयं तदिति **शूलपाणिः** । अत्र च यद्यपि "अपुत्राशयनं भर्तुरिति" **वृद्धमनुवाक्ये** सहनिर्देशाद्विभक्तासंसृष्टस्य पत्नी तद्धनग्रहणाधिकारादविभक्तसंसृष्टस्य तु सोदरस्तस्य तदभावादिति प्रतीयते तथापि वचनात्सर्वत्रौर्ध्वदेहिकाद्यधिकारिणी भार्येव । एकयोगनिर्दिष्टयोरपि वचनां- २५ तरवशाद्भिन्नाभिन्नविषयत्वेन दोषः । "यश्चार्थहर" इति तूत्सर्गः । दुहित्रादिसत्वे पुत्रादीनां मातृधनग्रहणेऽनधिकारेऽपि तदौर्ध्वदेहिकादावधिकारात्सर्वसंबंध्यभावेऽर्थग्राहिणास्तदधिकारबोधकं वा । **कालादर्शे** तु प्रागुक्तापविद्धांत "पुत्राभावे पत्नी तदभावे गूढजकानीनपौनर्भवसहोढा" इत्युक्तम् ।

"कानीनगूढसहजपुनर्भूतनयाश्च ये । पत्न्यभावे तु कुर्युस्ते अप्रशस्ता यतः स्मृताः" ॥ इति स **संग्रह**वाक्यं तत्र मानत्वेनोक्तम् । अप्राशस्त्यं च स्मृतं **विष्णुना** "अप्रशस्तास्तु कानी- ३० नेत्यादि" । पत्न्यभावे तु "पुत्राभावे तु पत्नी स्यात्पत्न्यभावे सहोदर" इत्यादिवाक्यैर्भ्रातुरधिकारः प्रतीयते ।

---

१ "बन्धुर्वा"-इति वैष्णवे पाठः ।

"पुत्रेषु विद्यमानेषु नान्यं वै कारयेत्स्वधाम् । अपुत्रस्य तु या पुत्री साऽपि पिंडप्रदा भवेत्" ॥
इत्यादि **ऋष्यशृंगादि**वाक्यैर्दुहितुः ।

"अकृता वा कृता वापि" (९।१३६) इत्यादि **मान**वादिभिश्च दौहित्रस्य । तत्रेत्थं व्यवस्था । विभक्तासंसृष्टस्य पत्न्यभावे दुहिता पुत्रेष्वेत्यादि**ऋष्यशृङ्गोक्तेः** । तद्धनग्रहणे तस्या एवाधिकाराच्च । तथा च **वृद्धगुरुः** "भर्तुर्धनहरी पत्नी तां विना दुहिता स्मृते"त्यादि धनग्रहणस्य चोपकारव्याप्तत्वात् । ५
"यश्चार्थहर" इत्यस्य च विरोधे व्यवस्थापनमपि फलं संभवत्येवं यद्यपि धनग्रहणमनूढाया अप्यस्ति तथापि पिंडदानादौ संस्कृतैवाऽधिकारिणी ।

"दुहिता पुत्रवत्कुर्यान्मातापित्रोस्तु संस्कृता । आशौचमुदकं पिंडं एकोद्दिष्टे सदा तयोः" ॥इति **भारद्वाजोक्तेः** । तस्यैव दुहित्रभावे दौहित्रः । तदभावे तस्यैव तद्धनग्रहणेऽधिकारात् । "अकृतावे"त्यादि **मानवे** "अपुत्रपुत्रपौत्रसंताने"इत्यादि **वैष्णवे** च तेन सह निर्देशाच्च । तस्यैव दौहित्राभावे भ्राता "पत्नी दुहितरश्चैवे"त्यत्र **च**शब्दसंग्राह्यदौहित्रानंतरं तस्य तद्धनग्रहणाधिकारबोधनात् । **संग्रहे** च स्पष्टमिदम् १०

"सुतः कुर्यात्पितुः श्राद्धं पत्नी च तदसन्निधौ । धनहार्यथ दौहित्रस्ततो भ्राताऽथ तत्सुतः" ॥
इति । पत्नी चेति चशब्दाद्दुहितेति । अविभक्तसंसृष्टस्य तु पत्न्यभावे भ्रातैव । तत्र पत्न्यभावे तु सोदर इत्यादिवाक्यप्रवृत्तेरविघ्नत्वात् । **आदित्यपुराणेऽपि** १५

"भ्रातुर्भ्राता स्वयं कुर्यात्तद्भार्या चेन्न विद्यते । तस्य भ्रातृसुतः कुर्याद्यस्य नास्ति सहोदरः"॥ इति।
तत्र सोदरासोदरसमवाये सोदर एव । प्रत्यासत्तेः । तत्रापि ज्येष्ठकनिष्ठसमवाये कनिष्ठः ।

"नानुजस्य तथाग्रज" इति **छंदोगपरिशिष्टस्य** भ्रातृत्वादविशेषेणाधिकारप्राप्तौ कनिष्ठसद्भावे ज्येष्ठस्य तन्निषेधकत्वात् तत्समभिव्याहृतस्य "न योषितः पतिर्दद्यात्" "न पुत्रस्य पिता कुर्यात्" इत्यस्य वचनांतराविरोधायाधिकार्यंतराभावविषयत्वात् कनिष्ठबहुत्वे चादौ मृतानंतरस्तदभावे तदनंतरः प्रत्यासत्तेः । कनिष्ठाभावे ज्येष्ठः। भ्रातृत्वात् । निषेधाप्रवृत्तेश्च । २०

"यदि स्नेहेन कुर्यातां सपिंडीकरणं विना । गयायां तु विशेषेण ज्यायानपि समाचरेत्"॥
इति **छंदोगपरिशिष्टाच्च**। ज्येष्ठबहुत्वे च मृतानंतरक्रमेण । सोदराभावे भिन्नोदरः प्राग्वत् । तस्यापि भ्रातृत्वात् । केचित्तु दुहितृदौहित्रयोर्भिन्नगोत्रत्वात् "न कदाचित्सगोत्राय श्राद्धं कार्यमगोत्रजैः" इति च सगोत्रसत्वे भिन्नगोत्रस्य श्राद्धाद्यनधिकारोक्तेर्विभक्तासंसृष्टस्यापि भ्रातैव कुर्यादित्याहुः । २५
तदभावे भ्रातृसुतः । "भ्राता वा भ्रातृसंततिः" इति **वैष्णवात्** । **आदित्यपुराणे** सहोदरग्रहणं भ्रातृमात्रोपलक्षणपूर्वं सामान्येनोक्तः सोदरासोदरभ्रातृपुत्रादिसमवाये प्राग्वत् । भ्रातृसुताभावे पिता । "पुत्रो भ्राता पिता वाऽपीति" **प्रचेतः**स्मृतेः । "दत्तानामप्यदत्तानां कन्यानां कुरुते पिता" इति **ब्राह्माच्च** । "न च माता न च पिता कुर्यात्पुत्रस्य पैतृकमिति" **कातीयं** तु भ्रातृसुतासत्वविषयम् । मात्रभावे श्वशुरयोः स्नुषा "श्वश्र्वादेश्च स्नुषा चैव तदभावे सपिंडका"। इति **शंखोक्तेः** । स्नुषाया अभावे भगिनी । तत्रानुजाग्रजासोदरासोदरासमवाये भ्रातृवत् । तदभावे तत्पुत्रः । समवाये तद्वदेव । तथा च **कात्यायनः** ३०

"अनुजा वाऽग्रजा वाऽपि भ्रातुः कुर्वीत संस्क्रियाम् । ततस्त्वसोदरा तद्वत्क्रमेण तनयस्तयोः"॥इति।

**संग्रहे**ऽपि

"पत्नी भ्राता च तज्जश्च पिता माता स्नुषा तथा । भगिनी भागिनेयश्च सपिंडः सोदकस्तथा॥

"असंनिधाने पूर्वेषामुत्तरे पिंडदाः स्मृताः" ॥ इति । तदभावे पितृव्यतत्पुत्रादयः सपिंडाः प्रत्यासत्तिक्रमेण । तदभावे सोदकास्तथैव तदभावे मातामहमातुलतत्पुत्रादयो मातृसपिंडास्तत्क्रमेण ।
५ तदभावे तत्सोदकास्तथैव । तथा च **वैष्णवे** ( ३।१३।३०-३१ )

"पुत्रः पौत्रः प्रपौत्रो वा भ्राता वा भ्रातृसंततिः । सपिंडसंततिश्चैव क्रियार्हा नृप जातयः ॥

"एषामभावे सर्वेषां समानोदकसंततिः । मातृपक्षस्य पिंडेन संबद्धा ये जलेन च" ॥ इति । तदभावे त्रिविधा बांधवाः । गोत्रजानंतरं शिष्यादितः पूर्वं तेषां धनग्रहणाधिकारोक्तेः । तत्रापि प्रत्यासत्तेरादौ स्वबंधवस्ततः पितृबंधवस्ततो मातृबंधव इति क्रमः । तदभावे स्त्री । तत्राप्यादा-
१० वासुरादिविवाहोढा सवर्णा तदभावे परिणीता सवर्णा । तदभावेऽवरुद्धाऽपि शूद्राभिन्नेतिक्रमः । तथा च तत्रैव "कुलद्वयेऽपीति" कुलद्वयपदेन च बांधवा अपि गृह्यंते । तेषामपि तत्संबंधात् । तद्भावे गुरोः शिष्यस्तदभावे यजमानस्य ऋत्विक् । तदभावे शिष्यस्याचार्यः सब्रह्मचारी वा "पुत्राभावे सपिंडा" इत्यादि **गौतमोक्तेः** (१५।१३) । शिष्यानंतरं सब्रह्मचारिणो धनग्राहित्वोक्तेश्च राज्ञश्च पुरोहितो मंत्री भृत्यश्च क्रमेण ।

१५ "मृते राज्ञः सपिंडेऽपि निरपत्ये पुरोहितः । मंत्री वा हतशौचं तु तीर्त्वा पश्चात्करोति सः"॥ इति **ब्राह्मात्** ।

"प्रमीतस्य पितुः पुत्रैः श्राद्धं देयं प्रयत्नतः । ज्ञातिबंधुसुहृच्छिष्यैः ऋत्विग्भृत्यपुरोहितै"रिति। **गुरूक्तेश्च** । तदभावे जामाता श्वशुरस्य श्वशुरश्च जामातुः । तदभावे सख्युः सखा । तथा च **मार्कंडेयपुराणे**

२० "सख्युरुत्सन्नबंधोश्च सखाऽपि श्वशुरस्य च । जामाता स्नेहतः कुर्यादखिलं पैतृमेधिकम्"॥इति ।

**ब्राह्मे**ऽपि "जामातुः श्वशुरश्चके येषां तेषां ते चापि संयता" इति । यद्यपि **मार्कंडेये** सख्युः पश्चाज्जामाता निर्दिष्टः । तथापि तस्याधिकारमात्रप्रतिपादनपरत्वात्संबंधविशेषाज्जामातुरेव प्राथम्यं युक्तमित्याशयेन **कालादर्शे** तथोक्तम् । तदभावे संघांतर्गताः प्रत्यासत्तिविशेषक्रमेण "संघातांतर्गतेर्वापि कार्या प्रेतस्य च क्रियेति" **वैष्णवात्** (३।१३।३३) । तदभावे ब्राह्मणधनग्रहणे राज्ञोऽनधि-
२५ कारात्तस्य तद्गृहीषः कश्चिद्विप्रः "यश्चार्थहर" इति **विष्णूक्तेः** । विप्रभिन्नानां तु राज्ञा धनं गृहीत्वा तेन धनेनान्येन कारयेत् । "उत्सन्नबंधुरिक्थानां कारयेदवनीपतिरिति" **वैष्णवात्** (३।१४।३३) । अस्य च विप्रभिन्नविषयत्वं तत्रैव "राज्ञा वा धनहारिणे"त्युक्तेर्गम्यते । राज्ञो विप्रधनग्रहानधिकारात् । मुमूर्षुणा वा संनिहितोकार्यभावे धर्मपुत्रः कार्यः । स च तस्य मृतस्य सर्वं कुर्यात् । "अपुत्रेण सुतः कार्य" इत्याद्युक्तेः । अत्र चापुत्रग्रहणं सन्निहिताधिकारिमात्रा-
३० भावपरम् । पिंडोदकेत्याद्युक्तेः ।

---

१ ख-संतिनिहिता ।

स्त्रीश्राद्धे त्वधिकारिक्रमे विशेषः। अनूढायाः पिता। तदभावे भ्रातादिः। ऊढायास्त्वौरसपुत्रिकापुत्राभावे सपत्नीपुत्रस्तदभावे क्षेत्रजाद्याः प्रपौत्रांतास्तदभावे पतिस्तदभावे दुहितृदौहित्रौ प्राग्वत्। तदभावे पत्युर्भ्राता। तदभावे तत्पुत्रः। तदभावे स्नुषा। तदभावे पितृमातृभ्रातृतत्पुत्रादयः प्रागुक्ता विवाहेन तस्याः पितृगोत्रहान्या पतिगोत्रापत्तेर्न कदाचित्सगोत्रायेति निषेधाच्चेति।

एष्वधिकारिषु केषां किमवश्यकार्यमित्यपेक्षायां **वैष्णवे** उक्तम् (३।१४।३४–३९) ५

"पूर्वाः क्रिया मध्यमाश्च तथा चैवोत्तराः क्रियाः। त्रिप्रकाराः क्रिया ह्येतास्तासां भेदं शृणुष्व मे॥

"आदाहवार्थायुधादिस्पर्शाद्यंताश्च याः क्रियाः। ताः पूर्वा मध्यमा मासि मास्येकोद्दिष्टसंज्ञकाः॥

"प्रेते पितृत्वमापन्ने सपिण्डीकरणादनु। क्रियंते याः क्रियाः पित्र्याः प्रोच्यंते ता नृपोत्तराः॥

"पितृमातृसपिंडैस्तु समानसलिलैस्तथा। संघातांतर्गतेनापि[1] राज्ञा वा धनहारिणा॥

"पूर्वाः क्रियास्तु कर्तव्याः पुत्राद्यैरेव चोत्तराः। दौहित्रैर्वा नरश्रेष्ठ कार्यास्तत्तनयैस्तथा॥ १०

"मृताहनि च कर्तव्याः स्त्रीणामप्युत्तराः क्रियाः। प्रतिसंवत्सरं राजन्नेकोद्दिष्टविधानतः"॥ इति।

अस्यार्थः। जलादिस्पर्शादिराशौचांत्यदिनें उक्तत्वाद्दाहमारभ्याऽऽशौचमध्यकर्तव्याः क्रियाः पूर्वाः एकादशाहकृत्यमारभ्य सपिंडनपर्यंता मध्यमास्तदूर्ध्वा आब्दिकाद्या उत्तराः। तत्र सपिंडादिभिरपि नृपांतैः पूर्वाः कार्या एव। उत्तरास्तु न कार्या। मध्यमासु त्वनियमः। पुत्राद्यैर्भ्रातृसंततैर्दौहित्रतनयैश्चोत्तरा अवश्यं कार्याः। मात्रादीनां पूर्वमध्यमावत्सर्वोत्तरक्रियाप्राप्तौ परिसंख्या। १५ प्रत्यब्दं मृताहन्येव स्त्रीणामुत्तराः कार्या न तु दर्शादौ। तत्र तु पत्याद्यंशभागित्वमेव तासां तत्र चैकोद्दिष्टविधानत इति पाक्षिकैकोद्दिष्टानुवादः। इदं वृद्ध्यन्वष्टकादेरप्युपलक्षणम्। तत्रापि स्त्रीणां पृथक्श्राद्धोक्तेः।

"न योषिद्भ्यः पृथक् दद्यादवसानदिनादृते। स्वभर्तृपिंडमात्राभ्यस्तृप्तिरासां यतः स्मृता"॥इति **परिशिष्टात्**। पूर्वमध्यमास्तु पृथक् भवंत्येव। अत्र च राजभिन्नानां तदीयधनाभावेऽपि स्वद्रव्येण २० पूर्वक्रियास्वधिकारः। राज्ञस्तु तदीयधनसत्वे एव "राज्ञा वा धनहारिणे"त्युक्तेः "सर्वाभावे तु नृपतिः कारयेत्तस्य रिक्थत"[2] इति **मार्कंडेयाच्च** (२७।२३)। स्वयं तदीयधनग्रहे सपिंडादीनामपि नृपांतानां मध्यमोत्तराः अप्यावश्यकाः। तथा च **स्कान्दे**

"मलमेतन्मनुष्याणां द्रविणं यत्प्रकीर्तितम्। तद्गृह्णन्मलमादत्तेऽज्ञानिनां ज्ञानिनामपि॥

"ऋषिभिस्तस्य निर्दिष्टा निष्कृतिः पावनी परा। आदेहपतनात्कुर्यात्पिंडदानोदकक्रियाम्"॥इति। २५ पुत्रपौत्रप्रपौत्रपत्नी भ्रातातत्पुत्रमातापितृदौहित्रस्नुषाशिष्याणां तु तदीयधनाभावेऽपि उत्तरापर्यंतमावश्यकम्।

"पुत्राभावे च तत्पुत्रः पत्नी माता तथा पिता। वित्ताभावे च सच्छिष्यः कुर्यात्तस्यौर्ध्वदेहिकम्"॥ इति **मार्कंडेयात्**।

"व्रतस्थोऽपि यथा पुत्रः पितुः कुर्यात् क्रियां नृप। तथा मातामहस्याऽपि दौहित्रः कर्तुमर्हतीति"॥ ३० **भविष्यपुराणाच्च**। स्त्रीणामप्येवमेव पूर्वादिक्रियाभेदेनाधिकारिव्यवस्था बोध्या।

---

१ तत्संघातान्तर्गतैश्चेति विष्णुपुराणे पाठः। २ "स्वकुटुम्बिना" इति मार्कंडेयपाठः।

मि. पृ. १७० विशेषांतरमाह । **पिंडेति** । इत्येवम् **इत्यादिना** वैश्ये पंचदशं शूद्रे त्रिंशत् । **यावदाशौचमिति** । प्रत्यहमिति शेषः । **पारस्करो**ऽपि

"ब्राह्मणे दशपिंडाः स्युः क्षत्रिये द्वादश स्मृताः । वैश्ये पंचदश प्रोक्ताः शूद्रे त्रिंशत्प्रकीर्तिताः"॥इति। इदं च देशविशेषविषयं न सार्वत्रिकम् ।

५ "जात्युक्तिशौचतुल्यांस्तु वर्णानां क्वचिदेव हि । देशधर्मान्पुरस्कृत्य प्रेतपिंडान्वपंत्यमी"॥ इति **ब्राह्मोक्तेः** । तथा च "प्रेतेभ्यः सर्ववर्णेभ्यः पिण्डान्दद्याद्दशैव तु" इति तदग्रिम**ब्राह्मात्सर्व-स्मृतिपुराणादौ** दशानामेव पिंडानां शिरःप्रभृत्यवयवनिष्पत्तिरूपफलोक्तेर्विप्रस्याविच्छेदेनैव दश-पिंडदानम् । अन्येषां च नवदिनपर्यन्तमविच्छेदे नवपिण्डदानम् । दशमपिंडदानं त्वाशौचांत्यदिने एव । तथा च **ब्राह्मे** "दिवसे दिवसे देयः पिंड एवं क्रमेण तु" इत्युपक्रम्योक्तम्

१० "देयस्तु दशमः पिंडो राज्ञां वै द्वादशेऽहनि । वैश्यानां वै पंचदशे देयस्तु दशमस्तथा ॥

"शूद्रस्य दशमः पिंडो मासे पूर्णे हि दीयते"॥ इति । तदेतदभिप्रेत्याह । **तथा स्मृत्यन्तरेऽपीति** । इदं च सामान्योक्त्या साधारणमिति स्पष्टमेव । अविरोधायाह । **शुचित्वेति** । **अपरे**-ष्वेकादशाहादौ । एतेन "शुद्ध्येत्तु दशमेऽहनी"त्यपि व्याख्यातम् । अविरोधायाह । **योगीति** । "पिंडयज्ञावृता देयं प्रेतायान्नं दिनत्रयम्" इत्यनेनेति भावः । **उदकदानेति** कृत उपकाराति-

१५ शयोऽकृते प्रत्यवायाभाव इति भावः ।

**अत्र** पिंडदानविषये । **ह्रासो** वक्ष्यमाणप्रकारेण । **अपिना** वृद्धिपरिग्रहः । अत्राप्येवाभ्या-मपि प्रागुक्तं सूचितमिति बोध्यम् । पिंडदानप्रकारश्च **ब्राह्मे** एवं

"मृन्मयं भांडमादाय नवं स्नातः सुसंयतः । लकुटं सर्वदोषघ्नं गृहीत्वा तोयमानयेत् ॥

"ततश्चोत्तरपूर्वस्यामग्निं प्रज्वालयेद्दिशि । तंडुलप्रसृती तत्र प्रक्षाल्य द्विः पचेत्स्वयम् ॥

२० "सपवित्रैस्तिलैर्मिश्रां केशकीटविवर्जिताम् । द्वारोपांते ततः क्षिप्त्वा सशुद्धां गौरमृत्तिकाम् ॥

"तत्पृष्ठे संस्तरेद्दर्भान्याग्यन्देशसंभवान् । ततोऽवनेजनं दद्यात्संस्मरेद्गोत्रनामनी ॥

"तिलसर्पिर्मधुक्षीरैः संसिक्तं तप्तमेव हि । दद्यात्प्रेताय पिंडं तु दक्षिणाभिमुखः स्थितः ॥

"फलमूलगुडक्षीरतिलमिश्रं तु कुत्रचित् । अर्घैः पुष्पैस्तथा धूपैर्दीपैस्तोयैश्च शीतलैः ॥

"ऊर्णातन्तुमयैः शुद्धैर्वासोभिः पिंडमर्चयेत् ।

२५ "प्रयाति यावदाकाशं पिंडाद्बाष्पमयी शिखा । तावत्तत्संमुखास्तिष्ठेत्सर्वं तोये क्षिपेत्ततः ॥

"दिवसे दिवसे देयः पिंड एवं क्रमेण तु । एकस्तोयांजलिस्त्वेवं पात्रमेकं च दीयते ॥

"द्वितीये द्वौ तृतीये त्रींश्चतुर्थे चतुरस्तथा । पंचमे पंच षष्ठे षट् सप्तमे सप्त चैव हि ॥

"अष्टमेऽष्टौ च नवमे नवैव दशमे दश । एवं स्युः पंचपंचाशत्तोयस्यांजलयः क्रमात् ॥

"तावंति तोयपात्राणि संयुक्तानि तिलादिभिः" ॥ इति । एते च पंचपंचाशत्तिलतोयांजलयः

३० पिंडोपरि देयाः । द्वितीयादिशब्देन सन्निहितपिंडानामेवोक्तेः पिंडानामवयवपूरकत्वमुक्त्वा सपात्रां-जलीनामिंद्रियपूरकत्वोक्तेश्च । पूर्वतोयांजलीनां च तापोपशमनार्थत्वात् । तथा च **ब्राह्मे** एव

"शिरस्त्वाद्येन पिंडेन प्रेतस्य क्रियते तथा । द्वितीयेन तु कर्णाक्षिनासिकास्तु समासतः ॥

"गलांसभुजवक्षांसि तृतीयेन ततः क्रमात् । चतुर्थेन तु पिंडेन नाभिलिंगगुदानि च ॥

"जानुजंघे तथा पादौ पंचमेन तु सर्वदा । सर्वमर्माणि षष्ठेन सप्तमेन तु नाड्यः ॥
"दंतलोमानष्टमेन वीर्यं तु नवमेन च । दशमेन तु पूर्णत्वं तृप्तता क्षुद्विपर्ययः ॥
"एकादशेन्द्रियवधाः संति बुद्धिवधैः सह ॥
"सर्वेषामेव भूतानां परलोकसमागमे । प्रेतभावगतानां तु रौरवादिषु वर्तताम् ॥
"पंचभिः पंचभिस्त्वेभिः पात्रैरंजलिभिस्तथा । एकादशैर्वेद्रियाणि पूर्यंते शास्त्रदर्शनात्"॥इति ५

**वैशंपायनादि**भिरन्यथोक्तमन्यतो ज्ञेयम् । यत्र तु सद्यस्त्र्यहे वा दश पिंडदानमुक्तं युद्धमृतादौ तत्र तत्प्रकारोऽपि तत्रैव

"सद्यः शौचे प्रदातव्याः सर्वेऽपि युगपत्तथा । त्र्यहाशौचे प्रदातव्यः प्रथमे त्वेक एव हि ॥
"द्वितीयेऽहनि चत्वारस्तृतीये पंच चैव हि । एकस्तोयांजलिस्तद्वत्पात्रमेकं च दीयते" ॥ इति

प्रत्यहमेकस्तोयांजलिरेकं च पात्रमित्यर्थः । तदेतदभिसंधाय त्र्यहाशौचे प्रकारांतरं **पारस्करोक्त**माह । **त्रिरात्रेति** । **तथा** । कुर्यादिति शेषः ॥ १६ ॥ १०

## याज्ञवल्कीये १७ श्लोकः ( आद्योऽर्धः )

मूलमाह । **किंचेति** । एवं चानेनैकं पात्रमिति भ्रमनिरासायाह । **पात्रद्वये इति** । **प्रथम इति** । प्रथमत्याग इति न्यायात् । गमकांतरमाह । **तथेति** । मृन्मये तां रात्रीं क्षीरोदके विहायसि निदधाय "प्रेत अत्र स्नाहि पिब चेदमिति" हि तद्वचनम् । तदेवाह । **प्रेतेति**। क्षीर**मिति** संस्थाप्यमित्यस्यानुषंगः । **गारुडे** तु "पृथक्शरावयोर्दद्यादेकाहं क्षीरमंबु च" इत्युक्त्वा त्रिदिनपक्षोऽप्युक्तः । १५

"अपक्के मृन्मये पात्रे दुग्धं दद्याद्दिनत्रयम् । काष्ठत्रये गुणैर्बद्धे प्रीत्यै रात्रौ चतुष्पथे" ॥ इति

**मात्स्ये** तु यावदाशौचं तन्निधानमुक्तम्

"तस्मान्निधेयमाकाशे दशरात्रं पयस्तथा । सर्वतापोपशांत्यर्थमध्वश्रमविनाशनम्" ॥ इति । २०

अन्यदप्युक्तं **गृह्यकारिकायाम्**

"तत्र प्रेतोपकृतये दशरात्रमखंडितं । कुर्यात्प्रदीपं तैलेन वारिपात्रं च मार्तिकम् ॥
"भोज्यात् भोजनकाले स भक्तमुष्टिं च निर्वपेत् । नामगोत्रेण संबुद्ध्या धरित्र्यां पितृयज्ञवत्"॥

इति । एवमन्यदप्यन्यतो ज्ञेयम् ।

विशेषमाह । **तथेति** । **दिने इति**[१] पूर्वद्वाभ्यामन्वेति । यद्वा दिवैव तत्कार्यं न रात्रावित्यर्थकं तत् । तस्य प्रेतस्य गोत्रजैः सहेत्यर्थः । **क्वचिदिति** । **छंदोगपरिशिष्टे**ऽपि "अपरेद्युस्तृतीये वा अस्थिसंचयनं भवेत्" ॥ इति अपरेद्युर्द्वितीये । संचितानां प्रतिपत्तिमाह । **तेषां चेति** । तत्र विशेषो **ब्राह्मे** २५

"तत्स्थानाच्छनकैर्नीत्वा कदाचिज्जाह्नवीजले । कश्चित्क्षिपति सत्पुत्रो दौहित्रो वा सहोदरः ॥
"मातुःकुलं पितृकुलं वर्जयित्वा नराधमः । अस्थीन्यन्यकुलस्यास्य नीत्वा चांद्रायणं चरेत् ॥ ३०

---

१ दिनेऽस्थिमिति पाठः समीचीनः ।

"अस्थीनि मातापितृपूर्वजानां नयंति गंगामपि ये कथंचित् ।
"सद्भावकस्यापि दयाभिभूतांस्तेषां तु तीर्थानि फलप्रदानि ॥ १ ॥
"कुलद्वयं चाप्यथ वर्जयित्वा मातापित्रोर्जन्म भूम्याश्रितं च ।
"अस्थीनि चान्यस्य नयन्वहंश्च भाग्यक्षयं लभते दुष्कृतं च ॥ २ ॥
५ "भागीरथी यत्र गता सुतीर्थे कुले नरः कोऽपि यदा विपन्नः ।
"तदा तदा तत्र तथाऽथ भक्त्या भावेन चास्थीनि विनिक्षिपेच्च ॥ ३ ॥
"स्नात्वा ततः पंचगव्येन सिक्त्वा हिरण्यमध्वाज्यतिलैश्च योज्यम् ।
"ततस्तु मृत्पिंडपुटे निधाय पश्यन्दिशं प्रेतगणोपगूढम् ॥ ४ ॥
"नमोऽस्तु धर्माय वदन्प्रविश्य जले समे प्रीत इति क्षिपेच्च ।
१० "उत्थाय भास्वंतमवेक्ष्य सूर्यं सदक्षिणां विप्रमुख्याय दद्यात् ॥ ५ ॥
"एवं कृते प्रेतपुरःस्थितस्य स्वर्गे गतिः स्याच्च महेन्द्रतुल्ये ॥" इति ।
अथैतत्प्रयोग उच्यते । अस्थीन्यादाय गंगातीरेऽवस्थाप्य कर्ता सचैलं स्नानं त्रुटित इवाभाति ।
समुच्चयभ्रमनिरासाह । **अतोऽन्यमेवेति** । व्यवस्थामाह । **स्वस्वगृह्योक्तेति** ।
**ब्राह्मे** तु वर्णविशेषणव्यवस्था प्रकारद्वयेनोक्ता

१५ "चतुर्थे ब्राह्मणानां तु पंचमेऽहनि भूभृताम् । नवमे वैश्यजातीनां शूद्राणां दशमात्परे ॥
"क्वचित्तृतीये विप्रस्य चतुर्थे क्षत्रियस्य च । पंचमे वैश्यजातेश्च शूद्रस्य दशमेहनि ॥

"अस्थ्नां च संचयः प्रेते क्रियते देशगौरवात्" ॥ इति । देशभेदेनानयोर्व्यवस्था । **आश्वलायनेन** त्वन्योऽपि काल उक्तः ( ४।५।१ ) "सञ्चयनमूर्ध्वं दशम्याः कृष्णपक्षस्यायुजास्वेकनक्षत्रे" इति । कृष्णपक्षसंबंधिदशम्या ऊर्ध्वमयुग्मासु एकादशी त्रयोदशी पंचदशीनां मध्ये कस्यांचित्तिथा
२० वषाढाफल्गुनीप्रोष्ठपदाभिन्ने एकनक्षत्रे संचयनं कार्यमित्यर्थः । अयं च कालोऽनतीते आशौच-काले यथासंभवं ज्ञेयः । अतीतेऽपि तत्र संवत्सरान्तादिसपिंडीकरणपक्षे ज्ञेयः । यदा तु द्वादशे तत् क्रियते तत्र चास्य न संभवति तदा पूर्वोक्त एव संचयनानंतर**माश्वलायनेन** "श्राद्धमस्मै दद्यु-रि"त्येकोद्दिष्टविधानात्सपिंडीकरणोत्तरं च तन्निषेधात् । संचयनप्रकार**श्चाश्वलायनाद्युक्ते** ज्ञेयः ।
अत्रास्थिसंचयनविषये यागः पूजा ।तथा नामगोत्रपुरस्सरं । शुचिः स्नातादिः । अन्यासंभवादाह
२५ **देवताश्चेति । तत्र** श्मशाने । एवमग्रेऽपि । **चोह्यर्थे** । तात्पर्यार्थमाह । **अत इति** । तत्प्रकारश्च **ब्राह्मे**

"स्नात्वा त्रिरात्रं कुर्वीत प्रेतायोदकतर्पणम् ॥

"श्मशानदेवतायागं चतुर्थे दिवसे ततः । भवंति पूजिता यस्मात्तत्रस्थाः शंकरादयः ॥
"स्नातैः सुधौतवस्त्रैश्च श्मशानस्य समीपगैः । स्वजातिविहितैर्द्रव्यैर्यथाशक्त्या समाहितैः ॥
"मृन्मयेषु च भांडेषु कुंभेषु रुचकेषु वा । सुपक्वैर्भक्ष्यभोज्यैश्च पायसैः पानकैस्तथा ॥
३० "फलैर्मूलैर्वनोन्यश्च पूज्याः क्रव्याददेवताः । कैश्चिदर्घ्यं प्रदातव्यं कैश्चित्पुष्पं च शोभनम् ॥
"धूपो दीपस्तथा माल्यं कैश्च देयं त्वरान्वितैः । तत्र पात्राणि पूर्णानि श्मशानाग्रेः समंततः ॥
"कैश्चिद्देयानि सर्वाणि पानीयान्यक्षतानि च । निवेदयद्भिर्वक्तव्यं तैः सर्वैरनहंकृतैः ॥
"नमः क्रव्यादमुख्येभ्यो देवेभ्य इति सर्वदा । येऽत्र श्मशाने देवाः स्युर्भगवन्तः सनातनाः ॥
"तेऽस्मत्सकाशाद्गृह्णंतु बलिमष्टांगमक्षयम् । प्रेतस्यास्य शुभान् लोकान्प्रयच्छंतु च शाश्वतान् ॥

"अस्माकमायुरारोग्यं सुखं च ददताऽचिरम्।
"एवं कृत्वा बलीन्सर्वान्क्षीरेणाभ्युक्ष्य वाग्यतैः। विसर्जनं तु देवानां कर्तव्यं च समाहितैः॥
"ततो यज्ञियवृक्षोत्थां शाखामादाय वाग्यतः। अपसव्यं क्रमाद्वस्त्रं कृत्वा कश्चित्सगोत्रजः॥
"प्रेतस्यास्थीनि गृह्णाति प्रधानांगोद्भवानि च।
"पंचगव्येन संस्नाप्य क्षौमवस्त्रेण वेष्ट्य च। प्रक्षिप्य मृन्मये भांडे न वेत्याच्छादने शुभे॥ ५
"अरण्यवृक्षमूले वा शुद्धे संस्थापयत्यपि। गृहीत्वाऽस्थीनि तद्भस्म नीत्वा तोये विनिक्षिपेत्॥
"ततः संमार्जनं भूमेः कर्तव्यं गोमयांबुभिः। पूजा च पुष्पधूपाद्यैर्बलिभिः पूर्ववत् क्रमात्॥
"भूमेराच्छादनार्थं च वृक्षः पुष्करकोऽपि वा। पदको वा प्रकर्तव्यस्तत्र सर्वे विधानतः॥" इति।

अत्र भक्ष्यभोज्यपायसपानकफलमूलात्मको बलिः प्रधानम्। भक्ष्यादीनां पूजासाधनत्वोक्तेः[1]। अर्घ्यभक्तपुष्पाणि धूपो दीपः मालास्तंडुलादिपूर्णपात्राणि केषुचित्पात्रेषु पानीयानि यवा- १० द्यक्षताश्च। तदंगानि प्रधानांगानि चोक्तानि **गृह्यकारिकायाम्**
"शिरसो वक्षसः पाण्योः पार्श्वाभ्यां चैव पादतः। अप्रदक्षिणमस्थीनि गृह्णातीत्याह **गोभिलः**"॥ इति।

**पुष्करकः** पुष्करणीपट्टकश्चत्वरः। तदा चास्थिसंचयनदिने पूजां कृत्वा तत्कार्यमिति बोध्यम्।

**दशमेऽहनीति**। स्वस्वसूतकांतदिनोपलक्षणम्।"अंते च वाससां त्याग" इति **स्मृत्या** सूत- १५ कांते कर्तव्यवासस्त्यागसाहचर्यात्केशादित्यागोऽपि तत्रैवेति भावः। नायं नियम इत्याह। **तथेति**। **प्रयत्नत** इत्यनेन तस्यावश्यकत्वं सूचितम्। **आप्रदानत** इति व्याचष्टे। **श्राद्धेति**। एकादशाहिकश्राद्ध इत्यर्थः। तथा च चतुर्थादीनामप्ययं विधिः। अन्यथा वैयर्थ्यापत्तेः। स्वस्वदेशाचारेण व्यवस्थेति तत्त्वम्। एवं स्नानवत्सर्वेषां वपनादौ प्राप्ते आह। **वपनं**

मि. पृ. १७१. **चेति**। चेनोदकदानस्य [2]समुच्चयः। **अन्विति** तेषां चोदकसंस्पर्शने २० तावंतं कालमित्यादि। **सपिंडा इति**। एवं तेषामपि इतः सामान्येन प्राप्त आह। **तेषां चेति**। वयःकृतविशेषानादरेणेत्यर्थः। **इदमेवेति**। तंत्रेणार्थद्वयमस्येति भावः। तत्रैक उक्तः। द्वितीयमाह। **अनु पश्चादिति**। इतिरर्थसमाप्तौ। तथा च कनीयः सपिंडानां तस्य नियामकमिदमिति। **ज्येष्ठानां नेति**। 'कृतश्मश्रुकर्माण' इति **विष्ण्वादिवाक्यमप्यनुभावि**विषयतया नेयम्। मतांतरमह। **अनुभाविनः पुत्रा इतीति**। त एवेत्यर्थः। तत्र मानमाह। २५ **गंगायामिति**। मृते इत्यस्य तन्त्रेण भावकर्मप्रत्ययभेदेनोभयत्र यथासंख्यमन्वयः। **सोमे** तत्करणकाले। 'गुरोरिति' **पाठे** तु न तंत्रापेक्षा। अत्र पितृत्वादेः पुत्रत्वनिरूपितत्वेन एषामेव तदिति भावः। **अत्र केचिदितिसूचिता**। रुचिबीजं तु इत्थम्। पूर्ववचनेनैव पुत्राणां तद्धर्मातिदेशाच्च शिष्यस्यापि वपने सिद्धे "गंगायामि"त्यनेन मातापित्राचार्यमरणे तस्यावश्यकत्वमन्यत्रानियतत्वं कल्पते। अन्यथैतस्यानर्थक्यापत्तेर्वचनप्राप्तपरिसंख्याया अशक्यत्वात्तीर्थांतरेऽपि वपन- ३० सत्वाच्च। तथा चोक्तसामान्यवाक्यानामनेन नियंतुमशक्यत्वात्ततः कनिष्ठानां सपिंडानां वपनमिति युक्तमिति। तथा च **देवलः**

---

१ ख— त्वोक्के,। २ अ. १९ सू. १५।

"मुंडनं चोपवासश्च सर्वतीर्थेष्वयं विधिः। वर्जयित्वा कुरुक्षेत्रं विशालं विरजं गयाम्॥" इति।

विशाला बदरिकाश्रमः। अवंती वा। विरजमुत्कलदेशे यत्र धर्मराजेन गयासुरनाभौ विरजाद्रिः स्थापित इति **वायवीये**। 'दक्षिणदेशस्थ लोणारक्षेत्रमपि विरजं' इति **आदित्यपुराणे**। "नैमिषं पुष्करं गयामिति" क्वचित्पाठः। "विशालं पुष्करं गयामि"त्यन्यत्र। "वर्जयित्वा गयां गंगा-
५ मि"त्यन्यत्र पाठः।

"गंगां प्राप्य सरिच्छ्रेष्ठां वपनं यो न कारयेत्। स कोटिकुलसंयुक्त आ कल्पं रौरवं व्रजेत्॥"

इत्यादि तु यदि प्रामाणिकं तदा काशीप्रयागमायापुर्यादितीर्थसमीपस्थगंगापरमित्याहुः। अत्र कुरुक्षेत्रशब्देन काश्यपि **जाबालादि**श्रुत्यादेरित्यन्ये। अत्र गंगापदं च तीर्थमात्रोपलक्षणं।

"विना तीर्थं विना यज्ञं मातापित्रोर्मृतिं विना। यो वापयति लोमानि स पुत्रः पितृघातकः॥"

१० इत्युक्तेः। तेन गंगायामित्यादिनियमेनान्यत्र प्राप्त्यभावात् "वर्जयित्वा गयाम्"इत्यादि व्यर्थमिति।

"राजा कुमारी नारी च जीवतश्च पितुः सुतः। मुंडनं सर्वतीर्थेषु न कुर्याद्गर्भिणीपतिः॥"

इत्युक्तेः। रामभरतयुधिष्ठिरतत्पत्न्यादीनां मुंडनाश्रवणाच्च क्षत्रियादीनां तदनधिकार इति चापास्तम्। उक्तयुक्तेस्तस्य निर्मूलत्वाच्च। यदपि प्राच्याः अत्रत्य गंगापदस्य तत्रत्य सर्वतीर्थशब्दस्य बहुव्रीहिणा रूढ्या च प्रयागमात्रपरता अतस्तत्रैवोपवासवपने इति तदपि न बहुवचनानुत्पत्त्या-
१५ पत्तेः। देवप्रयागादिषु न बहुव्रीह्यर्थः इति न तान्यादाय बहुवचनोपपत्तिः। किंच तत्समाकारं वचन**मग्निवायुपुराणयोर्गयाप्रकरणे स्कांदे च प्रभासप्रकरणे** पठ्यतेऽतो न प्रयागमात्रपरता। **मात्स्ये** (अ. १०४।७।१०८।११)

"अन्ये च बहवस्तीर्थाः सर्वपापहराः शुभाः। तस्मात्कुरुष्व कौंतय सर्वतीर्थाभिषेचनम्"॥

इति **प्रयागप्रकरणे** पाठः। तत्र रूढेरसंभवाच्च "प्रयागं सर्वतीर्थेभ्यः प्रवदंत्यधिकं
२० विभो" इति **भारत**विरोधाच्च। अपि च विशालादिपर्युदासानुपपत्तिर्वचनस्य प्रयागमात्रपरत्वे प्राप्तेरभावात् दोषाधिक्यपरता तु वाक्यार्थानुपपत्तेरसंभवद्युक्तिका। सामान्यनिषेधेनैव सिद्धे विशेष-निषेधस्य हि तदाधिक्यपरता दृष्टा। एतेनास्य "प्रयागवचनं कुर्यात्" इत्यादिवचनांतरैर्विशेषे उप-संहारश्चतुर्द्धाकरणवदित्यप्यपास्तम्। सर्वतीर्थेष्विति सामान्यविधेः सर्वशब्दबहुवचनबलादशेष-तीर्थपरतया स्पष्टत्वेनोपसंहारासंभवात्। "यदेव विद्यया"इत्यादिवत् (छांदोग्य अ. १, १, १०)। तदुक्तम् (पूर्वमामांसायां) 'सामान्यविधिरस्पष्टः संह्रियेत विशेषत" इति। यदपि 'गंगायामि'त्यत्र
२५ भास्करक्षेत्रशब्देन प्रयागमिति तदवच्छिन्नगंगायां मुंडनमिति तदपि न प्रयागस्य प्रजापति-क्षेत्रत्वात्। "प्रजापतेरिदं क्षेत्रं प्रयागमितिविश्रुतमिति" **मात्स्यात्** (अ. १११ श्लो. २४)। "एतत्प्रजापतिक्षेत्रं त्रिषु लोकेषु विश्रुतमिति" प्रयागोपक्रमेण (मात्स्ये १०४।५ अ. ३६ श्लो. २०) **कौर्माच्च**।

"तत्र यः सवितुः क्षेत्रे प्राणांस्त्यजति मानवः। स सूर्यलोकमाप्नोति" इत्यादिना
३० तदंतर्गतकोणादित्यादेरेव भास्करक्षेत्रत्वप्रतीतेश्च। तत्र प्रयागे सप्तस्वित्युपात्तसंख्याविरोधाच्चेति दिक्। अत्र पित्रादिग्रहणं भर्तुरप्युपलक्षणम्।

---

१ वनपर्वे अ. ८३ श्लो. ७९।

"पुत्रः पत्नी च वपनं कुर्यादंते यथाविधिः । पिंडदानोचितोऽन्योऽपि कुर्यादित्थं समाहितः॥" इति **व्यासेन** पत्न्या अपि वपनविधानात् । यत्तु दाहकर्तुर्दाहांगभूतं वपनं प्रथमदिने **स्मृतिसंग्रहे** उक्तं "रात्रौ दग्ध्वा तु पिंडांतं कृत्वा वपनवर्जितम्। वपनं नेष्यते रात्रौ श्वस्तनी वपनक्रिया॥"इति क्वचित्तु सर्वपुत्राणामुक्तं तत् **मदनपारिजातादौ** प्रथमादिदिनकृतवपनस्यापि पुनराशौचांते वपन-मुक्तम् । तत्र सर्वत्र प्रमाणं मृग्यम् । **संग्रहवाक्यस्य** प्रागुक्तवचनैः पाक्षिकप्राप्तप्रथमादिनवपनस्य रात्रिदाहे रात्रावपि प्रसंगे तन्निषेधद्वारा पाक्षिकप्राप्तद्वितीयदिवसवपनपरतयोपपत्तेः । तत्र मूलं तु **संवर्त्तोक्तौ** 'दिने' इत्युक्तमेव । अत एव **संग्रहे** "दाहोत्तरं वपनवर्जितं पिंडांतं कृत्वा" इत्युक्तं इति दिक् ।

अन्यदप्याशौचांत्यदिनकृत्यं **ब्राह्मे** उक्तम्

"यस्य यस्य तु वर्णस्य यद्यस्मात्पश्चिमं त्वहः । स तत्र वस्त्रशुद्धिं च करोत्यपि समाप्य ह ॥

"*समं पिंड यथाशास्त्रमुदाहृतं । ग्रामाद्बहिस्ततो गत्वा प्रेतस्य श्वेतवाससी

"अन्त्यानामाश्रितानां च त्यक्त्वा स्नानं करोति च । श्मश्रुलोमनखानां च यत्त्याज्यं तज्जहत्यपि ॥

"गौरसर्षपकल्केन तिलकल्केन संयुतम् । शिरःस्नानं ततः कृत्वा तोयेनाचम्य वाग्यतः ॥

"वासोयुग्मं वनं शुक्लमव्रणं शुद्धमेव च [गृहीत्वा गां सुवर्णं च मंगलानि शुभानि च ॥

"स्पृष्ट्वा संकीर्तयित्वा च पश्चाच्छुद्धो भवेन्नरः ॥" इतीति दिक् ।

( उत्तरार्द्धः )

**निवृत्ताविति** । "शुचिना कर्म कर्त्तव्यमिति" शुचित्वस्य कर्मांगतया विधानादिति भावः । **केषुचित्** वक्ष्यमाणे तु । **आहेति** विधिमाहेत्यर्थः ।

भावप्रत्ययानुरोधेनाह। **अग्नीनामिति। तत्रेति।** तस्मिन्सति अर्थादग्निषु भवात्यर्थः । **बहुवचनांतयो** र्द्वंद्व इत्याह । **वैताना इति** । दिक्प्रदर्शनमिदं न त्वत्राग्रहः । कर्मप्रत्ययेन तु व्याख्यानमग्रिम-वद्युक्तं । तदेतद्ध्वनयन्नाह। **त्रेताग्नीति** । अनतिप्रसंगायाह । **प्रतीति** । समर्थोभयत्र योगरूढिरिति तात्पर्यं । पदार्थमुक्त्वा वाक्यार्थमाह । **ता इति । श्रुतिचोदनादिति** । न करणे हेतुरति प्रसंगात् । किंतु वैदिकी चेत्याशयेनाशेषेण व्याचष्टे। **वैदिक्य इति** । अत एवानन्वेततमंशं प्रश्नपूर्वं व्याचष्टे। **कथमिति । तदमिति**। प्रसक्तमिति भावः । श्रुतीत्यस्य प्रत्यक्षोपलभ्यमानश्रुतीत्यर्थ इत्याशयेनाह। **तथाहीति** । आङभिप्राप्तौ । तथा च नातिप्रसंगः ।

एतद्ग्रहणमपि तदुपादानमिति भावस्तदाह । **अत्र चेति । श्रौतत्वेति** । वैदिकी त्वेत्यर्थः । **स्मार्तेति** । अनुपलभ्यमानश्रुतिकेत्यर्थः । एवमग्रेऽपि । **तत्कालमिति** । 'कालाध्वनोरिति' द्वितीया । अत्र श्रौतपदेनौपासनमपि तस्यापि मूलकृता तत्वस्योक्तत्वात् । वैतानेत्युपलक्षणं नैमि-त्तिकस्यापीत्यपि तदुक्तिफलमन्यथाऽऽनर्थक्यं स्पष्टमेवेत्याशयेनाह । **श्रौतानां चेति** । वैतानौपा-सनानामिति शेषः । **नित्यनैमित्तिकेति** । अग्रिमन्मात्रस्य तत्साध्यानन्यगतिकनित्यनैमित्तिके-त्यर्थः । तथा च तदसाध्यानां तेषामपि नानुष्ठानमिति भावः । तत्र मानमाह । **यथाहेति** । **पारस्करोऽप्येवम्** । अत्रापि नित्यग्रहणमावश्यकोपलक्षणमित्याह । **आवश्यकेति** । तत्स्वरूप-

* अत्र तु त्रुटित मिवाभाति । १ व्या. सू. २।३।५ ।

माह । **नित्यनैमीति** । तन्मात्राणामित्यर्थः । तथा च नित्यशब्देनावश्यकनैमित्तिकानामप्युप-
संग्रह इति वैतानादिकर्मप्रतिप्रसवोऽपि तादृशनैमित्तिकस्यापि प्रतिप्रसिद्धेति भावः । 'दास'
इत्यस्योक्त इत्यत्रान्वयः । अयमस्यैव शेषो न पूर्वस्यापीति भावः । अयमुभयोः शेष इति तु
**मदनपारिजाते** । एकपदार्थमाह । **पाक्षिक इति** । अयं निषेधो नित्याग्निहोत्रादिषु न प्रवर्तत
५ इत्यर्थः । मूलादितात्पर्यार्थमाह । **अत इति** । तदसाध्यानां तेषां निवर्तकोक्तवचनवदत्र वचनाभावा-
दाह । **शौचेति** । शुद्धिभावादित्यर्थः । एवंरीत्या तेषामपि तस्य सिद्धिस्तथापि वैतानेत्यादि-
दृष्टांतेन तेषामपि तत्वभ्रांतिनिरासाय । 'नित्यानीति' निषेध इति न तदानर्थक्यमितिभावः । **अने-
नैव** मूलादितात्पर्याभूतेनाग्निमदित्याद्युक्तेनैव **प्रत्यूहत इति** । अशुचित्वात्सर्वश्रौतस्मार्तक्रिया-
विनिवृत्तौ प्राप्तायामिदमुच्यते । अग्निषु याः क्रियाः सायंहोमाद्यास्तान् प्रत्यूहेन्न प्रत्यस्येत् । प्रत्यूहो
१० निर्हासोऽननुष्ठानमिति **मेधातिथिः** । **इति** इत्यनेन तत्र नित्यानाह । **पंचेति** । **आदिना**
नैमित्तिकपरिग्रहः । होमं द्विविधं तत्र द्विविधाशौचे **छंदोगपरिशिष्टे**ऽपि

"होमः श्रौते तु कर्तव्यः शुष्कान्नेन फलेन वा । अकृतं हावयेत्स्मार्ते तदभावे कृताकृतम् ॥

"कृतमोदनसक्तादि तंडुलादि कृताकृतम् । व्रीह्यादि चाकृतं प्रोक्तमिति द्रव्यं त्रिधा बुधैः" ॥ इति ।

एवं चाग्निसाध्यनैमित्तिककर्मभिन्नकर्मस्वनाधिकारस्य शौचाभावादेव सिद्धत्वात्प्रतिप्रसवां-
१५ तराभावाच्च "पंचयज्ञेत्यादिक"मनुवाद एव । एवं **पैठीनसि**वाक्येऽपि तत्पर्युदासार्थं नित्यानित्या-
नुवाद एवेति बोध्यम् । एवमपि वैश्वदेवस्याग्निसाध्यत्वेन 'प्रत्यूहेदिति' **मनोः** कर्तव्यत्वापत्ति-
रूपातिप्रसंगप्राप्तावाह । **वैश्वेति** । तस्यापि नित्यत्वादिति भावः । **तेनैव** । **संवर्तेनैव** । एवं
चोक्तनित्यनैमित्तिकभिन्नानां नित्यनैमित्तिकानामपि निवृत्तिः काम्यानां तु सर्वेषां निवृत्तिरिति
तत्वम् । यद्यपि 'पंचयज्ञे'त्यनेनैव वैश्वदेवस्यापि निषेधः सिद्धस्तथापि येषां तैत्तिरीयादीनां पंच-
२० यज्ञभिन्नो वैश्वदेवस्तदर्थः पृथक्निषेध इति बोध्यम् । संध्यावंदनस्योक्तरीत्याऽग्निसाध्यत्वेन शौचा-
भावादेवाप्राप्तौ विशेषं वक्तुं तदनुवादकम् । एवमग्रेऽपि वचनं तावदाह । **सूतके इति** । इदं
शावस्याप्युपलक्षणम् । "संध्यात्रयं तु कर्तव्यमिति" **मूलोक्तेः** । तथा च **वैष्णवे** ( तृतीयांशे
अ. ११, श्लो. ९७ )

"सर्वकालमुपास्थानं संध्ययोः पार्थिवेष्यते । अन्यत्र सूतकाशौचविभ्रमातुरभीतितः ॥"

२५ मरीचिप्रक्षेपादिकमित्यत्रादिशब्दः प्रकारेण तु प्रभृताविति न स्मृत्यंतरविरोधः । **सावित्र्येत्य**नेन
मध्याह्ने "हंस"इत्यस्य निवृत्तिः । **अंजलिमित्येकवचनेनैकांजलिरेव** । अत्रेदं तत्वम् । यद्यपि

"संध्यामिष्टिचरुं होमं यावज्जीवं समाचरेत् । न त्यजेत्सूतकेनापि त्यजन् गच्छेदधो द्विजः" ॥

इति **पुलस्त्योक्ते**रिष्टिराहिताग्नेर्दर्शपूर्णमासादिका चरुरनाहिताग्नेः स्थालीपाकादिरूपः ।
होमो द्विविध इत्यार्थिकापातस्यायथास्थितकर्तव्यता प्राप्ता तथापि

३० "सूतके मृतके चैव संध्याकर्म समाचरेत् । मनसोच्चारयेन्मंत्रान्प्राणायाममृते द्विज" ॥ इति
तदुक्तप्रकारेणैव कार्यं । "प्राणायाममृते" इति न मानसत्वे मुखनासिकासंचारिवायुनिरोधेन
तन्मंत्रपाठेन तस्य सिद्धत्वात् । किंतु मंत्रेष्वेव । तथा चामंत्रकः प्राणायामः कार्य इत्युक्तं भवति ।
प्राणायाम एव न कार्य इति तु **मदनपारिजातोक्तं** चिंत्यम् । वक्ष्यमाणभारद्वाज्यविरोधात् ।

अनेन प्राणायामभिन्नं सर्वं मानसमंत्रैः कार्यमिति सूचितम्। यद्यपि तथापि अर्घ्यदाने मंत्रोच्चारस्तदुत्तरकर्मलोपो बोध्यः। सूतके साविऽत्र्येत्युक्तपैठीनसेः साविऽत्र्याः प्राप्तत्वात्पुलस्त्योक्तमानसत्वनिवृत्त्यर्थमेव तत्र सावित्रीग्रहणमिति मदनानुयायिनः केचित्। तन्न। उक्तरीत्या ग्रहणस्य साफल्यात्। तस्माद्भारद्वाजोक्तेस्तथेति यक्तं। तथा च भारद्वाजः

"सूतके मृतके कुर्यात्प्राणायाममममंत्रकम्। तथा मार्जनमंत्रास्तु मनसोच्चार्य मार्जयेत्। ५
"गायत्रीं सम्यगुच्चार्य सूर्यायार्घ्यं निवेदयेत्। मार्जनं तु न वा कार्यमुपस्थानं न चैव हि"॥ इति।
ननु ताल्वादिव्यापाराभावेनोच्चारणसंभवात्कथमिदमिति वाच्यम्। सूक्ष्मतरताल्वादिव्यापारेण सूक्ष्मतरस्वोच्चारणसत्वात्। जपे मंत्राणां त्रैस्वर्येणैव ज्ञानस्यावश्यकतया तस्य च तत्तत्स्थानेषूच्चदेशाद्युपलभ्यमानत्वरूपतया तस्यावश्यकत्वादिदमेव मानसमुच्चारणम्। अत एव मानसा जपलक्षणे १०

"धिया यदक्षरश्रेणीवर्णस्वरपदात्मिकाम्। उच्चरेदर्थसंस्मृत्या स उक्तो मानसो जपः"॥

इत्यत्रोच्चरेदित्युक्तमेव पुस्तकदर्शनस्थलेऽपि बोध्यम्। अत्र दशवारं गायत्रीजपोऽपि कार्यः। तथा चाश्वलायनः। "आपन्नश्चाशुचिः काले तिष्ठन्नपि जपेद्दशेति।" आपन्न आपद्ग्रस्तः। तं प्रत्यग्निस्मृतावंतरहानावप्यर्घ्यस्यावश्यकतोक्ता।

"जलाऽभावे महामार्गे बंधने त्वशुचावपि। उभयोः संध्ययोः काले रजसा चार्घ्यमुत्सृजेदिति"॥ १५

अशुचौ अशौचे। तथा च 'सूतके' इत्यादिमरीच्यादिवाक्यं च स्वरूपतस्तत्र संध्यानिषेधपरमपि तु मंत्रोच्चारणपूर्वकसंपूर्णसंध्यानिषेधपरमिति। अनग्निसंध्यत्वेऽपि वचनात्तदेकदेशानुष्ठानमिति न कोऽपि विरोध इति।

एवमनग्निसाध्यपंचयज्ञादिनिवृत्तेः प्रागुक्तत्वेन प्रागुपस्थित्या तत्प्रसंगेन संध्यावंदने विशेषमुक्त्वा "वैश्वदेवस्ये"त्यादिपश्चादुक्तरीत्या प्रागुक्ते मूलीये एव वाचनिकं विशेषमाह। २० यद्यपीत्यादिना। तथापीति। कार्या इति णिजगर्भमितिभावः। प्रागुक्तपैठीनस्य व्यवहितं तत्प्राह। अन्ये इति। अन्ये असपिंडा एतानि कुर्युरित्यर्थः। अन्येनासपिंडेनैतानि वैतानौपासनानि कारयेदिति तात्पर्यार्थः। पारस्करोऽप्येवम्। यत्तु "अत्र वैतानान्यपि प्रकृतानीति" मिताक्षरातोऽवगम्यत इति तत्तु स्मृत्याद्यदर्शनमूलकम्। करणपक्षस्वीकारे इदमिति तु मदनपारिजाते अस्य सामान्यविषयकत्वप्रकटनायैवमसत्यतरमाह। बृहस्पतिनेति। २५ हावयेदन्येन होमं कारयेत्। हापयेत् त्याजयेत्। अत्र त्यागानुकूलव्यापारानुकूलव्यापारनिषेधे विशेषणस्य त्यागानुकूलव्यापारस्यापि निषेध इति बोध्यम्। अनुपलभ्यमानश्रुतिकस्मार्त्तत्वेन दानादिवदन्यत्रापि निवृत्तिप्रसंगे विशेषं वाचनिकमाह। तथेति। पिंडयज्ञः पिंडपितृयज्ञः। चरुः श्रवणाकर्माश्वयुज्यादिकः। स्थालीपाकश्च। होमः द्विविधो नित्यः। असगोत्रः असपिंडः सपिंडनिषेधस्य शौचनिमित्तत्वात्। तथा चाशौचरहितेन ब्रह्मचारिणाऽसपिंडेनापि होतव्यमिति ३० गम्यते। अस्यान्तर्ग्रहणं श्रौतस्याप्युपलक्षणम्। "वैतानौपासना" इत्यनेन सामान्यतोऽधिकारे ज्ञातेऽस्य विशेषप्रतिपादकत्वात्।

एवं सति प्रसक्तप्रागुक्तव्याघ्रपादविरोधपरिहारायात्रापि विशेषमाह । **यद्यपीति** । **पैठीनसि**वचनात्प्रोक्तमिति भावः । **स्वयं** । स्वयमेव । तत्र बीजमाह । **तस्येति** । अन्यस्वत्वाभावादितिभावः । **अत एवेति** । एतद्विषयकमेव तेन तत्फलकशुद्ध्यर्थं स्नानविधानमित्यर्थः । होमांशे मि. पृ. १७२ विरोधं परिहरति । **यत्पुनरिति** । **काम्येति** । कामहोम इत्यर्थः । त्यागभिन्ने
५ त्वनाशौचित्वप्रयुक्तं कर्तृत्वमन्यस्यैव प्रोक्त**पैठीनसे**स्तस्माद्वैतानिकेऽपि त्यागमात्रे स्वयं कर्तृत्वमन्यत्र त्वन्यस्यै स्मार्तवदिति तात्पर्यम् । दीक्षितस्य तु याजमानमात्रेऽधिकारः । 'ऋत्विजां दीक्षितानां चे'ति वक्ष्यमाण**मूले** दीक्षितग्रहणात् । अन्यथा "वैतानोपासना"इत्यनेनैव **व्याघ्रपादो**पोद्बलितेन सिद्धे तदानर्थक्यापत्तेरिदं च तत्रैव व्याख्याने एव व्यक्तीभविष्यतीति व्याख्यातृसम्मतः पंथाः । अन्ये तु सर्वे तत्कल्पसूत्रभाष्यकारादयो निबंधकाराः सार्वजनीन-
१० श्रौतस्मार्तविभागवशाद्यथाश्रुतसमस्तवचनानुसारेण वैतानिके सर्वत्रापि स्वयंकर्तृत्वं वदन्ति ।

"कर्म वैतानिकं कार्यं स्नानोपस्पर्शनात्स्वयम् । जन्महान्योर्वितानस्य कर्मयोगो न विद्यते ॥

"शालाग्नौ केवलो होमः कार्य एवान्यगोत्रजैः ।" इत्यादीनि च **हारीतजाबालादि**वचनानि स्पष्टार्थानि लिखन्ति केचिन्मतमपि वक्ष्यते । वस्तुतस्तु यत्र सूत्रे विशिष्य यथोक्तं श्रौते स्मार्ते च तत्तथैवानुष्ठेयम् । अन्यत्र तु **विज्ञानेश्वर**संमतसरणिरेव **हारीतजाबालादि**वाक्या-
१५ नामपि तद्रीत्या योजयितुं शक्यत्वादेवं वक्ष्यमाणमतसाधकस्यापीति तत्वं बोध्यम् । तथा सूतकादौ ग्रहणे सति स्नानदानश्राद्धादावदोषः । तथा च **वसिष्ठः**

"चंद्रसूर्यग्रहे स्नायान्मृतके सूतकेऽपि च । अस्नायी मृत्युमाप्नोति स्नायी मृत्युं न विंदति" ॥ तथा

"मृतके सूतके चैव न दोषो राहुदर्शने । तावदेव भवेत् शुद्धिर्यावन्मुक्तिर्न दृश्यते" ॥

इति । प्राच्यास्तु स्नानमेव कार्यं न श्राद्धदानादीत्याहुस्तन्न । द्वितीयवचनाद्वैयर्थ्यापत्तेः । प्रारंभा-
२० भावेऽपि कन्याया अभार्ये च । मुहूर्तांतराभावे[2] च कूष्मांडहोमादिपूर्वं विवाहप्रारंभोऽप्युक्तो **विष्णुना**

"अनारब्धविशुद्ध्यर्थं कूष्मांडैर्जुहुयात् घृतम् । गां दद्यात्पंचगव्याशां ततः शुध्यति सूतकी ॥" इति

इदं वाक्यमेतादृशविषये एव सार्थकमिति न सर्वविषयम् । कूष्मांडैः कूष्मांडमंत्रैः । संक्रांतिनिमित्तकस्नानादावपि नाशौचमित्युक्तं **प्रयोगपारिजाते** नित्यस्नानाचमनभोजननियमाग्नि-
२५ स्पर्शनेषु नाशौचम् । अन्यत्तु नित्यनैमित्तकादि न भवति इति दिक् । केचित्तु यजमानेनाशौचमध्येऽग्निहोत्रहोमः औपासनहोमश्च कर्तव्यो न कर्तव्यो वेति संशयेनेति तावत्प्राप्तम् । कुतः

"दशाहं शावमाशौचं सपिंडेषु विधीयते । जननेऽप्येवमेवं स्यान्निपुणां शुद्धिमिच्छताम् ॥"

इत्यादि**मन्वादि**[3]स्मृतिप्रमाणादशुचित्वात् "शुचिना कर्म कर्तव्यम्" इत्यादिवचनादशुचेरनधिकारात् । अत एव "सूतके कर्मणां त्यागः संध्यादीनां विधीयते" इति **संवर्तो**क्तं ।

३० "सूतके तु समुत्पन्ने स्मार्तं कर्म कथं भवेत् । पिंडयज्ञं चरुं होममसगोत्रेण कारयेत् ॥"

इति **जातूकर्ण्यो**क्तं च संगच्छते । तस्मादाशौचिना यजमानेनाग्निहोत्रहोमो गृह्याग्निहोमश्च न कर्तव्य एवेति चेन्न "वैतानौपासनाः कार्याः क्रियाश्च श्रुतिचोदनात्" इति **याज्ञ-**

---

१ ख- व्यक्तिर्भविष्यतीति । २ अभावे च—इतिपाठः । ३ अ. ५ श्लो. ५९ ।

वल्क्योक्तेः ( प्रा. १७ ) । वैतानास्त्रेताग्निसाध्या अग्निहोत्रदर्शपौर्णमासाद्याः क्रिया उच्यंते प्रतिदिनमुपास्यत इत्युपासनो गृह्योऽग्निस्तत्र भवा औपासनाः सायंप्रातर्होमक्रिया उच्यंत इति ता वैतानौपासना वैदिक्यो क्रियाः कार्याः । कथं वैदिकत्वमिति चेत् । श्रुतिचोदनात् । तथा हि "यावज्जीवमग्निहोत्रं जुहुयादि"त्यादिश्रुतिरग्निहोत्रादीनां चोदना स्पष्टैव । तथा "अहरहः स्वाहा कुर्यादि"त्यादिश्रुत्यौपासनहोमोऽपि चोद्यते । अत्र च श्रौतत्वविशेषणोपादानात्स्मार्तक्रियाणां दानादीनामननुष्ठानं गम्यते । अत एव व्याघ्रपादेनोक्तम्

"स्मार्तकर्मपरित्यागो राहोरन्यत्र सूतके । श्रौते कर्मणि तत्कालं स्नातः शुचिमवाप्नुयात्" ॥ इति

मिताक्षरायामुक्तं । अत स्नानाचमने तात्कालिके अग्निहोत्रस्य होमार्थं शुद्धिस्तात्कालिकी भवेदित्यनंतदेवधृतगोभिलवचनात् "कर्म वैतानिकं कार्यं स्नानोपस्पर्शनात्स्वयमिति" विज्ञानेश्वरनंदपंडितादिधृतहारीतवचनाच्च । अत्र वैतानिकग्रहणमौपासनहोमोपलक्षणार्थं तस्यापि श्रौतत्वेन मिताक्षरोक्तेरिति कौस्तुभकृतः । तस्मादग्निहोत्रहोमवदौपासनहोममपि यजमानः स्नात्वा स्वयमेव कुर्यात् । असंभवे त्वसगोत्रेण कारयेत् । तदाह मदनपारिजाते जातूकर्ण्यः "संध्यामिष्टिं चरुं होमं यावज्जीवं समाचरेत् । न त्यजेत्सूतके चापि त्यजन्गच्छेदधो द्विजः ॥" इति ।

इष्टिराहिताग्नेर्दर्शपूर्णमासात्मिका । चरुरनाहिताग्नेः स्थालीपाकादिरूपः । स चाशौचरहितेन कारणीयः । तदाह जातूकर्ण्यः

"सूतके तु समुत्पन्ने स्मार्तं कर्म कथं भवेत् । पिंडयज्ञं चरुं होममसगोत्रेण कारयेत्" ॥

पिंडयज्ञः पिंडपितृयज्ञः । चरुः श्रवणाकर्माश्वयुज्यादिकः स्थालीपाकश्च । होम औपासनः । सोऽसगोत्रेणापि कारणीय इत्याशयेन तदुक्तिः । न तु तत्रापि नियमः "अग्निहोत्रतुल्यत्वादिति" कौस्तुभकृतः । स्मृत्यर्थसारेऽपि जाताशौचे च मृताशौचे च त्रेताग्निसाध्याग्निहोत्रदर्शपूर्णमासाद्या नित्यनैमित्तिकाः क्रियाः कार्याः । औपासनाग्निसाध्याश्च सायंप्रातर्होमदर्शस्थालीपाकाद्या नित्यनैमित्तिकाः श्रुतिचोदितत्वात्क्रियाः कार्या एव । असंभवे त्वसगोत्रेण हावयेत् । न सर्वथा हापयेत् स्मार्तत्वेऽपि पिंडपितृयज्ञश्रवणाकर्माश्वयुजीकर्मादिकमसगोत्रेण कारयेत् । न हापयेत् । यजमानस्तु स्नात्वाचाम्योद्देशत्यागौ कुर्यादिति यद्यपि सांगे कर्मण्यकर्तृत्वं तथापि द्रव्यत्यागात्मकं प्रधानं स्वयं कुर्यात । तस्यानन्यनिष्पाद्यत्वादिति विज्ञानेश्वरः । पारस्करस्तु औपासनहोमादौ विकल्पमाह ( ३।१०।२२-२४ ) "नित्यानि विनिवर्तेरन्वैतानवर्जं शालाग्नौ चैकं अन्य एतानि कुर्युरिति" । अत्र नित्यशब्देनावश्यकनैमित्तिकानामपसंग्रहः । अतो वैतानानां स्मार्तानां च कर्मणां प्रतिप्रसवेऽपि नैमित्तिकस्यापीति कस्यापि प्रतिप्रसवः । काम्यानां तु सर्वत्र सर्वथाऽपि निवृत्तिः । वितानस्त्रेताग्निस्तत्र क्रियमाणानि नित्याग्निहोत्रादीनि वैतानानि वर्जयित्वा "नित्यानि विनिवर्तेरन्नि"त्ययं निषेधो नित्याग्निहोत्रादिषु न प्रवर्तत इत्यर्थः । अतः स्वयमेव कुर्यात् । शालाग्निगृह्याग्नितत्संबंधिनां सायंप्रातर्होमस्थालीपाकादीनां पाक्षिकी कर्तव्यता करणप्रकरणं वा शास्त्रार्थं इति पारिजाते । तत्र शक्तौ करणमशक्तावकरणमिति तात्पर्यं । अकरणपक्षेऽसपिंडेनान्येनैतानि कारयेन्न सर्वथा त्यजेदित्यर्थः । मिताक्षरायां पैठीनसिरपि "नित्यानि

---

१ ख-भाषा ।

विनिवर्तेरन् शालाग्नौ चैके" इति । नित्यानि विनिवर्तेरन्नित्यविशेषणावश्यकानां निवृत्तौ प्रसक्तायां वैतानवर्जमित्यग्नित्रयसाध्यावश्यकानां पर्युदासः । "शालाग्नौ चैक" इति गृह्याग्नौ भवानामप्यावश्यकानां पाक्षिकः पर्युदास उक्त इति **विज्ञानेश्वरः** । तमेवानुसरंति दाक्षिणात्याः । अत्रैकग्रहणं पूजार्थम् । तेनोपासनाग्निसाध्यमावश्यकं कार्यमेवेति **हारलतायाम्** । तत्राऽग्र-
५ पक्षे येषां बह्वृचादीनां द्वादशरात्रमहोमेऽपि नाग्निविच्छेदस्तैर्न कार्यः । येषां तु त्रिरात्रमहूयमानोऽग्निर्लौकिकः संपद्यते तैस्तैत्तिरीयाद्यैः कार्य इति व्यवस्थापयंति तन्न सहंते न्यायविदः । प्रमादादिना द्वादशरात्रमहोमेणाग्निमविच्छेदेऽपि बुद्धिपूर्वमहोमेनाग्निच्छेदे प्रमाणाभावात् । यत्त्वा**श्वलायनः** "स्मार्ताग्निः सूतके शावे स्वयं न जुहुयात् द्विजः । श्रौताग्निस्तु सवृद्धत्वात्समाप्ते वा स्वयं हुनेदिति" ॥ तत्समारूढपरम् । तदाह **स** एव

१० "स्मार्ताग्निरात्मनोऽन्येषामभावे सूतकादिषु । समारोप्य तदंते तु विहृत्य जुहुयात्स्वयम्" ॥ इति ।

**मनुरपि** ( ५।८३ )। "प्रत्यूहेन्नाग्निषु क्रिया" इति । एतेन **प्रयोगरत्नं** व्याख्यातं तस्मादैच्छिको विकल्पः । एतदुक्तं **बृहस्पतिना**

"सूतके मृतके चैव अशक्तौ श्राद्धभोजने । प्रवासादिनिमित्तेषु हावयेन्न तु हापयेत्" ॥ इति ।

यत्तु "आशौचे होमदानप्रतिग्रहस्वाध्याया निवर्तन्ते । नाशौचे कस्यचिदन्नमश्नीयादिति"
१५ **विष्णुवचनं** तत्र होमो वैश्वदेवाख्यः । न त्वग्निहोत्रौपासनाख्यः । तस्य 'वैतानोपासना'इत्यादिपूर्वोक्त**याज्ञवल्क्यवाक्येन** श्रौतत्वोक्त्या प्रबलत्वेनाऽऽबाध्यत्वात् न्याय्यम् । तस्माद्यथोक्तमेव

"विप्रो दशाहमासीत वैश्वदेवविवर्जितः । पंचयज्ञविधानं तु न कुर्यान्मृतिजन्मनोः" ॥ इति ।

**संवर्तोक्तेः** । पुनर्वचनं "दानं प्रतिग्रहो होमः स्वाध्यायश्च विवर्तत" इति तत्काम्यहोमाभिप्रायकमेवेति **निर्णयामृते** वैश्वदेवाभिप्रायकमिति **विज्ञानेश्वरपारिजातौ** । तस्मादाशौचमध्ये यजमानः
२० स्नात्वाऽऽचम्य स्वयमग्निहोत्रहोमं कुर्यादौपासनहोमं स्वयं कुर्यादन्येन वा कारयेदिति स्मृतिद्वैविध्याविकल्पः । तस्मादाशौचिना यजमानेन स्वयमौपासनहोमे कृतेनाग्नेर्लौकिकत्वमिति सिद्धमिति **यमोक्तम्** । विशेषांतरमाह । **तथेति** । अर्वाआद्यचा सूतकान्नमित्यर्थः । असकुल्यैरिति भावः । न्यूनाधिकसंग्रहायाह । **दशाहानीतीति** । सूतकपदमाशौचमात्रपरम् । एवमग्रेऽपि । पूर्वोत्तरार्द्धमाह । **सूतके त्विति** । तदेवान्नं **कुलस्य तु अदोषं** भोज्यमित्यर्थः । इत एव पूर्वार्धमसकुल्यपरम् ।

२५ एवं सामान्येनोक्ते निषेधे विशेषमाह । **अयं चेति अन्यतरेणेति** । तथा च दात्रा आशौचनिमित्ते ज्ञाते भोक्त्रा अज्ञानेऽपि दातुराशौचित्वात्तत्स्वामिकेऽन्ने प्रवर्तत एव । अज्ञानप्रवृत्तत्वात् प्रायश्चित्ताल्पत्वं भोक्तुः । दात्राज्ञातेऽपि भोक्त्राज्ञाते तु तद्द्रव्यस्याशौचिस्वामिकत्वाभावेऽपि वचनात्प्रवर्तत इति भावः । उभाभ्यां दातृभोक्तृभ्यां यद्यपि दात्रा सूतकाद्यपरिज्ञाते दातुस्तन्नास्ति जननादिज्ञानस्यैव तत्र निमित्तत्वात् तथापि दातृपरिज्ञानं केवलं भोक्त्राज्ञातेऽपि वचनाद्भोजनदोषो भोक्तुरेव । इत्थं हि तदुपपत्तिः । दातुर्ज्ञानं सूतकादिप्राप्तौ निमित्तम् । भोक्तुर्ज्ञानं भोजन-
३० निवृत्तौ निमित्तम् । सूतकादिस्वरूपानिष्पत्तिरेकोंशस्तज्ज्ञानं चापरः । तदुभयमिलितं निमित्तम् । एवं च निमित्तैकदेशस्य प्रसवादेर्भोक्त्रा ज्ञातत्वादेकविभावितन्यायेनान्यस्यापि संभाव्यमान-

केवलभोक्तृज्ञानेऽपि भोजननिवृत्तिः । यदा तु दात्रा ज्ञानं न भोक्त्रा तदा भोक्तुरेव च नादोषो न दातुर्भोजननिमित्तो दोषयितुः सूतकान्नभोजयितृत्वदोषोऽस्त्येव । अयं च भोजयितृत्वनिमित्तो दोषः सूतके मृतके विहितप्रथमादिदिननवश्राद्धदिनभिन्नकाले ज्ञेयः । तत्काले विहितत्वात् । तथा च **ब्राह्मे**

"अपि दातृगृहीत्रोश्च सूतके मृतके तथा । अविज्ञाने न दोषः स्याच्छ्राद्धादिषु कदाचन ॥"

"विज्ञाने भोक्तुरेव स्यात्प्रायश्चित्तादिकं क्रमात्" इति । आदिना अशौचं । प्रायश्चित्तं चाग्रे स्फुटीभविष्यति"।

एवं च तत्र भोक्तृग्रहणं तन्मात्रेण ज्ञातेऽपि तस्य दोषप्रतिपादनार्थम् । न तु दातृमात्रेण ज्ञाते तस्य दाननिषेधातिक्रमनिमित्तदोषनिवृत्त्यर्थमपि अर्थद्वयकरणे वाक्यभेदापत्तेः । एवं च **ब्राह्ममपि** "भोक्तुः स्यादेवेति" व्याख्येयम् । १०

पृ. १७२ पं. ८. विशेषांतरमाह । **तथेति** । **कृतमिति** । आशौचसंभावनयेति भावः । **अन्नं** सिद्धान्नमनुज्ञातभिन्नमपि चान्नं । **मृतेति** समाहारद्वंद्वः । एवमग्रेऽपि ।

सिद्धान्नभोजनविषये विशेषान्तरमाह । **तथाऽपरोऽपीति** । अत्र भुंजानेष्विति विवाहादिष्वप्यपृथक्कृतान्नभोजने अन्यत्र च ब्राह्मणभोजने बोध्यम् । अवशिष्टं चान्नं त्याज्यम् ।

"भोजनार्धे तु संभुक्ते विप्रैर्दातुर्विपद्यते । यदि कश्चित्तदोच्छिष्टं शेषं त्यक्त्वा समाहिताः ॥ १५

"प्राचम्य परकीयेन जलेन शुचयो द्विजाः ।" इति **ब्राह्मात्** । श्राद्धे तूक्तं ।

पृ. १७२ पं. १२. अथ द्रव्यत आशौचापवादरूपविशेषमाह । **तथेति** । तत्स्वामिकत्वेऽपीत्यर्थः । **दोषाभावः** तत्स्वामित्वहेतुकप्रतिग्राह्यत्वायोग्यत्वरूपाशौचाभावः । द्रव्येषु चाशौचमाशौचिस्वामिकत्वकृतोऽप्रतिग्राह्यत्वादिप्रयोजकोऽतिशयविशेषश्चेतनाशौचिवत् । अन्येष्वप्यौपाधिकाशुचिषु एवमेवेति केचित् । वस्तुतस्तु तत्स्वामिकत्वकृतं प्रतिग्रहाद्ययोग्यत्वमेव द्रव्येष्वाशौचं कृष्णाजिनादि- २०
वत् । न त्वतिविशेषो मानाभावात् । चेतनेषु तु

"दानं प्रतिग्रहो होमः स्वाध्यायः पितृकर्म च । प्रेतपिंडक्रियावर्जमाशौचे विनिवर्त्तते ॥"

इति दानाद्यधिकारे आशौचस्य हेतुत्वोक्तेः । कर्माधिकाररूपब्राह्मण्यादिवन्न दानाद्यनधिकार आशौचं । किंतु तत्तद्धेतुभूतो जननादिजन्योऽतिशयविशेषः स्वीक्रियते । ब्राह्मण्यादिजातिवत् । अन्यथा हेतुहेतुमद्भावानुपपत्तेः । उदकदानाद्यधिक्रमस्याप्याशौचत्वापत्तेश्च । २५

ननु द्रव्येषु तथा किंचिदिति तदेव तेषु तत् द्रव्यविशेषगतमेवाशौचिस्वामिकत्वं तत्र हेतुर्न तु द्रव्यमात्रगामीति शास्त्रैकसमधिगम्यत्वाद्यथाशास्त्रं अतिशयविशेषवादिनाऽपि चेदं वाच्यमेव । तत्र तस्य प्रयोजकत्वस्वीकारात् । यत्तु प्राच्याः अशुचिना विनियोजितान्यमनधिकारिविनियोजितत्वात्फलाजनकत्वमेव द्रव्येष्वाचंस्वतस्तु गतानि शुचीन्येव अन्यथैकतरेण भ्रात्रा जननादौ ज्ञाते तस्याशौचित्वासत्स्वामिकत्वेन तत्द्रव्याणामपि अतिशयविशेषरूपे कर्मानर्हत्वरूपे वाऽशुचित्वे सति तैरेव द्रव्यैरज्ञात- ३०
हेत्वनाशौचिभ्रात्रंतरेण कृतं कर्माशुचिद्रव्यकृतत्वाद्वा स्यात् न स्याच्च ततः क्रीतद्रव्येणान्येषां कर्मसिद्धिः । क्रयस्याशौचापनायकत्वे मानाभावात् । शुचीनामेव तु तेषामनधिकारिविनियोजितत्वेन फलानर्थकत्वे शुचिना भ्रात्रंतरेण क्रेत्रा च विनियुज्यमाने फलासिद्धिर्युक्तेत्याहुस्तन्न ।

तथा सति ततः क्रय इव प्रतिग्रहेऽपि दोषाभावापत्तेः। क्रीतैरिव प्रतिगृहीतैरपि कर्मसिद्ध्यापत्तेश्च। अनधिकारित्वेनाशौचिना विनियुक्तानां फलाजनकत्वेऽपि प्रतिग्रहीतृविनियुक्तानां तस्याप्रमाणकत्वात्।

न चानधिकारिकृतत्वेनाशौचिकर्तृकदानस्य फलाजनकत्वात्ततः प्रतिगृहीते स्वत्वमेव ५ नास्तीति वाच्यम्। शास्त्रीयफलाभावेऽपि स्वत्वस्य लौकिकत्वेन तदनुत्पत्तौ मानाभावात्स्वस्य लौकिकत्वं **लिप्सासूत्रे** मतद्वयेऽपि उक्तमिति प्राक् प्रपंचितं व्याख्यात्रा 'यत्त्वेकतरेणेत्यादि'। तन्न। भ्रात्रंतरेण परिग्रहसंपादितासाधारणस्वत्वे द्रव्ये अशुचिभ्रात्रंतरस्वत्वाभावेन तत्राशुचित्वाभावात्साधारणस्वत्वाधिकरणस्य यथेष्टविनियोगानर्हत्वेन कर्मानुष्ठानार्थं तस्यावश्यकत्वात्। यच्च क्रयस्येत्यादि तदपि न स्वत्वापनयनद्वारैव। तस्य द्रव्याशुद्ध्यपनायकत्वात् तस्याशौचिस्वत्व- १० प्रयुक्तत्वात्। तत्रैव द्रव्ये कालस्य चेतनाशुद्ध्यपनयनद्वारा तदपनायकत्ववदिति दिक्।

**मधु क्षौद्रं**। समाहारद्वंद्वः। एवमग्रेऽपि। **पयः** क्षीरम्। **तिल**ग्रहणं तैलस्याप्युपलक्षणम्। **पण्येष्विति**। तत्र तत्स्वामिनो वाणिजादेराशौचेऽपि अप्रतिग्राह्यत्ववदक्रेयत्वं नास्ति तद्वस्तुक्रियकरणेऽपि न दोष इत्यर्थः। **भक्ष्यजातं** तत्समूहः शष्कुलीलड्डुकादि। **एवे**नाशौचिहस्तमात्रनिरासः। तथा च स्वयमित्युपलक्षणम्। आशौचिहस्तान्न ग्राह्यमित्येतावन्मात्रं विवक्षितम्। १५ तथा तदनुज्ञयाऽपरहस्तादपि ग्राह्यम्।

पृ. १७२ पं. १५. पूर्वोक्ताऽविरोधायाह। **पक्वापक्वाभ्येति**। तत्विवत्यर्थः। अनन्यभावे **विषय**शब्दः। तत एव तद्ग्राह्यं नान्यस्मादित्यर्थः। **पयःपिबेदिति**। "व्रतीभवेदिति" पाठान्तरम्।

**मरीच्य**विरोधायाह। **अन्नेति**। **पक्वशब्दः** पक्वान्नशब्दः। आमान्नग्रहणं च भक्ष्यस्याप्युपलक्षणम्। पूर्वैकवाक्यत्वात्। योगविभागकरणाच्च। न पण्येषु स्वयंग्रहनियमः। मृतसूतकग्रहणं २० च स्वयंग्रहविधौ कृत्रिमस्याप्युपलक्षणम्। **अशौचं यस्येत्य**स्याशौचाभावमात्रप्रतिपादकेनाऽऽशौचिस्पष्टोपादाननिषेधबाधे मानाभावात्। पण्याशौचानिषेधे तु कृत्रिमोपलक्षणम्। आशौचं यस्येत्यस्य पण्येष्वपि प्रवृत्तेर्लवणशाखादिनियमार्थं तु मृतकसूतकग्रहणम्। शाकादिष्वेवाशौचप्रतिषेधश्चानापाद्यनिमित्तकाशौचविषयः। कृत्रिमे तु तदन्यत्राप्याशौचाभावः। अशौचं यस्येत्यादिवाक्यात्। तदाह। **शवसंसर्गेति**। तत्संस्पर्शेत्यर्थः। **केवलं** अस्पृश्यत्वलक्षणमात्रम्। २५ अनेन तृतीयपादार्थो दर्शितप्राय इति केचित्। वस्तुतस्तु तत्र क्रिया वैतानोपासनाद्या इति बोध्यम्। एवं च केवलपदं तदन्याशौचनिरासपरमिति भावः। चशब्दस्वारस्यादाह। **तद्द्रव्याणां चेति**। तथा च कृत्रिमाशौचेऽप्याशौचिहस्तात्सर्वाण्यपि द्रव्याणि न ग्राह्याणीति बोध्यम्।

अतिक्रांताशौचेऽप्येवमेत्याह। **अतीति**। **सूतकमिति** उपलक्षणं मृतकस्यापि। **तत्तद्द्रव्यस्येति** भार्यादेरपि। अत एव द्वयोरेकवाक्यता। अत एव च तत्र च इति भावः। **ब्राह्मेऽपि**

३० "लवणं मधु मांसं च पुष्पं मूलफलानि च। काष्ठं लोष्ठं तथा पर्णं दधि क्षीरं घृतं तथा॥

"औषधं तैलमाजिनं शुष्कमन्नं च नित्यशः। आशौचिनां गृहात् ग्राह्यं स्वयं पण्यं च मूलजम्"॥

इति। मूलजमाकरजं। एवं चान्नसत्रिणामोदनादि। अन्येषां तु भक्ष्यतंडुलाद्यप्यभ्यनुज्ञातं भिन्नं सर्वं ग्राह्यमेवानाशौचिनेति दिक्॥ १७॥

## याज्ञवल्कीये १८ श्लोकः।

समुदितसंगतिमाह। **एवमिति**। आदित इत्यंतेनेत्यर्थः। **निमित्तमित्यादि**जातावेकवचनं। तस्येदमित्यण्। फलितमाह। **जननेति**। तत्राद्यमाह। **एवमिति**। **योगिनेत्यर्थः**। **निमित्तमिति**। प्रत्येकमिति भावः। कालनियमस्तु स्पष्ट एव आद्यपादेनेति पुनर्नोक्तः। **उत्पन्नं ज्ञातमिति**। अनेन प्रमितम (प?) दस्य निमित्ततोक्ता मरणादि- ५
ज्ञानमात्रं तु न निमित्तं। अनागतज्ञानस्यापि निमित्तत्वापत्तेः। नन्वेवमपि स्वरूपसत एव तस्य निमित्तत्वमस्त्वत आह। **निर्दशमिति**। **मनुरयमाग्रिमश्वदशभ्यो** निष्क्रांतमित्यर्थः। इदं चातिक्रांताशौचविषयं न प्रकृतविषयमित्यत आह। **लिंगेति**। श्रवणस्य तत्रोपादानात्। तथा च तदेकवाक्यतया अत्रापि तथा। अन्यथा वैरूप्यापत्तेरिति भावः। नन्वत्र शास्त्रे"यावद्वचनं वाचनिकमिति" **सिद्धांता**युक्तिवल्लिंगस्याप्यप्रयोजकत्वात्कथं तथेत्यत आह। **तथा विगतमिति**। १०
**मानव**मिदम्। आदिना (५।७४)

"अंतर्दशाहे स्यातां चेत्पुनर्मरणजन्मनी। तावत्स्यादशुचिर्विप्रो यावत्तत्स्यादनिर्दशम्॥" इति

**मानवा**दिपरिग्रहः। सामर्थ्यमेवा**होत्पत्तीति**। **मात्रपदेन** ज्ञाननिरासः। **हि** यतः। **च**स्त्वर्थे। व्युत्क्रमे उक्तमुपसंहरति। **एवोत्पत्ति**मात्रनिरासः। ज्ञानं च निश्चयात्मकमित्युक्तमेव। अथ वाक्यार्थमाह। **तद्वोभयेति**। बहुव्रीहिः। जननमरणनिमित्तकमपीत्यर्थः। योग्यतया आह। १५

मि. पृ. १७३. **मन्वादीति**। वैरूप्यादिनिरासायाह। **अत्राशौचेति**। विकल्पो नैच्छिकः। किंतु व्यवस्थितस्तत्सूचनादर्थमेवेष्यत इत्यत इत्युक्तमित्याह। **मन्वादिभिरिति**। **तदुक्तेति**। **मन्वाद्युक्त**त्यर्थः। **विधीयते इति**। मानवादग्रे (५।५९–६०)

"अर्वाक् संचयनादस्थ्नां त्र्यहमेकाहमेव वा। सपिंडता तु पुरुषे सप्तमे विनिवर्तते॥

"समानोदकभावस्तु जन्मनाम्नोरवेदने। यथेदं शावमाशौचं सपिंडेषु विधीयते॥"इति पाठस्तद- २०
ग्रिममाह। **जननेऽप्येवमिति**। एवं दशाहांशे उक्त्वा त्रिरात्रांशे तदेवाह। **जन्मनीति**। इतः पूर्वतनं बहुव्यवहितं। तदेवाह। **शवेति**। अत्र पूर्वपादो "अह्ना चैकेन राज्या च त्रिरात्रैरेव च त्रिभिरिति" पूर्वेणान्वेति। तदेतत् ध्वनयन्नेवाह। **तैर्वाक्यैरिति**। उक्तक्रमेणाह। **समानोदकेति**। **कृता** मन्वादिभिः। **त्रिरात्रमितीति**। इदमपि वक्ष्यमाणसद्यःशौचेन व्यवस्थया कल्पितं द्रष्टव्यम्। २५

विरोधं परिहरति। **यत्पुनरिति**। **पुंसीत्यस्य** सर्वत्र संबंधः। विजीक्षत्व यत्र न निषिद्धत्वं निषेधानुपलंभात्प्रत्युतोक्तविधेरेवोपलंभात्किंतु तद्वद्भासमानत्वं विवक्षितमित्याह। **यद्यप्यवीति**। उक्ते स्मृत्याविधेरेव सत्वात् लोकविद्विष्टमेवाह। **न चेति**। न हीत्यर्थः। **एवं पूर्वार्द्धेन**। **अविशेषेणेति**। वयोवस्थाकृतविशेषाभावेनास्पृश्यत्वकर्मानधिकारलक्षणाशौचविशेषाभावेनेत्यर्थः। शावमित्युक्तेः।

स्मृत्यंतराच्चाह। **संस्थिते इति**। नियमलब्धमाह। **वेति**। तद्व्यवच्छेद्यमाह। **न सर्वेषामिति**। नन्वेवं तेषां तदभावापत्तिरत आह। **तेषां त्विति**। **उभयोर्मातापित्रोः**। **चेन** तयोः समुच्चयः। अनेन पित्रोर्जननोत्तरमेव सोदराणां नामकरणोत्तरमेवाशौचमिति सूचितम्।

नन्वत्र पक्षे जन्माशौचकालमध्ये सद्यःशौचप्रतिपादकैस्तदूर्ध्वं च त्रिरात्रादिप्रतिपादकै-

मन्वादिभिर्विरोध ऊनद्विवर्ष इत्यस्यानर्थक्यं च पूर्णद्विवर्षादौ तावदाशौचस्य सुतरां सत्त्वादत आह। **अथवेति** । नियमस्त्वत्रापीत्याह । **वेति** । विशेषोऽत्र द्वितीयाद्य इत्याह । **अस्पृश्यत्वेति** । स्मृत्यंतरेण कर्मानधिकारलक्षणाशौचस्य निषेद्धुमशक्यत्वादाह । **अस्पृश्यत्वेति** । मूलसाकांक्षमाह । **इतरेति** । तदन्याशौचस्य तद्रूपस्य त्वित्यर्थः। **सपिंडेषु** तदन्येषु । **अपिना** तयोः समु-
५ च्चयः । एवं च पित्रन्यसपिंडानां तु न द्व्यब्दोपरमेऽनुगमननियमनत्रास्त्यस्पृश्यता किंतु पूर्वद्विवर्षोपरमेन एव प्रतिपादितावधिके साति तात्पर्यम् ।

निपातानामनेकार्थत्वेन यथार्थत्वात् । दृष्टांततयाऽत्र पक्षे चरमपादः सुयोजः । न तु प्रथमपक्षे इतीदमेव **योगिसंमतमिति** हृदि निधायाह । **अत्र दृष्टान्त इति** । तदेवाह । **यथेति**। धात्वर्थानुसारादाह । **जननेति** । केवलमित्यनेन कर्मानधिकारलक्षणव्यवच्छेदः । एवं शब्दार्थमुक्त्वा
१० न्यूनतानिरासाय तात्पर्यार्थमाह । **ऊनद्वीति** । **सपिंडेति** । पित्रन्यसपिण्डेत्यर्थः । **प्रतीति** । आर्थिकप्रतिषेधं कुर्वता **योगिनेत्यर्थः** । **अन्यत्र** पूर्णद्विवर्षादौ । तत्र मानमप्याह । **तथा चेति** । स्वाशौचस्य त्रिरात्रादिरूपतत्परिच्छेदककालस्यावयवभूतात्तृतीयभागरूपात्कालादनंतरं शूद्रादीनां शास्त्रविहितमनतिक्रम्य स्पर्शनं विज्ञेयमित्यर्थः ।

नेदं संपूर्णाशौचविषयं । तत्र तेनैव विशेषाभिधानस्यानुपदमेव वक्ष्यमाणत्वात् न च तस्य
१५ सर्वसाधारण्याच्छूद्रादीनां स्वाशौचकालादित्यसंगतामिति वाच्यम् । यत्र त्रिरात्रं विप्राणामाशौचं संप्रदृश्यते तत्र शूद्रे द्वादशाहः । य एव न क्षत्रवैश्ययोरित्यादिवचनैरसंपूर्णाशौचस्यापि विषयस्योक्तत्वात्महास्मृतिविरोधादननुष्ठानमात्रं तस्येत्यन्यदेतत्तदाह । **एतच्चेति** । विनि(यो)गमकाभावादाह । **अतीति** । **आदिना** पक्षिण्यादिपरिग्रहः । इदमेव द्रढयितुमाह । **उपेति** । तन्मरणविषयेऽपीत्यर्थः । **तेनैव** । **देवलेनैव** । **तत्वदर्शिनो वर्णादीनां** विप्रादीनां । **क्रमाद्दशाहादि-**
२० कालतृतीयभागेन गतेन । तत्र संचयने कृते सत्यंगस्पर्शनमिच्छंति । स्वयमेवोक्तं व्याचष्टे । **त्रिचतुरिति** । अत्र किंचिदधिकैस्त्रिभिरिति बोध्यम् । एतैर्भागैरवशिष्टैरित्यर्थः । आशौचकालमाह । **भोज्येति** । **दशभिर्गतैर्दिवसैरिति** शेषः । **उत्तरैरिति** । वीप्सागर्भमित्याह । **षडुत्तरैरिति** । द्वादशभिरित्यर्थः । **त्र्युत्तरैरिति** । पंचदशभिरित्यर्थः । **षडुत्तरैरिति** एकविंशत्येत्यर्थः । न च शूद्रे त्रिंशद्दिनाशौचस्य वक्ष्यमाणत्वात्तद्विरुद्धमिति वाच्यम् । तथाऽपि "शूद्रो विंशतिरात्रेण
२५ शुध्यते मृतसूतके" इति वक्ष्यमाण**शातातपा**नुरोधित्वात् । तथा चात्र प्राप्तैस्तथा दिनैरित्यर्थः । शेषपूर्णस्याकांक्षाधीनत्वात्तस्याश्चेष्टानुरोधित्वात् । एतेन **षडुत्तरैः पंचदशभिरिति** व्याख्येयमिति विवेचनोक्तमपास्तम् । उक्तरीत्यासामंजस्यात् । तथा व्याख्याने मूलैकवाक्यतायामपि प्रक्रमादिस्वारस्येनाष्टादशाधिकैः पंचदशभिरित्यस्यैव लाभेन तथोक्तेरसंभवेनातिप्रसंगेन तत्रैव नियामकाभावेन चायुक्तत्वाच्चेति दिक् । परं त्विदं कलौ निषिद्धम् । "अस्थिसंचयनादूर्ध्वमंगस्पर्शनं तथेति"
३० तद्वर्ज्ये **माधवीये** पाठादिति बोध्यम् ॥ १८ ॥

इदमेव **योगिसंमतमिति** पुनराह । **जननेति** ।

## याज्ञवल्कीये १९ श्लोकः ।

प्रागवदाह । **जननेति** । सर्वं वाक्यं साधारणमिति **न्यायेनाह** । **एवेति** । अत एवाह ।

**नेति**। **तच्चेति**। तन्निवत्यर्थः। ध्रुवत्वं यथाशास्त्रमित्याह। **दशेति**। उपलक्षणमिदम्। पक्षांतराभि-
मि. पृ. १७४ प्रायं वा। पुत्राद्यसृजोऽसंभवादाह। **तस्याः सम्बंधि इति**। **वसिष्ठ इति**।
**अंगिरा** अप्येवम्। तुशब्दसूचितमाह। **पितुस्त्विति**। तत्र हेतुमाह। **स्नानेति**। यत
इत्यादिः। ननु तत्र स्नानस्याऽविहितत्वात्कथं तथा **आह**। **यथाहेति**। अत्र पुत्रग्रहमुप-
लक्षणम्। सामान्यविषयोत्तरार्धसमभिव्याहारात्। ५

"सूतके तु मुखं दृष्ट्वा जातस्य जनकस्ततः। कृत्वा सचैलस्नानं तु शुद्धो भवति तत्क्षणात्॥" **इति**
तादृशब्राह्मात्। पित्रोस्त्विति तादृशमूलाच्च। उक्त**वसिष्ठं** तु मिथुनीभावात्मकसंसर्गाभावे
स्नानोत्तरमस्पृश्यता नास्ति। तत्सत्वे तु तदुत्तरमपि सेत्येतदर्थकम्। एतेन तत्र पुत्रग्रहणं विवक्षितं
मत्वा पुत्रसूतके संसर्गेऽस्पृश्यतानापत्तिमनालोच्य **वासिष्ठं** कन्यासूतकपरम्। **स्नात्वा** कन्यासूतके
स्नानात्पूर्वमपि पितुर्नास्पृश्यत्वमिति **मित्राद्युक्तमपास्तम्**। विशेषमाह। **मातेति**। **चस्त्वर्थे**। १०
**सूतिकामिति**। अतिक्रान्तेनेति शेषः। उभयत्र विंशतिरात्रादिकं च दशाहोत्तरं बोध्यम्।
तेन न स्मृत्यंतरविरोधः। **मनुरपि** (५।६२)

"सर्वेषां शावमाशौचं मातापित्रोस्तु सूतकम्। सूतकं मातुरेव स्यादुपस्पृश्य पिता शुचिः॥" इति।
अत्राशौचे नष्टे निर्हेतुकर्मानधिकारासंभवादाशौचमेव तावत्पर्यन्तमिति केचित्। आशौचे
गतेऽपि वचनात्पतितादिवत्कर्मानधिकार इत्यन्ये। वस्तुतस्तु द्विविधाशौचस्य सत्वेनैकशक्तिनाशे- १५
ऽप्यन्यशक्तेरनाश इति बोध्यम्। मूलतात्पर्यं स्पष्टयति। **अंगीति**। **वर्ज्यमिति**। णमुलंतम्।
उत्तरार्धार्थमाह। **यस्मिन्निति**। न प्रेत्यस्य दुष्टं न भवेदित्यर्थस्तदर्थमाह। **तन्निमित्तेति**।
तत्र हेतुः **पूर्वेषामिति**। **जन्मेत्यस्य** जन्मरूपहेतोरित्यर्थः। तदाह। **यस्मादिति**। "आत्मा
हि जज्ञे आत्मन"इत्यादिश्रुत्याद्यनुरोधेनाह। **पुत्रेति**। इदं च नालछेदात्पूर्वं "प्राङ्नाडीछेदा-
त्संस्कारपुण्यार्थान् कुर्वंति नाड्यां छिन्नायामशौचमिति" **हारीतात्** न केवलं ग्रहणादिवद्दाने २०
एवाधिकारः किन्तु प्रतिग्रहेऽपि न दोष इति सूचयन्नाह। **तथा चेति**। भूगवादीनां द्वंद्वं कृत्वा
हिरण्येन द्वंद्वं कृत्वाऽऽदिना बहुव्रीहिः कार्यः। विषयसप्तमीयम्। आनंत्यादुपसंहरन्नाह। **तत्रेति**।
तद्दिने इत्यर्थः। **कृतान्नं** सिद्धान्नम्। इदमपि नालि(डि?)छेदात्पूर्वमेव "कुमारप्रसवेनाड्यामविच्छि-
न्नायां गुड-तैल-हिरण्यवस्त्र-प्रावरण-गो-धान्य-प्रतिग्रहेऽदोष" इति **शंखात्**। **जन्मदानामदेवता**
इत्येकं पदं। **यागः** पूजा। क्रियाविशेषणमिदम्। एतेषु त्रिषु सर्वदा एव सर्वथैवेत्याद्यर्थः। **तथा** २५
प्रथमरात्र्यादिवत्। **तत्र रात्रौ**। तस्यां रात्रौ। अत्र जातश्राद्धादपि। तथा **च ब्राह्मे**

"देवाश्च पितरश्चैव पुत्रे जाते द्विजन्मनाम्। आयांति तस्मात्तदहः पुण्यं षष्ठं च सर्वदा॥
"तत्र दद्यात्सुवर्णं च भूमिं गां तुरगं रथम्। छत्रं छागं च माल्यं च शयनं चासनं गृहम्॥
"जातश्राद्धे च न दद्देत्पक्वान्नं ब्राह्मणेष्वपि।" इति॥ १९॥

**आशौचमध्ये**। द्विविधाऽऽशौचमध्ये। ३०

## याज्ञवल्कीये २० श्लोकः।

### पूर्वार्धः।

**जन्मेति**। समाहारद्वंद्वः। शेषाहोभिरित्यत्र समासांतविधेरनित्वान्नटच्। विनिगमका-

भावादाह । **वयोवस्थेति** । सामान्योक्तमपि अविरोधाय विशेषं वक्तुं विशेषपरतया व्याचष्टे। **तत्समस्येति**।तात्पर्यार्थमाह। **न पुनरिति** ।

**मनुरपि** (५।७८)

"अंतर्दशाहे स्यातां चेत्पुनर्मरणजन्मनी । तावत्स्यादशुचिर्विप्रो यावत्तत्स्यादनिर्दशनम्॥" इति ।

५ तमेव विशेषमाह । **यदा पुनरिति** । यदा त्वित्यर्थः । **स्वल्पेति** । अनेन पूर्वप्रवृत्तशाव-मात्रेण तदंतःपातिसूतिशावमात्रयोः पूर्वप्रवृत्तसूतिमात्रेण च तदंतःपातिसूत्याशौचमात्रस्य निवृत्तौ प्राप्तायां लघुनाऽधिकस्य तन्निषेधः क्रियते । उभयत्र तत्प्राप्त्यविशेषात् । तथा च त्रिरात्रादि-शावांतःपातिदशाहादिसूत्याशौचस्य न पूर्वेण निवृत्तिः । किंतु स्वकालं यावदनुवर्तमानस्यैव तस्यास्पृश्यत्वादिस्वधर्मप्रयोजकत्वमात्रेण गरीयसा शावेन स्वधर्मप्रयोजकनिवृत्तिमात्रम् । **अंगिरो-**
१० **वाक्यात्** । युक्तं चैतत्

"सूतकाद्द्विगुणं शावं शावाद् द्विगुणमार्तवम् । आर्तवात् द्विगुणं सूतिस्ततोऽपि शवदाहकः॥"
इति **वृद्धात्रेः** ।

अत्र पूर्वपूर्वेण नोत्तरोत्तरनिवृत्तिरस्पृश्यत्वाधिक्यात् । तदेतदभिप्रेत्य विशेषांतरमाह । **अत्र चांतरेति** । मूलस्मृतावित्यर्थः । **अथ**शब्दः पक्षांतरे । तथा चोक्तसामान्यमपि विशेषपरमित्युप-
१५ संहरति । **तस्मादिति** । एतेन

"आद्यानां यौगपद्ये तु ज्ञेया शुद्धिर्गरीयसी । मरणोत्पत्तियोगे तु गरीयो मरणं भवेदिति ॥"

**कौर्मे** । पूर्वार्धापवादत्वमुत्तरार्धस्येति लघुनाऽपि शावेन दीर्घसूतेरपि स्वरूपनिवृत्तिरूपो बोध इति **रुद्रधरोक्तम**पास्तम् । सत्यप्यपवादत्वे **तस्यौशनसा**ऽविरोधाय स्वधर्मप्रयोजकत्वमात्ररूप-गरीयस्त्वप्रतिपादकत्वात् । वस्तुतस्तु सर्वविधगरीयस्त्वबोधकत्वेऽपि तस्य न तदपवादत्वं किंतु
२० तदविरोधे न समाधिककालशावगरीयस्त्वबोधकत्वमेवेतिबोध्यम् । विशेषान्तरमाह । **तथेति** ।

मि. पृ. १७५. **स्मृत्यंतरे शंखीये** पिता । अ इतिछेदः । स च निषेधार्थः । उत्तरान्वयी । शेषेण शुद्धिरित्यस्याऽऽवृत्तिः । तदेतदभिप्रेत्यार्थद्वयमाह। **तदा नेति**। द्वितीये शेषेणेत्यस्य शिष्यमाणेन विधीयमानेनेत्यर्थादाह । **नाशौचेति** । तुसूचितवैलक्षण्यात्तुर्यपादार्थमन्यथा आह। **तथेति** । मात्रपदेन किंचिच्छुद्धिरस्त्येवेति सूचितम् । अयमेव पूर्वतो विशेषः । **क्षिपेत्**। अतिक्रामेत् । कुर्या-
२५ दिति यावत् । एवं च मात्राशौचेनापि न पित्राऽशौचस्य निवृत्तिः किमुतान्येन । तथा पित्रा-शौचेनापि केवलेन मात्राशौचस्य न निवृत्तिः। किमुतन्येन केवलेनान्यसहितेन वेति बोध्यम् ।

एवं पर्यवसितपूर्वशेषकृतशुद्धेरनतिप्रसंगाय विशेषांतरमाह । **तथेति** । आशौचयोः संनि-पातो यत्र तादृशकालविशेषे इत्यर्थः ।अत्र रात्रिशब्दोऽहोत्रपरः। प्राग्वत् । एवमग्रेऽपि । तद्रूपशेषे इत्यर्थः । "अथ यदि दशरात्रात्संनिपतेयुराद्यं दशरात्रमाशौचमा नवमदिवसादिति" **बौधायनात्**
३० (अ. सू. १।५।१०४) । तदेतदभिप्रेत्याह । **रात्रिमात्रेति** । मात्रपदेन तत्पूर्वतनव्यावृत्तिः । बहुव्रीहिरयम् । यद्यपि सूर्योदयात्प्राचीनः प्राचीप्रकाशकालः प्रभातपदवाच्यस्तथापि वक्ष्यमाणानु-रोधेन तत्सामीप्याल्लक्षणेत्याह। **पश्चिमे यामे इति** । तदर्थमेवाह। **शातातपेनेति** । एवमस्या गतिसंभवेऽनाकरस्थमिदमिति **मिश्रोक्तम**युक्तमिति बोध्यम् । इयं च सांनिपाते पवशेषेण शुद्धिः

सूतिकाग्निदसपिंडानाम् । तयोस्तु निमित्तादारभ्य पूर्णमेव अनधिकारास्पृश्यत्वोभयलक्षणमाशौचम् । तथा च **षडशीत्याम्**

"पूर्वाशौचे तु या शुद्धिः सूतके मृतके च सा। सूतिकामग्निदं हित्वा प्रेतस्य च सुतानपि"॥इति।

विशेषांतरमाह । **प्रेतेति । तेनैव शातातपेनैव । तथैव** पूर्वपिंडवत् ।

अत्र जननग्रहणं मरणस्याप्युपलक्षणमित्याह । **तथेति ।** प्राग्वदाह । **तथेति** । आशौचे ५

( उत्तरार्द्धः )

सूतिनिमित्ते मृतिनिमित्ते वा । व्यवहितसंगतिमाह । **पूर्णेति** । बहुव्रीहिः । एवमग्रेऽपि । जहदजहल्लक्षणामाह । **द्रवाद्रवेति ।** शक्तिसंभवे लक्षणा न युक्तेति शंकते । कुत इति मुख्यार्थबाधमाह । **द्रवत्वेति** । एवं पदार्थमुक्त्वा वाक्यार्थमाह । **गर्भस्येति। निशा**शब्द आहोरात्रपरः । एवमग्रेऽपि । १०

विशेषमाह । **एतच्चेति** । एवः स्पष्टार्थः । विरोधं पाक्षिकं परिहरति । **यत्पुनरिति** । गर्भस्रावसमा रात्रीः । "संस्रवे गर्भस्येति" ( अ. ५ सू. १५ ) तदादिः । **अर्वाक्** मासत्रयमध्ये **अचिरे**त्यस्य निकटवर्तिगर्भस्रावेत्यर्थः । तात्पर्यावसितमाह । **मासेति । उत्तमे** इत्यस्य वर्णे इत्यर्थः । तत्फलितमाह । **ब्राह्मणेति ।** अयं भावः ।

"षण्मासाभ्यन्तरे यावद्गर्भस्रावो भवेद्यदा । तदा माससमैस्तासां दिवसैः शुद्धिरिष्यते ॥" इति १५ विहितस्य माससमदिवसाशौचस्य तदंतःपातिस्रावविषयेण निरवकाशेन स्रावे मातुस्त्रिरात्रमिति वक्ष्यमाण**मरीच्युक्तेन** त्रिरात्राशौचेन बाधायापि पातविषयत्वमवशिष्यते मूलादेस्तथापि "**दिवसै**-**र्निशा**" इति बहुवचनानुरोधात्त्रिरात्राशौचस्यैवाद्यमासत्रयविषयत्वं युक्तम् । न चाद्यमासमात्रं **द्वितीय**-**मात्रं** तत् । द्वयमेव वा तस्य विषयो युक्तः । आद्ये त्रिरात्रम् । द्वितीये **द्विरात्र**मित्यनौचित्येनाद्यपक्षासंभवात् । अचिरशब्दस्य लिंगसमवायिगौणस्रावशब्दस्य चानुरोधेनाद्यविषयत्वावश्यंभावेन २० द्वितीयासंभवात् । तृतीयविषयत्वे विरोधाभावेन तत्परिहारहेत्वभावेन तृतीयानुपपत्तेः । **गौतमोक्त**-पक्षद्वयस्योक्तवचनात् षण्मासविषयत्वव्यवस्थासंभवे **व्यवस्थायोगेन** तदपेक्षायामचिरशब्दौचित्य**न्यायानुगृहीतेन** समं स्यादिति **न्यायेनां**त्यमासत्रयविषयत्वेन व्यवस्थायुक्तत्वाच्चेति **बहु**-वचनानुपपत्तेरिति वदता व्याख्यात्रा सूचितमिदं सर्वमिति बोध्यम् ।

तदेतदभिप्रेत्याह । **एतच्चेति** । मूलोक्तं चेत्यर्थः । तथा च चतुर्थे चत्वारि पंचमे पंच **षष्ठे** २५ षडिति फलितं । नन्वेवमग्रे किमत आह । **सप्तेति । तत्र** स्रावपातशब्दयोरेवाभावादिति भावः । न तु तत्र तदप्रयोगेण तदविषयत्वेऽपि "अत ऊर्ध्वं प्रसूतिः स्यादिति" वाक्यात् तत्प्रयोगेऽपि च पूर्णाशौचे किं मानमत आह । **षण्मासेति । अत ऊर्ध्वं** । षण्मासादनंतरम् ।

सद्यःशौचमित्यत्र प्रसंगाद्विशेषमाह । **एतच्चेति** । तथा च पतनपदेन प्राग्वत् स्रावो विवक्षित इति भावः । **सद्यःशौचमि**त्यस्य स्नानमात्राच्छुद्धिरित्यर्थः । अशुचित्वाभावे शौच- ३० विध्यनुपपत्तेर्निष्कारणशौचासंभवाच्च । अत एव विरोधं परिहरति । अत्र पतनशब्देन स एव

मि. पृ. १७६ विवक्षित इति भावः । उभयत्र मानमुचितमेवाह । **आचतुर्थादिति** । आङभिविधौ स्रावे आद्यमासत्रये सपिंडेति बहुव्रीहिक्रियाविशेषणं च प्रकृतत्रिरात्राशौचं नेति तदर्थः ।

ननु सर्वथाशौचनिबंधकं सद्यःशौचमित्यनेन विरोधापत्तेः । एवं स्नानमात्रमेव पुरुषस्येति **वासिष्ठमपि** मात्राऽशौचविधायकं सत् तत्प्राप्तमेव पितुः स्नानमनुवदति। न त्वन्येषां तन्निवर्तयति **वाक्यभेदापत्तेः** । यद्यपि तद्वाक्यपर्यालोचनया स्नानमाससमाशौचयोरेकविषयत्वं प्रतीयते **तथापि** वाक्यांतरबलाद्भिन्नविषयत्वं कल्पमानमदोषावहमिति भावः । पाते चतुर्थादित्रये पूर्व-
५ **स्मृतौ** तासामित्युपलक्षणम् । प्रसवे सपिंडानां दशाहं शावमिति ।

"यथेदं शावमाशौचं सपिंडेषु विधीयते। जननेऽप्येवमेव स्यान्निपुणां शुद्धिमिच्छताम्॥" इति । च **मनुना** दशाहाशौचस्योक्तत्वात् । तदेतत् ध्वनयन्सपिंडेषु अग्रे सविशेषमा सप्तेति ग्रीति दशा- हादीत्यर्थः । ननु शावाशौचेन निवृत्तिरुपयुक्तेरिति भावः । जातमृते इति नालछेदोत्तरं

"यावन्न छिद्यते नालं तावन्नाप्नोति सूतकम् । छिन्ने नाले ततः पश्चात्सूतकं तु विधीयते ॥"

१० इति **जैमिनीत्युक्तेः**। अस्यैतत्प्रकरणपाठान्मृतपूर्णशब्दावध्याहृस्य योजना कार्या । **अंतरिति**। **दशाहमध्ये** इत्यर्थः । छेदमाह । **उत्थानादिति** । उदकदानराहित्वेव च अर्हार्थे **वतिः** । सूत- **कार्हं** प्रसवनिमित्तं पूर्वान्वयि तत्फलितमाह । **शिशूपेति** । 'सूत्ये'त्यस्य यत इत्यादिः । इदं च **पूर्णाशौचनिषेधकं** तेन न वक्ष्यमाणः सद्यःशौचेन विरोधः ।

उपसंहरति । **एवमादीति** । अविरोधायाह । **यत्पुनरिति** । **शुद्धीति** । निवृत्तीत्यर्थः ।
१५ **विपत्तिर्नाशः** । संबंधिनोऽधिकरणविवक्षया विरोधपरिहारा बोध्याः । सिद्धस्य गतिश्चिंतनीयेति **न्यायेनाह** । **तदा सूचकमिति**। अत्र व्याख्याने पौनरुक्तादाह। **अथवायमिति** । तदाक्षिप्त- शेषमाह । **यदीति** । **तत्र** अंतर्दशाहे पूर्वत्र । तत इत्यस्यार्थमाह । **जननेत्यादि** । 'प्रागि- त्यनेन **वर्धनशब्दस्य** विपरीतलक्षणया छेदने प्रयोगः ।

एवं पूर्वविषयत्वमुक्त्वा द्वितीयविषयमाह । **सद्य इति** । **अग्नीति** । अग्निहोत्रादिहोमार्थ-
२० मित्यर्थः । **उपस्पर्शे**ऽत्राचमनम् । एवं सति प्रागुक्तमेवाह । **नाभीति** । व्याख्यातमिदं कंचिदनुक्तं **विशेषं** चरमं स्मरति। मूलोक्तार्थे **मनुसम्मतिमाह** ।**मनुनाऽपीति** । अयं योग्ययुक्तः संपूर्णं नोक्त- परमसंभवादित्याह।**पूर्वेति**। रजसो वास्तवोपरमाभावात्सर्वथोपरमाभावाच्च तेनैव तस्यास्तत्वाद्रज- स्वलापदसूचितमाह। **निःसेति**। **साध्वीति** । सूचितमाह। **स्पर्शादिति** । स्त्री ग्रहणेन स्त्रीमात्रस्यायं **धर्मो** न तु तद्विशेषाया इति सूचितः। तत्र मानमाह। **तदुक्तमिति**। अर्हार्थे ठञ्। स्वागतादित्वादैज्। न
२५ **व्यावहारिकीति**। **तथा चेति**। तथा स्मृत्यंतरमपीत्यर्थः । **भर्तुः शुद्धा** स्पर्शादियोग्या । नियमा- भावान्मन्वनुरोधेनाह । **पंचमेऽहनीति** । प्रसंगात्तत्र विशेषमाह । **यदेति** । **दर्शनात् तद्दि-**
मि. पृ. १७७. **नात्** । अभ्यंतरे स्नानोत्तरमिति शेषः । विंशदिति आर्षं । अविरोधायाह । **यस्त्विति** । **स्नानेति** त[ि]नेत्यर्थः । विशेषांतरमाह। **अयं चेति** । कदाचिदन्यथासत्वेऽपि तत्सं- ग्रहार्थं **प्रायश इति** । **पुनः** तु । विशेषणफलमाह । **प्राचुर्येणेति** ।

३० प्रसंगात्तद्धर्मानाह । **तया चेति** । रजस्वलया चेत्यर्थः । **ग्रहान्** । सूर्यादीन् । धावेदिति पाठः । **अखर्वेण** महता । इदं सर्वं प्राक् स्पष्टीकृतम् । **नैमित्तिके** ग्रहणादिति निमित्तके । **पात्रांतरि**[त्य]नेन साक्षान्नद्यादिस्पर्शाभाव उक्तः । **अद्भिः** सिक्तगात्रा सती कथंचन न व्रतांगोपांग

---

१ स[ा]कषादित्यत्र । २ क्रियाविशेषणम् ।

पांगसहिता भावेदित्यन्वयः । आदरार्थं पुनः प्रश्नः । **शुद्धिरिति । तां** ज्वराद्यभिभूतां । अवधिमाह । **दशेति** । ज्वरेत्युपलक्षणमित्याह । **पंचेति । मात्रं** कार्त्स्न्ये । **उत्पन्ने** प्राप्ते सति अन्वादेशसत्वादेनादेशः । स्नाने एव विशेषमाह । **यदा त्विति । अयं** वक्ष्यमाणः । पूर्वस्तु जीवद्विषयकः । तत्रादौ व्युत्क्रमेण सूतिकाया आह । **सूतीति । पुण्वर्गिभरित्यत्रा**नित्यत्वात्समासांतो न । **अपोभिमंत्र्य** स्थिता । **ततो** विप्रात् । **वाचा** सा शुद्धिं लभेदित्यर्थः । **तेनैव कुंभे-** ५
नैव । **पंचभिरिति** । अत्र **व्यासोक्त्या** कुशोदकं नेति बोध्यम् । विप्रोऽत्र **प्रयोजककर्ता** । अथोभयसाधारणं विशेषमाह । **एतच्चेति** । प्रागुक्तं चेत्यर्थः । **एक इति** मुख्य **इत्यर्थः** । अद्यतनलक्षणे तथा दृष्टत्वादिति भावः । **अपरस्तृतीयः** । सर्वत्र मानमाह । **यथाहेति । विपत्तिर्मरणम् । यस्य** अन्यतमनिमित्तस्य । अथ रात्रिविषये **आहोषस इति** । रात्रावित्यर्थः । **तच्छुद्धौ** तच्छुद्धिविषये । दिनं ग्राह्यमिति शेषः । कुत्रेत्याकांक्षायामाह । **अर्द्धेति** । एवं मुख्यपक्षमुक्त्वा द्वितीय- १०
मि. पृ. १७८ माह । **रात्रिमिति** । पूर्व एव दिवसः । **ऋत्विति** समाहारद्वंद्वः । **एवेन** भागव्यवच्छेदः । **मृते** मरणे । अविरोधायाह । **एतेषां चेति** । अथ प्रकृते एव मूलानुक्तं विशेषांतरमाह । **इदं चेति । आहितेति** । आहितमाधानं तदस्यास्तीत्यर्शे आद्यच् । तादृश अग्निर्यस्यास्ति । तस्य श्रौताग्निमत इत्यर्थः इति केचित् । **वस्तुतस्तु** भूतनिष्ठयाधानस्य भूतत्वलाभेऽपि बहुव्रीहिणा तादृशाग्निसत्ताया वर्तमानतस्यैव लाभाद्यथाश्रुतमेव युक्तमिति बोध्यम् । १५
स्मृतितस्तथैव लाभात् । **अनाहिताग्नेरुक्तभिन्नस्य** । अनेन सर्वसंग्रहः । नञो भिन्नार्थत्वात् । **संचेति** । "प्रथमेऽह्नि द्वितीयेह्नी"त्यादिना विहितमिति भावः । **अनग्नीति** । श्रौताग्निमद्भिन्नस्य सर्वस्येत्यर्थः । **साग्नेः** श्रौताग्निमतः । यद्यप्यत्रोभयत्रापि सामान्येनोक्तं तथापि "दाहादेव तु कर्तव्यं यस्य वैतानिको विधिरिति" **स्मृत्यंतरात्तथेति** बोध्यम् । अत एव तथैव प्रतिज्ञातं" व्याख्यात्रा "मृताहस्तु यथातिथीति" पाठः । क्षयाहस्तु तत्र वर्तमानतिथिमनतिक्रम्य बोध्य २०
इत्यर्थः । **आसंस्कारात्** आसंस्कारोपक्रमात् । आशौचाभावस्योक्तत्वादेवाह । **संध्यादीति** । आशौचादित्यादिना तन्निमित्तकं संध्यावंदनत्यागादि गृह्यते ।

"ऊर्ध्वं त्रिपक्षाद्यच्छ्राद्धं मृताहन्येव तद्भवेत् । अधस्तु कारयेद्दाहादाहिताग्नेर्द्विजन्मनः ॥"

इति स्मरणात् त्रैपक्षिकपर्यंतं प्रेतकार्यमपि श्रौताग्निमतः संस्कारदिवसे एतदुत्तरं तु क्षयाहतिथौ एवेति बोध्यम् । एवं च प्रागुक्तविधुराग्न्यादेरग्न्यंशे श्रौताग्निमत्तुल्यत्वेऽपि अन्यत्र सर्वत्र तद्भिन्न- २५
तुल्यतेति बोध्यम् ॥ २० ॥

## याज्ञवल्कीये २१ श्लोकः ।

### ( पूर्वार्द्ध )

प्रागुक्तदशाहत्र्यहादिकालावछिन्नस्य सर्वस्याशौचस्यापवादोऽविशेषादित्याह । **सपिंडत्वा-** ३०
**दिनेति । क्वचिदित्यस्यैव** व्याख्या **मृत्युवीति** । "डिंबाहवहतानां च विद्युता पार्थिवेन च" (५।९५) इति । **मनोराह । नृपोऽभीति । आदिना** वर्णत्रयपरिग्रहः । पक्षिनिरासाय सादृश्यं सूचयन् शृंगीदंष्ट्रीति **ब्राह्मानुरोधेनाह । शृंगितिरश्चामिति** । तद्रूपं तिर्यग्योनिनामित्यर्थः । एतेनोभयत्र न्यूनता परिहृता । एतदर्थमेवाह । **विप्रेति** । चांडालादिति ***स्मृतिराह** ।

* स्मृत्यन्तरादाह अन्त्यजेति–इति भाति ।

**अंत्यजेति** । अंत्यजादेरप्युपलक्षणमित्यर्थः। अत एवाभ्यर्हितत्वान्नृपस्यैव पूर्वनिपातः । एवं पदार्थमुक्त्वा वाक्यार्थमाह । **तैरिति** । यथाश्रुतेऽसंबद्धत्वाच्छेषमाह । **संबंधिन इति** । एवमग्रेऽपि, वक्ष्यमाण**गौतमा**त्प्रागुक्तसिद्धांतानुरोधेनाह । **बुद्धीति** । एतत्तत्त्वं प्रागुक्तम् । इन्द्रियार्थेनाक्षशब्दे-नातद्व्यापार इत्याह । **यावदिति** । तात्पर्यार्थमाह । **सद्य इति** । व्यवच्छेद्यमाह । **न पुनरिति** ।
५ बुद्धिपूर्वमित्यस्य समूलत्वायाह । **तथा चेति** । व्याख्या पूर्ववत् । **हतानामि**त्यस्याग्रेऽप्युपभयत्र संबंधः । **अयुद्धे इति** सन्निहितपूर्वान्वयि । **प्रमादेति** । तत्र दशाहादेः प्राक् प्रति-पादितत्वात् गोर्ग्रहेऽपीति पाठः । योषितां गोर्वा ग्रहेऽपि ये मृतास्तेषामित्यर्थः । **पुनस्त्वर्थे** । **आहवे** । **संग्रामे** । **उद्यतैः शस्त्रैर्ह**ननसाधनैरायुधैः । पाषाणादिभिरपि । **क्षत्रधर्मो**ऽपराङ्-मुखत्वम् । तेन हतस्य तु सद्यःशौचम् । **यज्ञः** पिंडदानादिरूपः । **संतिष्ठते** समाप्तो भवति ।
१० आशौचमपि सद्य एवेत्यर्थः । तस्य **यज्ञ**त्वोक्त्या तत्पुण्यभाक्त्वं सूचितम् । एवं च तत्रैव मृतानां सद्यःशौचे तदहरेव च सर्वमौर्ध्वदेहिकं वचनात् । एकरात्रं तु तद्विषयमित्युक्तमेव **काश्यपोक्तं** संग्राममृतस्य त्रिरात्रं तु प्राप्तमृत्युकालविषये **भृग्वादि**साहचर्यादिति बोध्यम् । **हरदत्तेन** तु ह्रस्वपाठस्यैव सभ्यत्वांगीकारेण दीर्घमाहेशयुद्धमाबोधनमित्याङ्प्रश्लेषांगीकारेण चमनुषज्य योग-विभागेन व्याख्यातं "डिवाहवेति" **मन्वनु**रोधात् ।

१५ ( **उत्तरार्धः** )

एवं च गौजलाग्निविप्रादिभिरात्मघाते स्मृतिष्वाशौचाभावसद्यःशौचैकरात्रत्रिरात्ररूपा ये पक्षास्तेषामेवं व्यवस्था आद्ययोरवैधात्मघातविषयत्ववृतीयस्य तल्लिक्षितेन कालांतरमृतविषयत्वं तुर्यस्य वैधवृद्धांधात्मघातविषयत्वमिति **वाचस्पत्या**द्युक्तव्यवस्था तु न युक्तेति स्पष्टमन्यत्र । **ज्ञातेति** प्रमित-स्यैवेत्यर्थः । **निमित्तत्वात्** । तत्वस्योक्तत्वात् तज्ज्ञानमात्रं तु न हेतुरनागततज्ज्ञानस्यापि
२० तत्वापत्तेः । **आदिना** मरणम् । अत्र न वक्ष्यमाणलक्षणलक्षितदेशांतरग्रहणमिति स्वव्याख्यानं स्वयमेव व्याचष्टे । **यत्रस्थेनेति** । अपि तु द्वितीयादौ ज्ञायत इति भावः । **तस्मिन्तत्रस्थे** । मातापितृस्थले विशेषस्य वक्ष्यमाणत्वादाह । **सपिंड इति** । सर्वमिति **न्यायेनाह** । **स एवेति** । शुचिरित्यस्यात्राप्यन्वयमभिप्रेत्याह । **शुद्धीति** । न तु श्रवणप्रभृतिदशाहादिकमिति भावः । **मनुरपि** ( ५।७५ )

२५ "विगतं तु विदेशस्थं शृणुयाद्यो ह्यनिर्दशम् । यच्छेषं दशरात्रस्य तावदेवाशुचिर्भवेत् ॥" इति ।

**शंखोपि** । सूचितमाह । **एकेति** । मानवव्याख्यातं । इदं तत्र साधकत्वेन प्राक् लिखितं व्यंग्यार्थमाह । **पूर्णे इति** । इतीत्यनेन । अत एव **मनुना** ज्ञातिमरणमित्येवोक्तम् । नन्वेवं सपिंडत्वाविशेषात्तत्र पितुरपि तन्न स्यादत आह । **पितुस्त्विति** । श्रुते इति शेषः । सचैलमित्यपि **मानवमे**वाह । **श्रुतेति** । नन्वेवमन्यसपिंडानामपि तत्स्यात्ततुल्य**न्याया**दत आह । **एतच्चेति** ।
३० एतदेव पुत्रग्रहणमित्यर्थः । तस्य संबंधिशब्दत्वेन पितुरेव तल्लाभात् तस्याविवक्षितार्थत्वेऽप्याह । **अन्यथेति** । तथेत्वष्टे इत्यर्थः । तस्मा**द्वेवलः** सामान्यरूपोऽपि सपिंडाविषय इत्याह । **तथा** मि. पृ. १७९. **चेति** । सपिंडांशे मूलासिद्धमुपसंहरति । **तस्मादिति** । तं पाठं व्याचष्टे । **प्रोषिते इति** । सर्वाषेमित्यस्य सर्वत्रान्वय इत्याह । **सर्वेषामिति** । तात्पर्यार्थमाह ।

**अवीति** । वक्ष्यमाणवद्विशेषाभावेनेत्यर्थः । अशेषे पुनः शेषाभावे तु तात्पर्यार्थमाह । **अतीति** । उपस्थितत्वादाह । **सर्व इति** । स्पृष्ट्वैवस्तत्वैषसामान्येन सर्वांगस्पर्शप्रतीतेः ।

**अयं च** । एतत् पाठबोध्यः । **दशाहादिति** । **मनुरपि** "अतिक्रान्ते दशाहे तु त्रिरात्रमशुचिर्भवेदिति" ( ५।७६ ) । नन्वेवं पूर्वपाठे बाध्यसद्यःशौचस्य कागतिर्न च तदप्रमाणमेव आर्षत्वाविशेषेण मुनिभेदे इव तदैक्येऽपि तत्वस्य दुर्वचत्वादतः 'शाखांतराधिकरण'**न्यायेन** तत्पाठैकवाक्यतयैव तत्पाठीयद्वितीयपादव्यवस्थाकरणोपस्थिततत्पाठीयद्वितीयपादव्यवस्थामव्यधानेनादौ आह । **पूर्वोक्तं त्विति** । संवत्सरोत्तरम् । अनेन पाठेनैव लाभादाह । **अर्वाक् संवत्सरादिति** । तत्पूर्तिक्षणात्पूर्वमित्यर्थः । एवमग्रे पूर्वत्र च बोध्यम् । अन्यथा विरोधः सर्वत्र स्पष्ट एव । एवं च न कस्यापि वचनस्य वैयर्थ्यम् । एतेन स्नानविषयप्रदर्शक**मिताक्षरा**ग्रंथेऽर्वाक् संवत्सरादित्युक्तेराशयं न विद्म इति **विवेचनोक्तं** समाहितम् । "वर्षोत्तरं स्नानमात्रमिति" **मदनोक्तम्** । पूर्वपाठानुसारेण **मानवे** निर्देशमित्यस्य निःक्रांताशौचकालपरत्वमाश्रित्य त्रिरात्राद्याशौचातिक्रमेऽपि स्नानोदकमात्रमिति **रुद्रधरोक्तं** चापास्तं च ।

विरोधं परिहरति । **यत्पुनरित्यादि** । उक्तसर्वव्यवस्थायां मानमाह । **तथा चेति** । अत्रापि निमित्तसांनिध्यतारतम्यं बीजं बोध्यम् । एतेनान्यथाशंका निरस्ता । **षण्मासे इति** । समाहारे तद्धितार्थे वा द्विगुः । पूर्वत्र पात्रादित्वम् । स्नानमुदकस्याप्युपलक्षणम् । उक्तं मूलात् । उक्त**मानवे** स्पृष्ट्वैवेत्येवं तत्कालनिवृत्त्यर्थो न तदकनिवृत्त्यर्थः । उक्तवाक्यद्वये संवत्सरग्रहणं तदूर्ध्वमपि स्नानोदकप्राप्त्यर्थं न तु वर्षमध्येव नवमादूर्ध्वमप्यधिकाशौचाभिप्रायम् । उक्तमूल **वसिष्ठोक्तेः** । तच्चोक्तमेव व्याख्यात्रा । यत्तु **देवलेनोक्तम्**

"आ त्रिपक्षात् त्रिरात्रं स्यात्षण्मासात्पाक्षिणी ततः । परमेकाह आवर्षादूर्ध्वं स्नातो विशुध्यति॥"
तत्पक्षान्तरं **माधवसंमतमिति** बोध्यम् ।

सपिंडे इति प्रागुक्तिसूचितं विशेषमाह । **एतच्चेति** । प्रोषिते इत्याद्युक्तं सर्वमित्यर्थः । अत एवैतच्चेति सामान्येनैवोक्तम् । तेन च प्रकृतव्याख्येयपरामर्शः । तथैव ग्रंथकारशैलीसत्त्वात् विशेषपरत्वे हि एतच्च पुत्रग्रहणमित्यनुपदोक्तवद्विशिष्यैव ब्रूयात् । किंच **स्मृत्यंतरं वासिष्ठस्यैव** बौधवमाह । मूलादेरित्यत्र विनिगमकाभावः । किं च तेन दशाहेऽपि द्वितीयादौ ज्ञाने त्रिरात्रस्यैव प्रागुत्थानबाधेन तत्रापि तत्संभवः । तस्यापि मूलादिती दशाहोत्तरपरत्वं स्वीकृत्य तद्बोधकमेवेदमिति च स्वतंत्राणामेवं वक्तुमर्हमित्यास्तां तावत् । यत्तु अत्र पित्रादीनां विदेशस्थानां मरणश्रवणे **मिताक्षराहारलताभ्यां** विशेषो लक्षितः स तु **रत्नाकरादिभि**रलिखितत्वादुपेक्षित इति **शुद्धिविवेके** उक्तं तत्तु अंधस्येवांधलग्नस्येति **न्यायायितम्** । यत्तु **पराशरव्याख्यायां नंदपंडितीयायामुक्तं** दशाहांतस्तु पित्रोरपि मरणश्रवणे शेषाहोभिरेव शुद्धिः

"असमीपे पितुः प्रेतं श्रुत्वा देशांतरे सुतः । तिलमिश्रोदकं दत्त्वा तच्छेषेण विशुद्ध्यति॥"इति । **शातातपस्मरणात्** इति तन्न । तद्वचनस्य महानिबंधेषु स्वल्पनिबंधेषु च अदर्शनेन निर्मूलत्वात् । मात्रंशे वचनतो लाभात् । अत एव पित्रोरपीति प्रतिज्ञाया असंगतेः वैपरीत्यापत्तेः आशौचविषये मातृतः पितुः प्राबल्यस्य संनिपाते दृष्टत्वात् निर्मूलोपलक्षणत्वस्य दुर्वचत्वात् पितुः प्रेतमित्यस्यातीव सामंजस्याभावात् असमीपे देशांतरे इत्यनयोः पौनरुक्त्यात् तव पारिभाषिकदेशां-

तरस्यात्राविवक्षितत्वात् दत्वेत्यस्यौचित्याच्चेति दिक् । यदि तु इदमपि योज्यमिति दुराग्रहस्तर्हीत्थं योज्यताम् । **पितुरिति** राहोः शिर इतिवत् षष्ठी । **देशांतरे** पारिभाषिके असमीपे यत्रस्थेन द्वितीयादिदिने श्रवणं भवति तादृशदेशे च सुतः पितुस्तत् श्रुत्वा **तच्छेषेन** श्रवणदिनादारभ्य विहितदशाहाशौचशेषेण तदंगत्वेन स्नात्वा तिलोदकं दत्वा विशेषेण दशाहेन शुध्यतीत्यर्थः । ५ अत्र पक्षे पितरौ चेदित्येकवाक्यतया तेन मातुरपि ग्रहणमिति न प्राक्तदोष इति बोध्यम् । एतेन शावेऽतीते इति सप्तमवृत्तस्यमथ पितृमरणे इति निर्दशाहपरं तदुत्तरं पाठात्तथा सर्वव्याख्यातृभिर्व्याख्यातत्वात् । अत एव सर्वत्वाशौचमित्येवैकादशवृत्ते उक्तम् । अन्यथा तत्रापि अपवादवाक्यांतरं पठितं स्यात् । तस्मात्पितरौ चेदिति स्मृतिर्निर्दशाहपरेति तदाशय इत्यपास्तम् । व्याख्यानादिग्रंथवतस्यापि अयुक्तत्वेन तथोक्तेरयुक्तत्वात् तस्यापि **मिताक्षरानुयायित्वेन** तथा १० दुर्वचत्वात् बाधे दृढे इति **न्यायात्** मानुषाशयापेक्षयाऽऽर्षाशयस्य प्राबल्याच्च । तथा हि विशेषविहितेनापवादेन सामान्यविहितोत्सर्गो बाध्यत इति सकलतांत्रिक**सिद्धान्तो** निर्विवादः । प्रकृते च पितराविति निर्विवादं विशेषशास्त्र**पैठीनसीयं** सामान्यशास्त्रं तु **बृहद्वसिष्ठीयवत् शंखीयं मानवं याज्ञवल्कीयं** चापि निर्विवादमविशेषात्कर्तारश्च भिन्नाः । तथा सति तेनाद्यस्यैव बाधो न **शंखीयादे**रित्यत्र त्वदिच्छैव नियामिका वाच्या सा च न युक्तेति सर्वतंत्रसम्मतमिति तथैव १५ **मुन्याशये विज्ञानेश्वरेण** प्रतिपादित इति तथैव युक्तम् । यदि तु **त्रिंशच्छलोक्यपि** योज्येत्याग्रहस्तर्हि बाध्यसामान्यचिंतयाऽथ पितृविषये इति मध्यपठितमुभयोऽप्यवादभूतं प्रसिद्धं चेदन्यत्र तत्रैवोक्तिस्त्वशोकवनिका**न्यायाद**त एव सामान्यश्रुतदेशकालपदस्वारस्यम् । त्वन्मते तु तस्य संकोचः स्पष्ट एव । अथेत्यस्याप्यत एव । स्वारस्यम् । तेन तत्समाप्तिसूचनात् त्वन्मते त्वनतिप्रयोजकत्वापत्तिस्तस्येति दिक् ।

२० **चेत्** यदि । **पितरौ** मातापितरौ । **मृतौ स्यातां** । **हि** तर्हि । **दूरस्थोऽ**पि वक्ष्यमाणदेशांतरलक्षणलक्षितदेशस्थोऽपि । **अपिना** प्रागुक्तलक्षणलक्षितदेशस्थसमुच्चयः । **पुत्रकः** अनुकंपादौ कन् । **तदि**त्यस्यावृत्याऽन्वयः । तन्मरणं श्रुत्वा तद्दिनं मरणश्रवणदिनमारभ्य गृहीत्वोत्पाद्येर्थः । **दशाहमिति** द्वादशाहादेरप्युपलक्षणम् । इदानीं प्रचरदेवस्थपक्षांतराशयकं वा सर्वसाधारण्येनन्यपूर्वतद्विध्याशयकं वा सूतकी भवेदित्यनेन सूचितम् प्रेतकार्यकरणं दर्शयन्नाह । **तथेति** । **महा-** २५ **गुरुः** पितेत्यग्रे स्फुटीभविष्यति । आर्द्रवस्त्रधारिणा । **वस** आच्छादने । **अपिना**ऽब्दमध्यपरिग्रहः । **आदिना** पिंडदानादि । वर्षोत्तरं सपिंडानां स्नानोदकयोरेवोक्तेराह । **न पुनरिति** । न त्वित्यर्थः । **स्नानमात्रा**त्तु सोदकान्मात्रपदेनोक्तिव्यवच्छेदः । तथा च तादृशमातापितृमरणविषये प्रोषित इत्यादेरपवादोऽयम् । एवं च दशाहमध्येऽपि द्वितीयादिदिवसे तज्ज्ञाने तद्दिनादारभ्यैव दशाहः । दशाहमिति तु लिंगमशिष्यमिति रीत्या बोध्यम् । एवमन्यत्रापि बोध्यम् । न चैव- ३० मेकादशाहादिविच्छेदापत्तिः । दशाहोत्तरमिति पक्षेऽपि तत्र तत् प्राप्तौ तदाहापत्तेस्तुल्यत्वात् । कर्त्रंतरसत्वे बाधकाभावात्सपिंडीकरस्य कालांतरसत्वात् तस्यैव कर्तृत्वे तु दोषाभावात् तत्रापि आद्यश्राद्धमशुद्धोऽपीत्युक्त्या दोषाभावाच्चेति दिक् । एतेन "प्रोषिते कालशेषः स्यादि"त्याद्यपादोक्तस्य साधारणत्वमभिप्रेत्य दशाहोत्तरं तच्छ्रवणे **पैठीनस्युक्तमिति षडशीत्यपरार्कस्मृत्यर्थसारनिर्णयसिंधुविवेचनकृ**दादिसकलग्रंथकाराद्युक्तमपास्तम् । **मिताक्षरा**विरोधात् । निर्युक्तिक-

त्वाच्च । **निर्णयसिंधूक्त**दोषासांगत्याच्च । अत एव देशकालाविशेषादित्युक्तं **त्रिंशच्छ्लोक्याम् ।** एतेनापि शब्दात्कालांतरेत्यपि तदुक्तमपास्तम् ।

अपवादान्तरमाह । **पितृपत्न्यामपीति ।** जनन्यामुक्तत्वादाह । **मातृव्येति । स्मृत्यंतरे दक्षीये।** नेदं पूर्व**पैठीनसि**वत्सर्वप्रागुक्तबाधकं दशाहमध्ये द्वितीयादिदिने तज्ज्ञाने प्रोषित इत्यनेनाधिकप्राप्त्या न्यूनेनाधिकानिवृत्त्या तद्बाधासंभवात् । तथा च तत्र कालदेश एव दशाहोत्तरमपि न प्रागुक्तरीत्या सर्वम् । अपि तु देशकालाविशेषात्त्रिरात्रमेव । अयमेव मातापितृतो विशेषः । उदकदानात्तु तुल्यमेव । तदेतदभिप्रेत्याऽऽह । **विशेष इति । अपेतायां** मृतायाम् । **मातृवर्ज्यं** जननीं वर्जयित्वा । **अपिना** दशाहोत्तरं तन्मध्येऽपि । एतेन 'व्यतीते त्विति' **मदनोक्त**पाठानुसारेण तदुत्तरं तन्मध्ये उक्तवचनाद्दशाह इति केनाचिदुक्तं **स्मृत्यर्थसारोक्तं** चापास्तम् । तथा पाठस्यैवाभावात् । इदं च सर्वं वक्ष्यमाणदेशांतरलक्षणरहितदेशांतरस्थमृत्यादावुक्तं अधुना मरणविषये प्रसंगात्तत्राप्यनुक्तमाह । **यस्त्विति** । वक्ष्यमाणत आह । **नद्यादीति** । तत्रापुत्रस्योक्तत्वादाह । **तत्सपिंडामिति** । तत्र दशाहमध्ये ज्ञानस्यैवासंभवः । कदाचित् ज्ञानेऽपि वा तत्र कालशेष एव तद्बाधे मानाभावात् प्रागुक्तरीत्या तस्यासंभवाच्च आद्यपाठैकवाक्यतया वक्ष्यमाणस्य तद्विषयत्वाच्च अयमेव च पूर्वतो भेदः । अत एव न वर्षोत्तरविषयत्वमेव केचित्पाठानुसारेण एतेन त्र्यहादेरपि कथं बाध इत्यपास्तम् । क्लीबादिसाहचारेण सर्वथा तद्भावविषयत्वाच्च । एतेन प्रागुक्तदेशांतरविषयमेव वक्ष्यमाणवाक्यमित्यपास्तम् । तदेतदभिप्रेत्याह । **दशाहादूर्ध्वं मासत्रयादिति । अपिना** तदूर्ध्वे समुच्चयः । **वैखानसे** वानप्रस्थे । **मृते** इति पूर्वत्रयशेषः । **स्नानेन** सोदकदानेन । **गर्भस्रावे** चतुर्थपर्यंतं । **गोत्रिणः** सपिंडाः । **इतीत्यस्य** मरणादिति शेषः । **पराशरोऽपि** (१।३।१-२१)

"भृग्वग्निमरणे चैव देशान्तरमृते तथा । बाले प्रेते च सन्यस्ते सद्यःशौचं विधीयते ॥

"देशांतरमृतः कश्चित्सगोत्रः श्रूयते यदि । न त्रिरात्रमहोरात्रं सद्यः स्नात्वा शुचिर्भवेत् ॥" इति

अत्रोक्तविषये त्रिपक्षान्मासत्रये त्रिरात्रमित्यादिवचनविहितस्य वर्षांतस्त्र्यहाद्याशौचस्य देशांतरेऽपि वक्ष्यमाणलक्षणे मृते सति प्राप्तौ कथं सद्यःशौचमित्याशंकानिरासायात्र देशांतरं वक्ष्यमाणलक्षणम् न प्रागुक्तमिति सूचनाय निषेधमुखेनानुपादपूर्वकं देशांतरमृते इत्यस्य विवरणमुत्तरपद्यं । एतेन वि(भ?)क्तविषये शेषविहितेन सद्यःशौचेन विरोधात्त्रिरात्रादेस्तत्राप्रवृत्ते तथेति विवेचनोक्तमपास्तं । प्रागुक्तयुक्तेः । सगोत्रशब्दः सपिंडपरः । मुख्येषु तेषु सोदकेष्विव त्रिरात्रारप्राप्तिरेवेति तन्निषेधानुवादासंभवात् । यद्यपि **माधवेन** पूर्वं वर्षमध्येऽप्यसपिंडविषयमाग्रिमं तु वर्षादूर्ध्वं सपिंडविषयं

"बाले देशांतरस्थे च पृथक् पिंडे च संस्थिते। सवासा जलमाप्लुत्य सद्य एव विशुध्यति॥" इति (५।७-) **मनो**राद्यं तथा तत्र देशांतरस्थे इति पृथक्पिंडविशेषणं स च सोदकः संनिधौ तु 'त्र्यहात्तूदकदायिन' इति प्रागेव **मनुनोक्तं** (५।६४) । **मेधातिथिर**प्येवं । एतेन प्रत्येकं च श्रवणादिदमुक्तमिति तदुक्तमपास्तम् । एवं च देशांतरमृतेऽपि सपिंडे त्रिरात्राद्यतिक्रांताशौचं प्रागुक्तव्यवस्थयाऽस्त्येव । अत एव **विष्णुरपि**

"अर्वाक् त्रिपक्षात्त्रिनिशं षण्मासाच्च दिवानिशम् । अहःसंवत्सरादर्वाग्देशांतरमृते सति ॥"

इत्युक्तं तथापि **विष्णोः** समलत्वे संगतार्थत्वे च प्रागुक्तविषयतयोपपत्तेः रसपिंडविषयपूर्वो-

त्तरसंदर्शयतित्वादाद्ये तस्यार्थः । अस्य तदपवादत्वेन यत्फलितं तदाह । **एवं चेति** । अस्य तदपवादत्वे चेत्यर्थः पारिशेष्यादिति पाठे स्वार्थेऽप्यत्र् **तथैव** स्वकर्मनिरत एव । **मृतेति** समाहारद्वन्द्वः । अथवेत्यनेनास्य पक्षांतरत्वं सूचितं । एतेषामिति पाठांतरम् । **दक्षः** ( ६।२।७ )

" सद्यःशौचं तथैकाहस्त्र्यहश्चतुरहस्तथा । षड् दश द्वादशाहाश्च पक्षो मासस्तथैव च ॥

५ " मरणांतं तथा चान्यदशपक्षास्तु सूतके" इति ।

" यथार्थतो विजानाति वेदमंगैः समन्वितम् । सकलं सरहस्यं च क्रियावांश्चेन्न सूतकम् ॥

" एकाहात् ब्राह्मणः शुध्येद्योऽग्निवेदसमन्वितः । हीने हीनतरे चैव त्र्यहश्चतुरहस्तथेति ॥"

च " एकाहात्र्यहात्केवलवेदस्तु हीनो दशभिर्दिनैरिति"**स्मृत्यंतरं च** । आभ्यां विप्रस्यापि कल्पा उक्ताः।तथा शूद्रविषये **मनुपराशरकौर्माः** । "शूद्रो मासेन शुध्यतीति" **देवलः** । "शूद्रस्य १० त्रिंशता शुद्धिः" । त्रिंशता दिनैः । **गौतमजाबालपैठीनसयः** मासं शूद्रस्येति । **मनुः** (५।१३९) "वैश्यवच्छौचकल्पश्चेति" । पंचदशदिनानीत्यर्थः । **शातातपः** "मंत्रावश्यवर्जनाच्छूद्रस्य नाधिकारो न प्रतिषेधो मासमित्येके । तदा स्थितस्तद्वत्स्यादिति" गर्भाधानादि श्मशानांतेषु कर्मसु शूद्रस्य मंत्राणामवश्यं सर्वथा तत्कर्मांगभूतानां वर्जनात्प्रतिषेधात्तस्याशौचग्रहणे नाधिकारो न विधिर्न प्रतिषेध इत्यर्थः । अन्यायवर्तिनस्तस्यावश्यकर्त्तव्यकर्माभावादाशौचग्रहणे कृतेऽकृतेऽपि न कश्चि- १५ द्विशेष इत्यवज्ञायां तात्पर्यम् ।

मतांतरमाह । **मासमिति** । सिद्धांतमाह । **तदिति** । तं ब्राह्मणादिवर्णमाश्रितः शूद्रस्तद्वत्स्यात् । विप्राश्रितो दशभिः क्षत्राश्रितो द्वादशभिर्वैश्याश्रितः पंचदशभिरित्यर्थः । तदेतदभिप्रेत्योपसंहरति ।**एवमनेकोच्चेति** । उक्तप्रकारेण न्यूनाधिकाशौचपक्षा इत्यर्थः । सिद्धांतमाह । **तेषामिति** । न्यूनाधिकपक्षाणां शिष्टलोकव्यवहाराभावादित्यर्थः । तथा च ते नादरणीया इति भावः । कलौ २० क्षत्रियवैश्ययोरभावाच्चेत्यपि बोध्यम् । अतीवेत्यनेन किंचिदुपयोगे तु व्यवस्थापि दर्शितप्राया सुकरा चेति सूचितम् । तथा हि द्विविधानि तानि सामान्यप्रवृत्तानि विशेषतः प्रवृत्तानि च । तत्र द्वितीयेषु यत्र य उपाधिरुक्तस्तत एव निर्णयः । आद्येषु तु दशाहद्वादशाहाद्यपेक्षया न्यूनाशौचकल्पा युगांतरविषयः । "वृत्तस्वाध्यायसापेक्षमघशंकोचनं तथेति" "**स्मृत्यंतरात्** । दशाह एव विप्रस्य सपिंडमरणे सति कल्पांतराणि कुर्वाणः कलौ भवसपिंडविषमत्वोत्प्रेक्षाया निर्वीजत्वादाद्यिमस्य २५ तदूर्ध्वविषयत्वोत्प्रेक्षाया वर्षांतर्विहितत्रिरात्रास्तदूर्ध्वमप्राप्तेरेव तन्निषेधानुवादासंगत्यापत्याऽयुक्तत्वाच्च न युक्तमिति बोध्यम् । **महानदी** ।समुद्रगता । **अंतरं** व्यवधानम् । **वाचः** लौकिकभाषाशब्दाः ।

ननु किमत्र विकल्पः समुच्चयो वा । अत्र केचित् । नाद्यः वाक्यभेदापत्तेः । किं तु अंत्यः । वा स्यादिति **कोशात्** । तथा च त्रितयसत्वे तत्वम् । तत्रापि व्यवस्था त्रितयसत्वे त्रिंशद्योजनांतरे द्वयसत्वे त्रिंशदुपरि एकसत्वे चत्वारिंशदुपरि त्रितयाभावे षष्टियोजनानंतरमिति तन्न । ३० निर्मूलत्वात् । तथा च कथमिति केचिदुच्यते ।भाषाभेदसहितमहानदीपर्वतान्यतरव्यवधाने केवलतद्व्यवधाने च देशांतरम् । तदभावेऽपि आशौचवक्ष्यमाणतारतम्यक्रमेण विप्रस्य त्रिंशद्योजनोपरि देशांतरम् । क्षत्रियवैश्ययोश्चत्वारिंशद्योजनोपरि शूद्रस्य षष्टियोजनोपरि एतेन

"भाषाभेदो महानद्या व्यवधानमथाद्रिणा । त्रिंशद्योजनदूरं वा प्रत्येकं देशभेदकाः ॥

"देशनामनदीभेदान्निकटेऽपि भवेद्यदि । न तु देशांतरं प्रोक्तं स्वयमेव स्वयंभुवे"त्याद्यपास्तम् ।

अनाकरस्थत्वेन निर्मूलत्वात्। केचित्तु "दशरात्रेण या वार्ता यत्र न श्रूयतेऽथवे"त्युक्तेः प्रत्यहं योजनद्वयं गच्छन्पुरुषो यत्र मृतवार्तामाशौचकालमध्ये प्रापयितुं न शक्नोति तद्देशांतरम्। तथा च विप्रस्य दशाहाशौचिनो विंशतियोजनैर्देशांतरं क्षत्रादीनां चतुर्विंशतित्रिंशत्षष्टियोजनैरित्याहुः। विशेषांतरमाह।

इदं चेति। "प्रोषिते कालशेषः स्यादि"त्यत आरभ्य यदुक्तमित्यर्थः। तन्नामाह। ५ अतीति। अनन्यभावे विषयशब्दस्तत्रैवेत्यर्थः। तद्व्यवच्छेद्यमाह। **न पुनरिति**। न त्वित्यर्थः। तत्प्रयुक्ताविशेषेत्याद्यर्थः। उपनीतोपेक्षयनेन वयोवस्थाशौचवतस्य सर्ववर्णसाधारण्यमपि सूचितम्। उभयत्र मानमाह। **तथा चोक्तमिति**। दुरुहत्वात्कथमुक्तार्थलाभोऽत आह। **अयमर्थ इति**। जन्मादौ पाक्षिकभेदस्य सत्वादाह। **त्रिवर्षादिति**। एतेन जन्मप्रभृत्युपनयनादर्वाचीने वयसीति **मदनो**क्तमपास्तम्। **अतीति**। तत्र यच्च त्र्यहाद्याशौचमित्यर्थः। व्यर्थमाह। **पुनरिति**। अति- १० क्रांते इत्यस्यानुषंगमभिप्रेत्याहोपरते इति। शास्त्रोक्तमस्तीति शेषः। सांप्रतं तथाऽननुष्ठाना-द्भवतीति नोक्तां व्याख्यात्रा। अत्र सर्वेषामित्यनुषंगेणाह। **ब्राह्मेति**। पूर्वान्वयि। अथ तुर्यपादार्थ-माह। **तस्मिन्नेवेति**। एवव्यवच्छेद्यमाह। **न पुनरिति** ॥ २१ ॥

## याज्ञवल्कीये २२ श्लोकः।

व्यवहितसंगतिमाह। **क्षत्रीति। द्वादशेति** पृथक् पदम्। एवमग्रेऽपि। तुर्यपादार्थमाह। १५ **स्वमयेति। न्यायेत्यस्यार्थः। पाकेति** वैश्वदेवेत्यत्ति किल्बिषीति **हारीताच्चेति** गतिं **माधव** आह। "सीदत्कुटुंबादीनां प्रतिग्रहादियोग्यतामात्रसंपादका इत्यन्ये"। **गतिमाहरिति**। मरणांताशौचविषयस्तु **दक्षेणैव** दर्शितः ( ६।८–१० )

"अस्नात्वा चाप्यहुत्वा च अदत्वाऽन्नं तथा द्विजः। एवंविधस्य विप्रस्य सदा तत्सूतकं भवेत् ॥

"व्याधितस्य कदर्यस्य ऋणग्रस्तस्य सर्वदा। क्रियाहीनस्य मूर्खस्य स्त्रीजितस्य विशेषतः ॥ २०

"व्यसनासक्तचित्तस्य पराधीनस्य नित्यशः। श्राद्धत्यागविहीनस्य[1] भस्मांतं सूतकं भवेत् ॥"इति।

मि. पृ. १८० श्राद्धत्यागः। श्राद्धे त्यागः। श्राद्धस्यागस्तत्करणमिति यावत्। तथा चेत्थं पर्यवसितम्। उपनीतमरणे विप्रस्य दशाहाशौचम्। क्षत्रस्य द्वादशाहं वैश्यस्य पंचदशाहं शूद्रस्य षोडशवर्षपूर्णे सपिंडमरणे मासं।

"अनूढभार्यः[2] शूद्रस्तु षोडशाद्वत्सरात्परम्। मृत्युं समधिगच्छेच्चेन्मासात्तस्यापि बांधवाः॥ २५

"शुद्धिं समधिगच्छंति नात्र कार्या विचारणेति।" **शंखा**त्सच्छूद्रस्य पक्षं प्रागुक्तत्वात्। विंशतिरात्रं तु वैश्वदेवरहितद्विजशुश्रूषादिरतशूद्रविषयम्। सर्ववर्णानां दशाहमेव वा। इदानीं तनशिष्टशूद्रक्षत्रवैश्यपरिगृहीतश्चायमेव पक्ष इति। एतच्च सर्वं ब्राह्मणादिग्रहणात्सजातीयमेव।

अथ प्रसंगाद्विजातीयेष्वाह। **यदा पुनरिति**। तत्र हारीतमाह। **स्वाद्यादिति**। विप्रास्वयोनिषु। **जन्महानौ** जन्मनि मरणे च। यात्रादिः विप्रादेर्मूर्द्धाविसिक्तादियुतावदनंतरे ३० षडह एकांतरे त्र्यहो द्व्यंतरे एकाह इत्यर्थः। मूर्द्धावसिक्तादेर्ब्राह्मणादिषु तु जाते मृतेव

---

१ श्राद्धत्याग-इति मुद्रितदशौचपाठः। २ अ. १५।६–७ अनूढभार्य इति शङ्खीयपाठः।

जात्याशौचं तत्कथयन्नादिसंग्राह्यमेवाह । **विष्णुरप्याहेति । क्षत्रियेति ।** "ब्राह्मणस्य क्षत्रियविट्शूद्रेषु षड्रात्रत्रिरात्रैकरात्रै"रित्यादि । **हीनेति ।** अधिकवर्णसपिंडमरणादौ हीनवर्णानां अधिकवर्णसपिंडाशौचातिक्रमे शुद्धिरित्यर्थः । विप्रादयः शूद्रस्य विजातीयसपिंडाः । तत्र सपिंड-विप्रगृहे जननादौ दशाहेऽतीते तस्य शुद्धिः । एवं क्षत्रवैश्ययोर्द्वादशसु पंचदशसु च दिनेषु
५ अतीतेषु शूद्रः शुद्धो भवेदिति भावः । **इत्युक्तमिति** । अनुलोमजविजातीयविषयेऽपीति । दशाहादिति भावः । तेषामाशौचे क्षत्रादिजननादिति निमित्ताशौचे ।

विरोधं परिहरति । **अनयोश्चेति ।** यथाक्रममाह । **आपदिति ।** अत्रापस्तंबेनान्योऽपि विशेष उक्तः "क्षत्रविट्शूद्रजातीनां तोयेन्मृतकसूतके । तेषां तु पैतृकं शौचं विभक्तानां तु मातृकमिति" । क्षत्रादीनां ये मृतकसूतके स्तस्तत्रायं विभागः । येऽनुलोमविवाहोत्पन्नाः क्षत्रादयो
१० मुर्द्धावसिक्तादयस्तेषां विभक्तानां पितृगृहावस्थितानां स्वापत्यजननादौ पैतृकं पितृजातीय-माशौचं विभक्तानां मातृजातीयं । अत्र क्षत्रादिशब्देन न मुख्यग्रहणं तेषां जातिभेदासंभवात् । किंतु मूर्धावसिक्तादीनां त्रयाणां ग्रहमित्यर्थः । अन्यदप्याह । **दास्यादीनामिति ।** मासपूर्ति-क्षणावधिरेवेत्यर्थः । दास्या इत्युभयान्वयि । सपिंडमरणे इति शेषः । "स्वामिमरणे तु स्वजाती-याशौचमृते स्वामिन्यात्मीयमिति" **विष्णोः ।** दासाश्च गृहजातक्रीतलब्धदायोपागत-अकालान्नभृत-
१५ स्वाम्याहितमहाऋणमोक्षितयुद्धप्राप्तपणाजिततवाहमित्युपगततदास्युद्वाहेन प्राप्तदासत्वकं भक्तदास आत्मविक्रयिप्रव्रज्यावसिता इति पंचदश । प्रतिलोमदासादेस्त्वाशौचाभाव एव "आनुलोम्येम दासानामिति" **विष्णूक्तेः**

अन्यदप्याह । **प्रतीति ।** सूतादीनामित्यर्थः । **माधवादयस्तु** तस्मिन्निमित्ते शूद्रस्य यदाशौचं तन्निमित्ते प्रतिलोमानां तदेव शौचाशौचे प्रकुर्वीरं शूद्रवद्वर्णसंकरा इति
२० **ब्राह्मादित्याहुः ॥ २२ ॥**

## याज्ञवल्कीये २३ श्लोकः ।

व्यवहितसंगतिमेवाह । **वयोवस्थेति ।** दंतोत्पत्तेः प्रागिति शक्यार्थस्तत्फलितमाह । **याव-तेति । अतीतस्य मृतस्य ।** 'आ चूडादि'त्यव्ययीभावः । चूडापदं च लाक्षणिकमित्या चूडाकरणा-दिति । तत ऊर्ध्वमिति भावः । निशाशब्दस्तत्पर इत्याह । **अहोरात्रेति ।** स्त्रीत्वोपपत्तये आह ।
२५ **अशुद्धिरिति । पूर्वोपस्थितत्वादाह । अशुद्धिरिति ।**

मि. पृ. १८१. अथ सर्वाविरोधं प्रतिपादयति । **अत्र चेत्यादिना** दशरात्रादिकमितीत्यंतेन । **वैष्णवे**ऽग्निसंस्कारनिषेधसाहचर्यात्सद्यःशौचस्यादाहविषयत्वेऽन्यस्य **दाह**विषयत्वं परिशेषादित्याह । **सति त्विति । मूलमेवाह । अहस्त्विति । शिशावित्यु**त्तरान्वयि । अत्र दंतजननं सप्तममासोप-लक्षणम् । 'दंतजन्मसप्तमे मासी'**त्युपनिषदुक्तेः** 'नात्रिवर्षस्येति' प्रागुक्त**मानवे** साहचर्यादुदक-क्रियोपलक्षितस्य दाहस्यापि नामकरणोत्तरं विकल्पितत्वान्नामकरणादूर्ध्वमिति बोध्यम् । तच्चाशौचांतदिनोत्तरदिनोपलक्षणम् । तदेतत् ध्वनयन्नाह । **नामेति । मनुमाह । चूडेति । दंतजननात्सप्तममासात्** । कर्मपर्यंतं तत्र तत्करणपर्यंतं । तत्र तु प्रथमवर्षे कृतचूडस्य तु

१ पृ. १८१ पं. २१ ।

'दंतेति' दंतोत्पत्तौ सत्यामसत्यां चेत्यर्थः । यद्यपि प्राग्वच्चूडाग्रहणं नोपलक्षणमिति वक्ष्यते तथापि **वक्ष्यमाणांगिरसा**नुरोधेनाह । **त्रिवर्षमिति** । तथा चाऽचूडादित्यस्य विषयद्वयं । अत्रासाधारणमानमाह । **तथा चेति** । अपिना अदंतजातसमुच्चयः । तत्र व्यावर्तकमाह । **अकृतेति** । अत एव तु शब्दः । तथा च कृतचूडे उभयत्रापि त्र्यहमिति भावः । इदं च दाहादाहसाधारणं स्मृतीषु बह्वीषु तत्कृतविशेषानुक्ते चूडाकृतविशेषस्यैवोक्तेश्च **आंगिरस**मात्रे ५ दाहोल्लेखेऽपि तद्विषयस्य वक्ष्यमाणत्वाच्च । यत्तु **विष्णुवासिष्ठयो**र्व्यवस्थापेक्षायामांगिरसा- "दाहे त्र्यह अदाहे त्वहरि"ति युक्तं **आंगिरस**स्य वक्ष्यमाणविषयकत्वं तु न युक्त जातदंतपद- वैयर्थ्यापत्तेः । न हि पूर्णत्रिवर्षोऽप्यजातदंतः संभाव्यते। तस्मा**द्विज्ञानेश्वरो**क्तव्यवस्था न युक्ता । अत एवाऽशौचदशकादाविदमेवोक्तमिति **विवेचनकृत्तन्न** ।मूलविरोधापत्तेः। तथा सति दंतजाता- दंतजातवत् कृतचूडेऽकृतचूडेऽपि अदाहे एकस्याप्राप्तत्वेन **वैष्णवे**ऽन्यव्यावर्तकतुघटिताकृतचूडे- १० त्वित्यास्यानर्थक्यापत्तेश्च । दंतजातेऽपीत्येवासिद्धेः । **अंगिरसस्य** दंतजातपदसत्वे एतद्विषय- कत्वस्य लाभेन तदानर्थक्यापत्तेश्च । दंतजातेऽपीत्येव सिद्धेः । आंगिरसस्य दंतजातपदसत्वे एव तद्विषयकत्वस्य लाभेन तदानर्थक्याभावाच्च अकृतचूडत्वस्य प्रथमवर्षादिसाधारणत्वात् जातदंता जातसाधारणत्वाच्च वाऽऽहिताग्न्यादिष्वित्युभयं साधु । तत्सत्वे तु वै निश्चयेन पूर्णतया जाता दंता यस्येत्यर्थेन निश्चितपरिपूर्णदंतः । विशिष्टलाभेन तस्य तदुत्तरमेव स्पष्टत्वेन तथा १५ सुवचम् । सूचितमिदं **विष्णुवचनेन** । विरोधश्च दुष्परिहरः स्यादित्यग्रे वदता **विज्ञानेश्वरेणा-** पीति दिक् ।

त्रिरात्रमात्रेत्यस्य विषयमाह । **तत ऊर्ध्वमिति** । यदाकदाचित् क्रियमाणचूडाकर्मत **ऊर्ध्वं निवृत्तेति** यदाकदाचित्कृतचूडानामित्यर्थः । **अयमेव** उक्तद्विविध एव । **यत्त्विति** । प्रागुक्तं सर्वं व्याख्यातं च । प्रागुक्त**मन्व**रोधेनाह । **तत्संवत्सरेति** । तत् उभयं । उपलक्षणमिदं २० द्वितीयवर्षस्यापि ।

"ततः संवत्सरे पूर्णे चूडाकर्म विधीयते । द्वितीये वा तृतीये वा कर्तव्यं स्मृतिदर्शनात् ॥"

इति **यमात्** । **वासिष्ठे** ऊनद्विवर्षग्रहणेन **तस्य** निखननस्य मुख्यत्वाद्दाहाभावे प्राप्ते त्रिरात्र- विधिद्वारा पाक्षिकानुकल्पभूतमप्यस्तीति सूच्यते । अन्यथा तदानर्थक्यं स्पष्टमेव । काले इत्येव वदेत् । एवं "ऊनद्विवार्षिके बाले प्रेतत्वमनुगच्छति" इत्यादि**यमीये** एकाहविधौ तद्ग्रहणमपि २५ तस्य निखननं मुख्यमन्यस्य दाहो मुख्य इति ज्ञापनार्थम् । एतेनाचूडादि यत्र चूडाग्रहणं कालोप- लक्षणमिति प्राच्योक्तमपास्तम् । तस्यानियतकालत्वेन कालविशेषस्योपलक्षयितुमशक्यत्वात् । नामकरणस्य तु नानियतकालत्वं सर्वेषामाशौचांतपरत्वात् कथंचिदुपलक्षकत्वे तु "विप्रे न्यूने"- **त्यांगिरसा** तृतीयवर्षपूर्तेरेवावधित्वमुक्तम् । एतेन तस्य कालोपलक्षणत्वात्तृतीयवर्षस्य च तत्काला- त्सप्तममासादूर्ध्वं वर्षद्वयाभ्यंतरेकाह इत्यपि **प्राच्यो**क्तमपास्तम् । चूडायाः प्रथमादिकालत्वेऽपि ३० विप्रे न्यूनेत्यं**गिरसा** तृतीयवर्षात्पूर्वमहोरात्रविधेस्तदेकवाक्यतया तृतीयवर्षमेवाऽऽचूडादित्यादिषु गृह्यत इति **रुद्रधरोक्तं** च । **यमीये** संवत्सरे पूर्णे इत्येव द्वितीयलाभतत्पदवैयर्थ्याभावार्थं तत्र पूर्णे इत्यनुषज्य व्याख्याय तृतीयपदानर्थक्याभावार्थं तस्य तृतीयचरमावयवपरत्वं । पूर्वस्य तु तदाद्यावयवपरत्वमिति व्याचक्षाणो **मिश्रः** । प्राच्यस्तु अकारप्रश्लेषाज्ञाननिबंधन इति दिक् ।

**दाहेति** क्विच् सपिंडाभिप्रायः । प्रार्थयंतीतिवद्वा । यथाकुलमिति प्रागुक्तमूलादाह । **कुलेति** । **तेनैव अंगिरसैव** ।

उक्तव्यवस्था न युक्तेत्याह । **न चेति** । **हि** यतः । अभ्युपेत्याह । **तथेति** । चोऽप्यर्थे । उपसंहरति । **तस्मादिति** । एतेन व्यवस्थांतरमपि न युक्तमिति सूचितम् । अदंतजातानामित्यनेन ५ सप्तममासात्पूर्वं न तस्यापि ग्रहणेन प्राग्वत्कृतन्यूनपरतया दुर्योजत्वादाह । **तन्मातेति** । **निरस्य** मैथुनं । धर्मेण त्यक्त्वा । **उपस्पृश्य** स्नात्वा । **वैजिकादिति** । बीजावापनिमित्तकादपत्यापत्यवत्संबंधादित्यर्थः । **अघं** आशौचं । **अनुरुंध्यात्** कुर्यात् । तथा च शुक्रनिरसने कृतस्नानस्य यादृशमशुचित्वं न तादृशमत्रापि तु त्र्यहमिति भावः ।

उक्तवचनबाहुल्यात् व्यामोहनिरासाय स्पष्टार्थं संकलय्याह । **ततश्चेति** । उक्तरीत्योक्त- १० वचनानामेकवाक्यत्वाच्चेत्यर्थः । **अर्थः** सिद्धांतः । **इतरथा** अग्निसंस्काराभावे जातदंतस्य सप्तममासिकादेस्तु । **इतरस्य** अकृतचूडस्य । **अपिना** कृतचूडसमुच्चयः ॥ २३ ॥

## याज्ञवल्कीये २४ श्लोकः ।

### ( पूर्वार्धः । )

एतत्संगतिमाह । **इदानीमिति** । पुरुषेषु तत्कथनानंतरमित्यर्थः । वक्ष्यमाणापस्तंबादाह । १५ **कृतेति** । तथा **मनो**राह । **वागिति** । **वी**त्यस्याऽर्थो **विशेषणेति** । साकांक्षत्वात्पित्रादेस्तदाधिक्याच्चाह । **सपिंडानामिति** । प्रेतास्विति शेषस्तत्र बोध्यः । एवमग्रेऽपि । साप्तपौरुषत्वनिरासायाऽऽह । **सापिंड्यं चेति** । कूटस्थमारभ्येति भावः । **त्रिपुरुषेति** कर्मधारयो न तु द्विगुस्तदर्थाविवक्षणात् । **अप्रत्तानामनूढानाम्** । प्रागुक्तत्वात्तथैवाह । **अनुत्पन्नेति** । उक्तविशेषद्वयफलद्वयं क्रमेणाह । **अकृतेति** । एवं च यदाकदाचित् कृतचूडायास्त्रिवर्षादूर्ध्वमपि ग्रहरेव एतत्प्रवृत्तेः

२० "अविशेषेण वर्णानामर्वाक्संस्कारकर्मणः । त्रिरात्रात्तु भवेच्छुद्धिः कन्यास्वह्ना विधीयते॥"

**इत्यंगिरसा** यत्र पुम्पत्ये त्र्यहस्तत्र कन्यास्वहोरात्रविधानाच्च । एवं च कदाप्यकृतचूडायाः सद्यः शौचमिति भावः । **असंस्कृतानाम**विवाहितानां **मनू**क्तमेवाह । **निर्वृत्तेति** । ननु दशाहमपि मि. पृ. १८२ प्रागुक्तमेव । तेन दशाहमित्यादिनाऽत आह । **न पुनरिति** । ननु विधाने कुतो युक्तत्वमत आह । **अत एवेति** । ततः प्राक्तनस्य युक्तत्वादेवेत्यर्थः । **प्रदत्ता तु या** २५ वाग्दत्ता तु वारिपूर्वकं नैव प्रतिपादिता दत्तेत्यर्थः । व्यवस्थामाह । **तत्रेति** । तयोर्मध्ये इत्यर्थः ।

उभयसाधारणं पूर्वत्र सूचितम् । विशेषमाह । **इदं चेति** । पुरुषेषु स्त्रीषु चोक्तमित्यर्थः । क्षत्रियस्येत्यादि वैधर्मे दृष्टान्तः । नैवमन्यत्र दृष्टमिति शंकां परिहरन्प्रसंगादन्यत्रापि तत्वं प्रतिपादयन्नुपसंहरति । **अत इति** । उक्तहेतोरित्यर्थः । सर्वेत्यस्याग्रे सर्वत्रानुषंगः । यद्वचयथा च वक्ष्यमाणसंगत्यर्थमाह । **यथा वेति** । एवं मुनिसंमतेऽर्थे आचार्यसंमतिमप्याह । **अत एवेति** । ३० उक्तहेतोस्तथा भवितुमर्हत्वादेवेत्यर्थः । **आदिना**

"विप्रे न्यूने त्रिभिर्वर्षैर्मृते शुद्धिस्तु नैशिकी । द्व्यहेन क्षत्रिये शुद्धिस्त्रिभिर्वैश्ये मृते तथा ॥

"निवृत्तिः कूडके विप्रे त्रिरात्राच्छुद्धिरिष्यते । निवृत्ते क्षत्रिये षड्भिर्वैश्ये नवभिरुच्यते ॥

"शूद्रे त्रिवर्षन्यूने तु मृते शुद्धिस्तु पंचभिः । अत ऊर्ध्वं मृते शुद्धो द्वादशाहो विधीयते ॥

"षड्वर्षांतमतीतो यः शूद्रः स म्रियते यदि । मासिकं तु भवेच्छौचमित्यांगिरसभाषितम् ॥"

**इत्यंगिर** आदिपरिग्रहः । **विगीतत्वेति** । बहूनामनुग्रहो न्याय्य इति **न्यायेन** तेषामनेक-महास्मृतिविरोधतत्वामिति भावः । तेषामपि गतिं स्वयमाह । **वि....बुद्ध्येति** । अनेन तत्कृताऽनादरोऽशक्तिमूल इति तदंशेऽरुचिः सूचिता ।

## ( उत्तरार्धः )　　५

गुर्वादीनां प्रायोऽसपिंडानामुक्त्या तत्र कथमप्याशौचप्रयोजकधर्मराहित्येन तदभावादाह । **अतिदेशमिति** । सांनिध्यादहरित्यस्य चेन समुच्चये तद्वत्तद्विधौ फलितमतिदेशमित्यर्थः । अनेनाव्यवहितसंगतिः सूचिता । **उपाध्यायो** वेदैकदेशाध्यापकः । **अंगानां** व्याकरणादीनाम् । वक्ष्यमाणस्मृत्यनुरोधेनाह । **मातुलेति** । इतरस्मृत्यपेक्षया धर्मस्मृतेरंतरंगत्वेन प्राबल्यादाह । **एकेति** । समानेत्यर्थः । एवं पदार्थानुक्त्वा वाक्यार्थमाह । **एष्विति** ।　　१०

अथानुक्तविशेषान्प्रतिपादयितुमनुसंधातव्येत्यंतेनादौ तथा कृतव्याख्यानफलमाह । **यस्त्विति** । य उपनयनमात्रं कृत्वा वेदं प्रयच्छति स आचार्यः । यस्तु गर्भाधानाद्युपनयनांत-क्रियाः कृत्वा तत्करोति स गुरुरिति प्रागेवोक्तम् । **संस्थिते मृते** । इदमप्यन्यस्मिन्नंत्येष्टिकर्तरि सति नान्यथेत्याह । **यदा त्विति** । **पितृमेधामिति** । **प्रेताहारैर्दशपिंडैः** सार्द्धं पितृमेधमंत्येष्टिं समाचरेत् कुर्यादित्यर्थः । **तत्रेत्यादि** वाक्यान्तरम् । समाचरन्निति पाठे तत्कुर्वन्स दशरात्रे　१५ शुध्यतीत्येकमेव वाक्यम् । तदा तत्रेति व्यर्थं मरणविषये इत्यर्थकं वा । ब्रह्मचारिणोऽप्ययं विधिर्ज्ञेयः । प्रेतं हरंति निर्यापयन्ति ते तथा । यथा तेषां दशाहस्तथा शिष्यस्यापीति तु **मेधातिथि**-स्तत्पुनरुक्तिग्रस्तं तेनैव **सब्रह्मेति** । इतरः सब्रह्मचारी कुर्यात् । एवमन्यत्रापि बोध्यम् । **समानेति** । तथा च समानग्रामीणे आशौचाभाव एवेति कश्चित् । तत्वं त्वनु(प)पदमेव वक्षते । **आदिना** पक्षिण्यादि यथा संभवं संबंधो वाचनिकः । यद्यपि **कोशे** उपसंपन्न-　२०

मि. पृ. १८३.

शब्दोऽमृतपर्याय उक्तस्तथाऽप्याशौचस्य बहुत्वादन्यथा व्याचष्टे । मैत्रातिशीलं स्वाचारादिगुणः । एवं च पक्षद्वयेऽपि समानग्रामिणे संनिहिते त्रिरात्रादि । अनुपसन्ने समानग्रामिणे संनिहिते एकाहः । असमानग्रामिणे तु उपपसन्ने तु पक्षिणीति **स्मृत्यर्थसारे** । अनुपसन्ने समानग्रामिणे तु सद्यःशौचम् । उक्तदेशांतरलक्षणरीत्या एकाहपक्षिणीत्रिरात्रशौचेषु द्विचतुःषड्योजनरूपाणि देशांतराणि योज्यानीति **दीक्षितोक्तेः** । अस्योपयोगः सोदकादावपि बोध्य इत्यग्रे स्फुटी-　२५ भविष्यति ।

यत्तु मातुलग्रहणं पूर्वान्वयि न तूत्तरान्वयि तथा साति बांधवत्वादेव सिद्ध्या तदानर्थक्या-पत्तेस्तन्वेति ध्वनयन्नाह । **मातुलेत्यादि** । प्रत्यासत्तेरेव युक्तमिति भावः । स्रादेतस्यापि रात्रिमिति तत्र स्पष्टार्थः । एवमग्रेऽपि । यद्वा मातुले एव पक्षिणीशिष्यादौ रात्रिरहोरात्रम् । **ऋत्विक्** पाकयज्ञादिकृत् । वृतः सन्श्रोत्रियांशे एवाह । **तथा चेति** । तथा **बृहस्पतिरपीत्यर्थः** । ऋत्विगंशे　३० आह । **तथेति** । **याज्यो** यजमानः । तथा च ऋत्विजि अग्निवृतकर्मणि बहुकालं श्रौतस्मार्त-कर्तरि वा एव ग्रामसृते त्रिरात्रं ग्रामांतरे पक्षिणी अन्यथैकरात्रम् । ग्रामांतरे एकग्रामे पक्षिणीति

---

१ 'समारभेत्' इत्यपि पाठः ।

बोध्यम् । **वृद्ध इति मनुः प्रचेताश्चेत्यर्थः** । प्रश्ने उत्तरमाह । **त्रिरात्रेणैवेति** । एवेन पक्षांतर-व्यवच्छेदः । **तद्वत्** असंस्कृतदौहित्रादिवत् । **गुराविति** । तथा प्रागुक्तैकाहो ग्रामांतरादिविषय इति भावः । अत्र गुरुः केवलाध्यापक इति केचित् । **असपिंडे** सोदके इत्यर्थः । देशांतरादाविति भावः । एकस्माद्गुरोर्बहुकालं वेदमधीयानः **सहाध्यायी** । **एकोदकानां** सोदकानां सप्तम्य ऊर्ध्वं चतुर्दशपर्यंतानां । तत ऊर्ध्वमेकविंशतिपर्यंता **गोत्रजाः** । **मातृबंधौ** मातृबांधवेषु । **तथा** एकाहः । **वृद्ध इति विष्णुर्मनुश्चेत्यर्थः** । **भगिन्यामिति** भ्रातृभगिन्योर्मिथो बोध्यमेवं भागिन्योरपि न भ्रात्रोस्तयोः सपिंडत्वादिति भावः । **कुलपतिर्मं**डलाधिपतिः । **तपस्वी**त्युभयविशेषणं इति कश्चित् । पृथक्निमित्तं तयोर्निर्गुणाघोरेवाऽत्र ग्रहणस्येष्टत्वादिति परे । **नक्षत्रेति** दिवाशौचाभिप्रायमिदं । रात्रौ **चेत्तुल्यन्याय**त्वात्पूर्वदिनाच्छुद्धिरिति बोध्यम् । नगरेऽपि स्वस्ववीथ्यां यावच्छवस्तिष्ठति तावत्तत्राशौचमुक्तन्यायेनैव अन्यसंग्रहायाहे**त्यादीनीति** । सर्वविरोधं परिहरति । **तेषु चेति** । **संनिधीति** । इदमुपलक्षणं गुणवद्गुणापेक्षया गृहभेदेन वर्णभेदेन प्रीत्युपकारातिशयतद्भावाभ्याम-पीति बोध्यम् । इदमप्युत्सर्गत आचार्योपाध्यायशिष्यसहाध्यायिषु वृत्ताध्ययनत्वाभ्यां सकलैकं-देशाध्ययनेन च ऋत्विक्याज्ययोर्बहूल्पकालत्वेन श्रौतस्मार्तभेदेन चेत्यपि बोध्यम् ॥ २४ ॥

## याज्ञवल्कीये २५ श्लोकः ।

अहोरात्राशौचमन्यत्राप्याहेत्याह । **किं चेति** । एवमग्रेऽपि । अनौरसपदेन परिभाषित-भिन्नग्रहणं । तद्वाह । **क्षेत्रजेति** । तेन बीजिनोऽपि क्षेत्रजादौ तत्सिद्धिः । अत एव **प्राजापत्ये** परपत्नीसुतेषु चेत्युक्तम् । **बार्हस्पत्ये**ऽप्येवं । **जातेष्विति** यथासंभवं बोध्यम् । **अहोरात्रमिति** । बीजिक्षेत्रिणोर्यथासंभवं । तेनाद्यामुष्यायणदत्तकक्रीतादौ पूर्वापि न दशरात्रं नापि त्रिरात्रादीति भावः । **आश्रितास्त्विति** । व्यभिचारार्थमिति भावः । पूर्वपरपत्योरिति बोध्यम् । दत्तविशेषण-फलमाह । **प्रतीति** । विशेषमाह । **एतच्चेति** । दत्तकादिविषयकं चेत्यर्थः । आशौच-मित्यंतेनान्वयः । तस्यैवाशौचमिति भावः । एवव्यावृत्तिमाह । **सपिंडेति** । **गोत्रिणः** सपिंडाः । **तस्य त्विति** । तत्प्रसवादाविति भावः । अविरोधमाह । **अनयोश्चेति** । "गोत्रिणः स्नानशुद्धा" इत्येतत्पितुस्त्रिरात्रान्न्यूनाशौचविषयमित्याह । **यदा त्विति** । यद्यपि परपूर्वाग्रहणात् द्वितीयपत्युरेव त्रिरात्रं प्राप्नोति तथापि प्राजापत्यादावनाश्रितग्रहणात्पूर्व-स्यापि पितुरित्युपलक्षणं पत्युरपि । तथा च **हारीतः**

"परपूर्वासु भार्यासु पुत्रेषु कृतकेषु च । भर्तृपित्रोस्त्रिरात्रं स्यादेकाहं तु सपिंडके ॥" इति ।

यद्यप्युक्त**प्राजापत्य**वचनात्पतिपितृतत्सपिंडानां त्रिरात्रस्यानयोरत्यंततुल्यविषयत्वं प्रतीयते तथापि त्रिरात्रविषये सपिंडानां **मरीचिहारीताभ्या**मेकाहविधानात् सामान्यतः समान-विषयत्वांगीकारेण पूर्वोक्तोऽवांतरविषयविभागः कल्प्यः । एवं च सद्यःशौचानुवृत्तौ "अन्यपूर्वासु भार्यासु पुत्रेषु कृतकेषु चेति" **शंखलिखित**वचनमपि भार्यापुत्रशब्दयोः संबंधिशब्दत्वादुप-स्थितयोः पतिपित्रोः सपिंडानामित्यध्याहारेण सपिंडविषयमेव व्याख्येयम् । अत्यधमजातीयभार्या-शास्त्रीयपुत्रविषयमिति कश्चित् । भिन्नपितृकसोदरे च जाते एकाहः । मृते त्र्यहः । तथा च **मरीचिः**

"मात्रैकेयौ द्विपितृकौ भ्रातरावन्यगोत्रजौ । एकाहं सूतके तत्र त्रिरात्रं मृतके तयोः ॥" इति ।

मि. पृ. १८४ विशेषांतरमाह । **किंचेति** । पूर्वोक्तार्थकत्वेऽहरित्यनुवृत्त्यैव सिद्धे पुनरहर्ग्रहण... तत्पदस्य च वैय्यर्थ्यापत्तिरत आह । **यस्मिन्निति** । **मात्र**पदेन रात्रिव्यवच्छेदः । तुल्य-**न्यायादाह** । **रात्रौ चेदिति** । **विषये** देशे ॥ २५ ॥

## यांज्ञवल्कीये २६ श्लोकः ।

अत्र च द्विजशूद्रब्राह्मणमुपलक्षणं पूर्वत्राशौचस्योक्तत्वात् ।

"विहितं हि सपिंडस्य प्रेतनिर्हरणादिकम् । दोषः स्यात्त्वसपिंडस्य तत्रानाथक्रियां विना ॥"इति **हारीताच्चा**सपिंडस्यासपिंडानुगमनमात्रनिषेधे तात्पर्यात्तदूर्ध्वं नयन्नाह । **सपिंडेति** । **क्वचिदित्य**नेनानाथसंग्रहः सूचितः । उत्तरान्वयि वा । तदाह । **यदीति** । उक्तिसामर्थ्याद्दनुद्धृत-लाभेन फलितमाह । **तडागेति** । **प्रमाणेति** । कृच्छ्रेष्वपाठेन कृच्छ्रत्वाभावेनेति भावः । १०

यद्यपि निषेधस्य सामान्यविषयत्वादनंतरोक्तस्नानादिविधेरपि तद्विषयत्वमेवांजस्येन प्रतीयते तथाऽपि हीनवर्णानुगमनेऽपि स्नानाग्निस्पर्शघृतप्राशनानामितरानिरपेक्षे शोधकत्वे वक्ष्यमाणैकरात्रादि-विरोधास्तत्सापेक्षशोधकत्वे हीनवर्णानुगमननिमित्तैकरात्राद्यंते स्नानस्य प्राप्तत्वेनाविधेयत्वात्समोत्तर-वर्णानुगमने त्वप्राप्तत्वेन तस्य विधेयत्वाद्विध्यनुवादवैरूप्यापत्तेरनुवादफलाभावात्तस्यार्थिकत्वांगीकारेण तस्य नियमविधिवत्कथंचित्परिहारेऽपि हीनतदन्यवर्णानुगमनयोरेकरात्रादिसापेक्षत्वं । तदभावाभ्या- १५ 'मुपात्रवंती'त्यस्य पर्वचतुष्टयविषयत्व इव सापेक्षनिरपेक्षत्वकृतविधिवैषम्यस्यापरिहार्यत्वाद्वैषम्येण च विकल्पासंभवादगत्या निषेधविषयैकदेशसमोत्तमानुगमनाविषयत्वमेव । तदाह । **इदं चेति** । समानोत्कृष्टोभयजातिविषयमित्यर्थः । **इतरेषां तु** सपिंडानान्तु । **विहितत्वादिति** । विहित-मित्युक्त**हारीते**नेति भावः । ज्ञात्यनुगमनेऽग्निस्पर्शघृतप्राशनमात्रमधिकं विधीयते । "आशौचं तु यथोक्तमेवेति" **रुद्रो**क्तं तु न युक्तं । सुज्ञात्यनुगमनस्यातिशयविशेषाख्याशुद्धिजनकत्वे माना- २० भावेन तदपनायकविधेरयुक्तत्वात्क्षामपत्या**दिव**न्नैमित्तिकमात्रविधौ तु विशुद्ध्यतीत्यस्यानन्वयात् । एवं चाग्निस्पर्शघृतप्राशावपि समोत्कृष्टानुगमने एवैकयोगानिर्देशान्मूलस्य स्वारस्येन सर्वविषयत्वात्सर्वान्-नुगमने ताविति कस्यचित्कथनं तु प्रागुक्तवैषम्यापत्या युक्तं । मूलेन तु "शुद्धः कथंचनेति" पठित्वाऽनुगम्येत्यादेरपि शूद्रानुगमनविषयत्वमेवाश्रित्य वक्ष्यमाणविरोधाय बुद्धिपूर्वप्रासंगिकत-द्विषयत्वेन व्यवस्थेति **प्राच्यो**क्तमप्ययुक्तम् । मूलाशुद्धे**र्मनु**विरोधाच्च । यत्तु **विवेचनकृत्** प्रागुक्त- २५ रीत्या स्नानादेः सर्वविषयत्वेन कालनिरपेक्षशोधकत्वेऽपि वक्ष्यमाणाविरोधाय हीनानुगमने प्रासं-गिके समोत्तमानुगमने बुद्धिपूर्वे इति व्यवस्थाऽत एव **मानवे** इच्छयेत्युक्तमिति तन्न । एवमपि वैषम्यापत्तेर्वाक्यभेदापत्तेश्च । अबुद्धिपूर्वे तत्र दोषाभावापत्तेश्च । उक्तफलमाह । **निकृष्टेति** दिक् । इच्छयेति तु तत्र स्नेहादिरूपहेतुसूचकमुपलक्षणं वा । **तत्र** तेषां मध्ये । **ज्ञानदुर्बलः** निषेधज्ञानरहितः । अत एव **पराशरे**'अज्ञानादिति' मौर्ख्यादित्येवं **माधवेन** व्याख्यातं । **चीर्णे** कृते । **ततः** तद- ३० नंतरं । प्रदेशाद्वा तस्माद्धेतोर्वा तस्मिन्कृते सति एव निमित्तसंनिहितमहोरात्रमित्यर्थः । **पुनः पक्षिणीति** । अयं भावः । यद्यप्यत्रार्थेन स्मृतिरस्ति मानं तथाप्येकांतरस्य द्व्यंतरपेक्षयोत्कृष्टत्वा-त्तदनुगमनाशौचकालान्न्यूनस्यानंतरापेक्षया चापकृष्टत्वात्तदनुगमनाशौचकालादधिकस्य तदनु-गमनाशौचपरिच्छेदकस्यापेक्षायां द्विरात्रादेराशौचकालत्वेनादर्शनात्पक्षिण्येव तदाशौचपरिच्छेदिका

क्लप्ता युक्ताऽत एवात्र व्युत्क्रमेण शूद्रक्षत्रिययोरुक्तं । यद्यपि रात्रिशेषे व्यहादित्यादिना व्यहोऽप्युक्तस्तथाऽपि प्राप्ताशौचशेषत्वेनैव स विहितो न तु स्वातंत्र्येण पक्षिण्यादिवत् इति न तदादरोऽत्र। किं च 'मल्लग्रामादि'वद्भूयसा व्यवहारदर्शनात् 'बहूनामनुग्रहो न्याय्य' इति **न्यायाच्च** न तदादरः । एवं च ( ३।५० )

५ "शवं च वैश्यमज्ञानाद्ब्राह्मणो योऽनुगच्छति। कृत्वाशौचं द्विरात्रं स प्राणायामान्षडाचरेत्॥" इति। प्रेतीभूतमित्यतःप्राक्तनं **पराशरोक्त**मपि द्वे रात्री यस्याह इति व्युत्पत्या निशाद्वयं तत्तद्दिवसेऽपि पक्षिणीशब्दार्थ इति बोधकं सदुक्तार्थस्यैव बोधकं न त्वन्यथा व्युत्पत्यार्थांतरबोधकमपूर्वकल्पनापत्तेरत एव रात्रिमरणे "सा रात्रिरुत्तरं चाहोरात्रमिति" **हरदत्ते**नोक्तं । अत एव च निशाद्वयगतदिवसोऽप्येवमिति **क्षीरस्वामीति** दिगिति । एतेनोक्तमताद्युक्त**पराशरतो** लब्धं द्विरात्रमन्यतच्च
१० **माधव**संमतमत्र तत्वं न विद्म इति विवेचनोक्तमपास्तमुक्तयुक्तेस्तदेतदभिप्रेत्य तुल्य**न्यायेन** कल्पमाह । **तथेति** । अन्यदपि विशेषमाह । **तथेति** । **अज्ञानादिति** । ज्ञाने तु द्विगुणं बोध्यम् । **आम्नानात्**कथनात् । अत्र विस्तरोऽन्यत्र स्पष्टः ॥ २६ ॥

## याज्ञवल्कीये २७ श्लोकः ।

व्यवहितसंगतिमाह । **सपिंडेति** । तथा हि विप्रादीनां विषये रोदनेऽस्थिसंचयनात्पूर्वं
१५ कृते सचैलस्नानम् । तदुत्तरमाचमनं । क्षत्रादीनां क्षात्रविषये विट्शूद्रयोश्च वैश्यविषये शूद्रस्य च शूद्रविषये रोदने ततः पूर्वं कृते सचैलस्नानं । तदूर्ध्वम् स्नानमात्रम् । तथा च **ब्राह्मे**

"मृतस्य यावदस्थीनि ब्राह्मणस्याहतानि तु । तावद्यो बांधवस्तत्र रौति तद्बांधवैः सह ॥
"तस्य स्नानाद्भवेच्छुद्धिस्ततस्त्वाचमनं स्मृतम् ।" ततः अस्थिसंचयनानंतरम् ।
"सचैलस्नानमन्येषामकृते त्वस्थिसंचये । कृते तु केवलं स्नानं क्षत्रविट्शूद्रजन्मनाम् ॥" इति ।

२ अन्येषां क्षत्रविट्शूद्रजन्मनामित्यन्वयः । अत्राऽशौचभागिसमर्पकर्मबांधवपदं समहीनवर्णपरम् न तु विप्रमात्रपरम् । मानाभावात् । विप्रस्य क्षत्रविड्विषयेऽपि तत्रैवास्थ्नां संचयने विप्रो रौति चेत्क्षत्रवैश्ययोः तदा स्नातः सचैलस्तु द्वितीयेऽहनि शुध्यति । "कृते तु संचये विप्रः स्नानेनैव, शुचिर्भवेत् ।" इति क्षत्रस्य विड्विषयेऽप्येतदेव । तुल्यत्वात्। शूद्रविषये तु ततः पूर्वं विप्रस्य त्रिरात्रं क्षत्रवैश्ययोर्द्विरात्रं तदूर्ध्वं तु सर्वेषां द्विजातीनामेकरात्रम् । यथाह **पारस्करः**

२५ "अस्थिसंचयनादर्वाग्यदि विप्रोऽश्रु पातयेत् । मृते शूद्रे गृहं गत्वा त्रिरात्रेण विशुध्यति ॥
"अस्थिसंचयनादूर्ध्वं मासं यावत् द्विजातयः । अहोरात्रेण शुध्यन्ति वाससः क्षालनेन च ॥
"सजातेर्दिवसेनैव व्यहाक्षत्रियवैश्ययोरिति" । सजातेरित्यर्द्धं अस्थिसंचयनात्प्राक्कालविषयत्वेन तत्संलग्नत्वाद्विशुध्यतीत्येतदर्थात्द्रष्टव्ये सजातेः शूद्रस्याहोरात्रविधानं च तद्गृहवासाद्यनुबंधवतो बोध्यमन्यस्य तु प्रागुक्तं सचैलस्नानमेव असपिंडार्थकान्यादिपदोक्त्या सपिंडानामनुगमने रोदननिर्हर-
३० णादौ दोषाभावः सूचितः । **तथा च विहितामिति हारीतः** प्रागुक्तः । अत्रापि नित्यकर्मलोपः सर्वत्र नास्तीति नेदमंत्यकर्मानधिकारप्रयोजकमिति दिक् ।

व्यवहितसंगतिमाह । **सपिंडेति** । अत्र कलौ कदाचित्संभवेऽप्याह । **महीति । ते च** येकेचन न तु क्षत्रा एवेत्याह । **क्षत्रियादीनामिति**। व्यावर्तकमाह । **अभीति** । तत्संबंध्याऽऽशौचमन्येन

कार्यमित्यर्थस्तु न विहितत्वादत आह। **तैरिति । विपन्नानां** मृतानाम् । अत्र संभवान्न प्रागवदित्याह। **संबंधीति** । तेनापीति सपिंडमरणे इति भावः ।

मि. पृ. १८५ इदमपि न सामान्यत इति ध्वनयन्नाह । **अत्र चेति । राज्ञ इति । माहात्मेतिं** कर्मधारयः । स अस्ति यस्मिन्निति मत्वर्थीयष्ठन् । यत्र स्थाने स्थितस्य पुंसो माहात्म्यं प्रजैश्वर्यं तत्रास्थितस्येत्यर्थः । तदेव विशदयति । **प्रजानामिति** । तदर्थं यत्तत्रासनमुपवेशनं तदे- ५
वात्र कारणं न जातिमित्यर्थः । इतः पूर्वं **मनुः** ( ५।९२ )

"न राज्ञामघदोषोऽस्ति व्रतिनां सत्रिणां तथा । ऐंद्रस्थानमुपासीना ब्रह्मभूता हि ते सदा ॥" इति । तत्राप्युत्तरार्द्धेनार्थवादेन न राज्ञामिति सामान्यस्योक्तार्थपरत्वमेव बोधितम् । यस्य चेति सूचितं विशेषमाह । **राज्ञेति । दासीति** भिन्नं पदं । तदेवाह । **अयं चेति** । भृत्यादिविषयश्चेत्यर्थः । **कर्मेति** बहुव्रीहिः । **तन्निमित्तकैः** कार्यादियोगरूढशब्दैरित्यर्थः । अत एवेत्यस्य दर्शयति । १०
तत्रान्वयः । **कारुकर्मणीति** । न तु सर्वथा तेषामाशौचाभाव इति भावः । अत एवाशौचसत्वा- देव दासीदासादीनांस्वसपिंडमरणादिनिमित्तकाशौचस्य स्वामिकार्यादिविषये इदं तत्वं । तत्रै स्वदास्यां जातयोर्गर्भदासीगर्भदासयोः स्वस्वसपिंडादिमरणनिमित्तके आशौचे सचैलस्नाना- नंतरमनन्यसाध्ये स्वामिकर्मणि अस्पृश्यता नास्ति । अन्नेनोपात्तयोर्भक्तदासयोस्तु त्रिरात्रादूर्ध्वं तत्रैव कार्येऽस्पृश्यता नास्ति । क्रीतादिदासानाम् १५

"उत्तमस्त्वायुधीयोऽत्र मध्यमस्तु कृषीवलः । अधमो भारवाही" इत्युक्तस्य त्रिविधभृतकस्य तत्तुल्यस्य समदेशशिष्यस्य च स्वाम्यादिभूतविप्रादेर्यदाशौचं दशाहादि तदूर्ध्वं स्वस्य मासादि- व्याप्याऽऽशौचसत्वेऽपि अनन्यसाध्ये स्वस्वस्वामिकार्येऽस्पृश्यता नास्ति । सर्वथा गत्यभावे एषामपि त्रिदिनादूर्ध्वं स्पृश्यतेत्याहुः । सूतिकायास्तु दास्या मासपर्यंतमेवास्पृश्यत्वं । तथा चोक्तं "सर्वमार्प- द्विषयमिति" दिगिति ॥ २७ ॥ २०

## याज्ञवल्कीये २८।२९ श्लोकौ ।

अथ कर्मत आशौचापवादमाह । **तथेति** । इदमपि तं विना गत्यभावे आर्त्याधिक्ये च बोध्यम् । **क चेति** । तत्र तदपवादमन्यत्राप्याहेत्यर्थः । **वरणेति** । वरणभरणाभ्यां **संभृताः** स्वीकृता इत्यर्थः । "दीक्षणीया इष्टि" इति इत्यस्य सद्य इति अत्रत्यंतत्वं प्रागुक्तम् । **स्नातकेति** स्नातकव्रतेषु प्रायश्चित्तेषु च प्रवृत्ताश्चेत्यर्थः । विनिगमनाविरहादिति भावः । "स्नानं त्ववभृथे २५
यावत्तावत्तस्य न विद्यते" इत्यतःपूर्वं । **नित्यमन्नप्रदो** वानप्रस्थः । ब्राह्ममिदं । **कृच्छ्रेत्यादि** विषयसप्तमी । सर्वेषां गृहीतेत्यनेनान्वयः । **निवृत्ते इति** । प्रवृत्तेत्यर्थः ।

"व्रतयज्ञविवाहेषु श्राद्धे होमार्चने जपे । प्रारब्धे सूतकं न स्यादनारब्धे तु सूतकम् ॥"

इति **लघुविष्णोः** । प्रारंभश्च **तेनैवोक्तः**

"प्रारंभो भरणं यज्ञे संकल्पो व्रतसत्रयोः । नांदीश्राद्धं विवाहादौ श्राद्धे पाकपरिक्रिया ॥" इति । ३०
अत्र सत्रपदे न मुख्यमेव सत्रं तत्र वरणाभावात् । वरणश्च मधुपर्कांतम्

"गृहीतमधुपर्कस्य यजमानात्तु ऋत्विजः । पश्चादशौचे पतिते न भवेदिति निश्चयः॥" इत्युक्तेः ।

---

१ जा (?) ।

तेन मधुपर्कात्पूर्वमाशौचमस्त्येवेति केचित् । आदिपदेन नांदीश्राद्धवत्कर्ममात्रग्रहणं । उक्तब्राह्मोऽपि निमंत्रणाद्भिन्नः श्राद्धकर्मारंभः पाकरूप एव विवक्षितः । इदं च श्राद्धकर्तुः । भोक्तुस्तु निमंत्रणादेवाशौचाभाव इति बोध्यम् । **ब्राह्मणादिष्विति** । तथा **भोजने** नान्वेति न स्यादिति पूर्वोक्तस्यान्यस्य सपिंडाशौचं न स्यादित्यर्थः ।

५ प्राग्वदत्रापीत्याह । **सत्रिणामिति** । तथैवाह । **उपेति** । दातृत्वस्य साधारण्यादाह । **यज्ञेति** । **वैखानसो** वानप्रस्थः । प्राग्वदत्र नेत्याह । **सर्वत्रेति** । कर्ममात्रे संव्यवहारे चेत्यर्थः ।

मि. पृ. १८६ **अत्र** दानादौ । **आदिना** दानादिपरिग्रहः । **मृतोति** समाहारद्वंद्वः । वक्ष्यमाणानुरोधेन व्युत्क्रमेण व्याचष्टे । **यज्ञे इति** । मुख्ययज्ञे यज्ञियमित्यनेनैव सिद्धेराह । **वृषोत्सेति** । **पूर्वेति** तथा स्मृतौ तस्योत्तरान्वयः सूचितः । न्यूनतां मूलक्रमेण परिहरति । **विवाहेति** । **आदिना**-
१० ऽन्यस्यापि ग्रहः । **मात्रं** कार्त्स्न्ये । द्वितीये मानमाह । **न देवेति** । एवं मुख्यार्थमुक्त्वा तदुपयोगित्वेन लक्ष्यार्थद्वयं तस्य क्रमेणाह । **संग्राम इति** । **समुपोढे** उपस्थिते । वैरिवेष्टितदुर्गसंरक्षणार्थो यज्ञा **दुर्गयज्ञाः** । शांतिकोच्चाटनादयः । **यात्रायामर्थयात्रायाम्** । **तीर्थकर्मणि** तीर्थयात्रायाम् । **तद्वत्** शुद्धवत् । आपद्यपीत्यस्य प्राग्वदर्थद्वयमाह । **तथा कष्टायामिति** । **चः** प्रतिग्रहोत्तरे योज्यः । निर्हरणाशौचादि तु प्रागुक्तम् । अथ संनिहितसर्वशेषं प्राग्वत् । विशेषमाह । **पंचेत्या**
१५ **दिना** । **इयं चेति** । सद्य इत्यर्थः । **संचयीति** नीलरूपवत्प्रयोगः । **आपादितेति** संपादितेत्यर्थः । अत एव तस्य तत्वादेव प्रतिपादितमित्यत्रान्वयः । उक्तमन्यत्राप्यतिदिशति । **समानोदकेति** ।

नन्वेवं सर्वप्रतिग्रहापत्तिरत आह । **अयं चेति** । प्रागुक्तः सर्व इत्यर्थः । सर्वत्र वस्तूनि स्मृत्यनुरोधेनाऽन्यथाऽपि संभवात्किमिति तथांगीकारा इति शंकते । **नन्विति** । **आदिना** "ग्रंथार्थतो विजानाति वेदमंगैः समन्वितम् । सकलं स रहस्यं च क्रियावांश्चेन्न सूतकम्॥" इति **दक्षादि**
२० परिग्रहः । **अध्ययनेति** त्रितययोगिनामित्यर्थः । विषये इत्यस्यैव व्याख्याऽग्नौ । युक्तंचैतदित्याह । **एवं चेति** । **तत्र** तस्य व्यवस्थितौ चेत्यर्थः । **युक्तमिति** संभवति विशेषणत्वे उपलक्षणत्वस्यान्याय्यत्वादिति भावः । युक्तत्वमेव द्रढयति । **एवं चेति** । तथा चैकमूलं कल्पनालाघवमिति भावः । साधकांतरमप्याह । **तथा चेति** ।

मि. पृ. १८७ उपसंहरति । **अत इति** । स्वाध्यायांशे तत्रापि विशेषमाह । **चेति** । चस्त्वर्थे ।
२५ क्वचित्तथापाठ एव । अथ सर्वशेषं विशेषमाह । **एवमिति** । उक्तवादित्यर्थः । **वाहनेति** समाहारद्वंद्वः । प्रतोदं चाबुक इति भाषाप्रसिद्धम् । **रश्मीन्** रथादेः । नन्वस्मान्न पृथगादौ स्नानं लभ्यते शब्दाभावादत आह । **अयमर्थ इति** । आर्थिकमाह । **अनुभूतेति** । क्रिया च स्नानमेवान्यस्याश्रुतत्वादित्याह । **कृतस्नान इति** । अत्र व्याख्यानेऽक्षरास्वारस्यादाह । **अथ वेति** ॥ २८ ॥ २९ ॥

## याज्ञवल्कीये ३० श्लोकः ।

३० सर्वप्रकरणासंगतिमाह । **कुलेति** । बहुवचनांते द्वंद्व इत्याह । **अशुचय इति** । तत्कालमाह । **अथवेति** । वक्ष्यमाणरीत्या । इदमुपलक्षणमित्याह । **स्पृष्टादिभिरिति** । **संस्पृष्टादिभिरिति** संस्पृष्ट इत्यस्यात्राप्यन्वयादाह । **सर्वमिति** । **चः** समुच्चये इत्याह । **आचम्येति** ।

कपिंजलाधिकरणान्यायेनात्रिष्वेवेति दत्तादिपदसूचितमेव प्रतिपादयितुं शंकते । **नन्विति** ।

अनतिप्रसंगाय तुल्यतानियामकमाह । **स्नानेति** । **मात्रं** कात्स्न्ये । मात्रपदेन मंत्रजपादिनिरासः । ननु के ते इत्यत आह । **ते चेति** । **विरिक्ते** विरेकश्मशानगम्ये । एकं तत्राधिविशेषमाह । **अनृतावपीति** । दिवेति भिन्नं निमित्तम् । **वारुणीभि**रापोहिष्ठा इत्यादिभिः । **अजीर्णे इति** । अभ्युदिते रवावजीर्णे वांते सति अस्तमिते रवावपि तथा अजीर्णे वांते सतीत्यर्थः । **कटधूमे** शवधूमविशेषे । **श्वपाकं** चांडालं । **सस्नेह**मित्युत्तरान्वयि । ५

मि· पृ. १८८ **अष्टशतम्** अष्टाधिकशतं । विरोधं परिहरति । **एतच्चेति** । एवमन्यत्रात्र सर्वत्र बोध्यम् । **दिवाकीर्तिं** चंडालम् । न तु नापितम् । तत्स्पर्शे स्वल्पदोषात् तस्य स्पृश्यत्वाद्भोज्यान्नत्वाच्चेति तु **मेधातिथिः** । उक्तव्यवस्थामन्यत्राप्यतिदिशति । **एवमिति** । उक्तरीत्येत्यर्थः । **स्कंदित्वा** वमित्वा । क्रोशने शब्दे इति सूक्तं ऋचं वा । देवलकलक्षणमाह । **देवार्चनेति** । अन्यतमविशेषाभावे तु न तत्वमिति भावः । **शैव**स्तद्दीक्षायुतस्तद्विशेषः । **पाशुपतः** । एवं १० लोकायतिकनास्तिकयोरपि भेदो बोध्यः । **मनु**माह (५।१०४) **अस्वर्ग्येति** । तस्य शवविषयत्वेनासार्वत्रिकत्वादाह । **लिंगादिति** । चो योज्यः । **निषेधो**ऽपीत्यर्थः । यस्त्विति पाठः । **तत्रेति** । तस्मिन्विषये इत्यर्थः । **गोवालेति** । चमरीकेशरूपं यद्व्यजनं तस्मादर्वागित्यर्थः । इदमुभयान्वयि । अस्य स्वल्पत्वादविरोधाय चाह । **एतदिति** । **युगं** स्कंधवाह्यं । **काष्ठं** रथादेः । **द्वियुगादि** समाहारद्विगुः । तेषां युगादिकं क्रमादधः अपकृष्टं वर्जमित्यर्थः । सक्तुकरणे विशेषस्यान्यत्रोक्तत्वादाह । १५ **अनुदकेति** । **भासः** पक्षिविशेषः । पूर्वनिपातप्रकरणस्यानित्यत्वात्साधुता । **खरोष्ट्राश्वेति** बहुवचनांतानां द्वंद्वः सर्वग्रान्थारण्यसंग्रहाय खरोष्ट्रांत्यश्वसूकरानिति पाठस्तूचितः । मार्जारांशे विशेषमाह । **मार्जारेति** । बहुव्रीहिः । शास्त्रानुपलंभादाह । **समेति** । अन्यदा उभयभिन्नविषये सदेत्यप्येतत्परं श्वांशे तमाह । **श्वेति** । ऊर्ध्वमपि करांशे न स्नानमपि तु तदेवेत्याह । **कराविति** । शुनाद्युपहन्यते इति पाठः । **तत्र** तद्विषये । **तेनैव अंगिरसैव** । भासाद्यंशे आह । **तथेति** । श्ववदित्यर्थः । स्पर्शे तत्रापि शेषपदेनात्र करयोरपि संग्रहादेतदनुरोधेन पूर्वत्राप्येवमिति तथोक्तं । २० **प्रबाहुषु** हस्तप्रदेशविशेषेषु करेष्विति यावत् । **मलाः** श्लेष्मादयः । **उपहतः** युक्तः । बहुवचनं प्राग्वच्छुध्येदित्यस्याग्रेऽप्यनुषंगदर्शनशब्दावोष्ठौ तदपहतोऽपींद्रियोक्तं कुर्यादित्यर्थः ।

अत्रापि विशेषमाह । **एतच्चेति** । अपिनाऽधःपरिग्रहः । **आर्तवं** रजः । **आदिना** गंधादि । **तान्येव** मानुषास्थ्यादीन्येव । **रथ्येति** समाहारद्वंद्वः । रथ्यायाः कर्दमहोयौणमित्यर्थः । आद्येन २५ तन्मलांतरपरिग्रहः । **अत्र** कर्दमतोयांशे । ततः जंघामृद्दानानंतरपादयोः षट् प्रत्येकं पूर्वार्द्धार्थमाह । **ग्रामेति** । इतीत्यस्यार्थ इति शेषः । विशेषं तत्राप्याह । **मारुतेति** । रथ्येति त्रयाणां द्वंद्वः । **अंत्य**श्चंडालः । **चितानि** गृहाणि । पूर्वोक्ताविरोधायाह । **इदं चेति** । **द्विजातेति** द्विजाति।

मि· पृ· १८९ ब्राह्मणादिसंबंधीत्यर्थः । **अमानुषे** अस्थनि । **भक्ष्येति** शाकादिरूपभक्ष्यपंचपंचनखान्वर्जयित्वाऽन्यपंचनखमृतशरीरमित्यर्थः । आचम्येत्यर्थः । इदं आनंत्याद्रुप- ३० संहरति । **एवमिति** । उक्तरीत्येत्यर्थः ।

प्रकृतमुपसंहरति । **एवमिति** । विशेषांतरमाहो**दक्येति** । **तद्रूपम**चेतनं व्यवधानं व्यवधायकं यत्र तत्र स्पर्शे इत्यर्थः । एवमग्रेऽपि स्पृष्टस्पर्शः । तेषां प्रकृतचंडालादीनां स्पृष्टं तदस्यास्ति **प्राग्वदिति** । अनेन चेतनव्यवधानसंग्रहः । अत्रापि विशेषमाह**तच्चेति** । पतितादीनि सप्तनिमित्तानि । अशुचिस्पृष्टमिति तृतीयाविशेषणम् । तृतीयत्वादिस्पर्शकर्तॄणां **बोध्यम्** । अपिरग्निमसमुच्चायकः । **चो**ऽबुद्धिपूर्वे द्वितीयसमुच्चायकः । तेषां मिथः स्पर्शे आह । **अशुचिनेति** । **स्वर्गं**

विरुद्धांगं। **नारी**मित्युभयान्वयि । **चे**नारण्यसमुच्चः । शिरसि शिरसा सशिरा इति पाठांतरम् । स्मृत्यंतराद्यनुरोधादाह। **कृच्छ्र इति** ॥ ३० ॥

## याज्ञवल्कीये ३१ श्लोकः।

**अधुना** सकलशुद्धिकथनानंतरं । संगत्यर्थमाह **कालेति** । प्रागुक्तकालकृतशुद्धिविषये ५ इत्यर्थः । दृष्टांतत्वेनेत्यस्यानुक्रामतीत्यत्रान्वयः । तेषामपि सत्वादाह । **तथैतदिति** । आशौच-प्रकरणे इत्यर्थः । द्रव्यशुद्धिप्रकरणं तु आचाराध्याये गतम् । **चे**नाऽग्रिमप्रायश्चित्तप्रकरणसंग्रहः । अत एव **कर्म** चेत्यादिवक्ष्यमाणसंगतिः । एवं **श्रुति**संग्रहोऽपि । अत एव मनोऽपीत्यादिसंगति-रिति बोध्यम्। प्रतिज्ञातमेव व्याख्यामुखेनाह । **तथेति** । अनतिप्रसंगायाऽऽह । **स्वेति** । शुद्धिहेतु-रिति विपरिणामेनान्वयः । तथा च यथातथाऽध्याहारेण योजना । अन्यथाऽसंबन्द्धत्वं स्पष्टमेवेति १० भावः। तत्र बीजमाह । **शास्त्रेति** । एतेनापूर्तस्य कालतत्वं तदां(?)तेनापि दुर्वचमित्यपास्तम् । उक्तमेव विशदयति । **अग्निरिति** । क्रमेण अन्यस्यासंभवादाह । **वाच इति** । समेति श्रुत्या कथित-मित्यर्थः । ज्ञानं न सामान्यं नापि सर्वस्येत्याह । **ज्ञानं चेति** । बुद्धि रंतः(?)प्रकरणं । वक्ष्यमाणवर्ष्म-मि. पृ. १९० ग्रहणमुपलक्षणमित्याह । **शरीरादेरिति** । **यथेति** । **मन्वादिनेति** भावः ॥३१॥

## याज्ञवल्कीये ३२।३३।३४ श्लोकाः।

१५ **किंचेति** । अन्यान्यपि शुद्धिसाधनानि तत्प्रसंगादाहेत्यर्थः । ताच्छील्ये णिनि लब्धमाह । **सेविनामिति** । मुख्यमित्यनेनान्यस्यापि संग्रहः । तस्या आदावशुद्धत्वे बीजमाह । **निदाघेति** । शोध्यस्येत्यस्यार्थः **शोधेति** । मतांतराशयेनाह । **द्विजेति** । मानसदोषे इत्यर्थः । साहचर्यादाह । **वेदविदिति** । अत एवाह । **कृच्छ्रादीति** । कारणे तदसंभवादाह । **भूतेति** । लक्षणाबीजमाह । **तद्वीति** । तत्र संघे कृच्छ्रादेरत्र तत्वासंभवादाह । **तप इति** । **अन्वयः** । सत्ताव्यतिरेकोऽभावः । २० इदं कुत्रेत्यत आह । **यथेति** । **इति** इत्यादि । औपनिषदमित्यस्यैव व्याख्याऽस्थूलमित्यादि । प्राग्वदाह । **संशयेति**। परमेत्युक्तेराह । **तप इति** । तथा च शुद्ध एवायमिति न प्राग्वच्छुद्धिरत्राभि-मतेति भावः ।

नन्वेतासामत्र कथनं प्रागुक्तरीत्याऽपि न सुयोजमित्यसंबद्धत्वापत्तिरत आह । **यथैता इति** वस्तुतस्तदभावादर्थवादोऽयमित्याह । **प्रशंसेति** । **भूतात्मादीति** । प्रागुक्तं तु प्रासंगिकमिति २५ भावः । **मनुरपि** ( अ. ५ श्लो. १०४-१०५ )

"ज्ञानं तपोऽग्निराहारो मृन्मनोवार्युपांजनम् । वायुः कर्मार्ककालौ च शुद्धेः कर्तॄणि देहिनाम् ॥
"सर्वेषामेव शौचानामर्थशौचं परं स्मृतम् । योऽर्थे शुचिर्हि स शुचिर्न मृद्वारि शुचिः शुचिः॥
"क्षांत्या शुध्यंति विद्वांसो दानेनाकार्यकारिणः । प्रछन्नपापा जप्येन तपसा वेदवित्तमाः ॥
"मृत्तोयैः शुध्यते शोध्यं नदी वेगेन शुद्धति । रजसा स्त्री मनोदुष्टा संन्यासेन द्विजोत्तमः ॥
३० "आद्भिर्गात्राणि शुध्यंति मनः सत्येन शुध्यति । विद्यातपोभ्यां भूतात्मा बुद्धिर्ज्ञानेन शुध्यतीति॥"

आहारः पवित्राणां पयोमूलफलानां । उपांजनं संमार्जनानुलेपने । अर्थो द्रव्यं । यथा मृदादिशुद्धावविलंबस्तथा प्रमादकृतेऽपि परद्रव्यापहरणादावविलंबेन प्रायश्चित्ते प्रवृत्तिरिति दिक् ॥ ३२ ॥ ३३ ॥ ३४ ॥

इत्याशौचप्रकरणं ॥ १ ॥

---

१ 'तथैतदिति' मिताक्षरापाठः । २ ख-पाठो ।

मि. पृ. १११

# अथापद्धर्मप्रकरणम् ॥ २ ॥

आशौचप्रकरणानंतरमापद्धर्मकथने संगतिमाह । **आपद्यपि चेति** । **इत्यादिनेत्यादिना** पूर्वपरिग्रहः। संगतिप्रदर्शनार्थं च व्युत्क्रमोक्तिः। उक्तेत्यत्रान्वयः। अग्रे आदिनाऽऽचमनतद्भावपरिग्रहः। **तत्प्रसंगादापत्प्रसंगात्**। 'आपदी' त्यस्य 'वृत्त्यंतरमि'त्यत्रान्वयः । मूलोक्तमाह । **प्रतिग्रह इति**। आदिद्वयग्राह्यं तु तत्रैव प्रपंचितं तत एव ज्ञेयम्। **वृत्त्यंतरमिति**। विप्रस्येति शेषः। पूर्वत्रानुक्तत्त्वा- ५ दिति भावः ।

## याज्ञवल्कीये ३५ श्लोकः ।

**द्विजपदोक्त्या** विप्रः क्षात्रेण जीवेत् । क्षत्रियः विशांकर्मणा जीवेच्चार्थेनापिना वैश्यः शूद्रकर्मणा जीवेदित्यर्थो यद्यपि संभवति तथापि विकल्पासंगतयापत्त्या 'फलोपलेति' वक्ष्यमाणविरोधापत्त्या च तथा नार्थ इत्यभिप्रेत्याह । **द्विजो विप्र इति** । उक्तहेतोः सामान्यरूपेण तस्या- १० विशेषपरत्वमिति भावः । आपदमाह । **बह्विति** । विपुलेत्यर्थः । तस्येदमित्यादीत्याह । **क्षत्रसमिति** । स्पष्टार्थमाह । **आपदीति** । वा व्यवस्थितविकल्पे इत्याह । **तेनापीति** । तत्संबंधिकर्मणापीत्यर्थः । जात्याख्यायामिति सूत्रानुरोधेन कृतं बहुत्वमविवक्षितं संबंधमात्रं विवक्षितमित्याह । **वैश्यसंबंधीति** । 'कर्मणे'त्यस्योभयत्रान्वयः साकांक्षत्वादिति भावः । यद्वा **आपत्तिः** कालदेशराजादिप्रयुक्तास्ववृत्त्याजीवनासंभवे हेतुः । स च तत्रेति न व्याख्याने पौनरुक्तं । सर्वं १५ वाक्यमिति **न्यायेन** लब्धैवार्थमाह । **न त्विति** । ऐच्छिकविकल्पाभावे मानं सूचयन्नुक्तमूलार्थे सम्मतिमाह । **तथा चेति** । **उभाभ्यां** स्ववृत्तिक्षत्रवृत्तिभ्याम् । पूर्वतो विप्रलाभः । तथा चास्यादि ( मनुस्मृ. १०।८१ )

"अजीवंस्तु यथोक्तेन ब्राह्मणः स्वेन कर्मणा। जीवेत्क्षत्रियधर्मेण स ह्यस्य प्रत्यनंतरः॥" इति ।

**कथं स्यात्कथं** वर्तेत इति यदि तव शंका भवेत्तदोत्तरमुच्यत इत्यर्थः । **कृषीति** । समाहार- २० द्वंद्वस्तद्रूपांतामाश्रित्येत्याद्यर्थः ।

द्विजपदोक्तिं सफलयन्नपि सूचितार्थमाह। **तथेति** । **अपिर्व्युत्क्रमे** । तदाह। **आपद्यपीति** । **हीनेति** जातावेकवचनं । **ब्राह्मी** ब्राह्मणसंबंधिनी प्रतिग्रहादिरूपा । अत्र पक्षे वा चार्थे । तथा च **द्विजो** विप्रः क्षात्रेण तेन जीवेत्स क्षत्रियो वैश्यकर्मणा स वैश्यः शूद्रकर्मणेति शाब्दार्थेन तदभावे तात्पर्यं तदाह । **किंत्विति** । एवो ब्रह्मवृत्तिनिरासे । **स्वानंतरेति** । संभवाभिप्रायमिति न २५ पूर्वविरोधः । **अजीवंतः** क्षत्रियादयः । **स्वेति** । स्वस्वधर्मेणेत्यर्थः । व्याख्यातमिदं प्राक् । उक्तार्थ एवास्य न त्वन्यथासाधारणः। वक्ष्यमाणविरोधादिति सूचनायाह । **ज्यायसी ब्राह्मीति** ।

"जीवेदेतेन राजन्यः सर्वेणाप्यनयं गतः । न त्वेव ज्यायसीं वृत्तिमभिमन्येत कर्हिचित्॥"

इत्यादि **मनुरपि** ( १०।९५ ) प्रागुक्तो व्याख्यातश्च । **एतेन** प्रागुक्तेनानय आपत् । उक्तार्थद्वयादिध्वननायैवाऽऽह । **तथा चेति** । **वाद्वयं** चार्थे तयोरपि द्विवचनात्तत्र प्रत्येकमन्वय ३० इत्याह । **शूद्रस्योत्कृष्टमिति** । अनतिप्रसंगायोभयत्र शेष उक्तः। **मध्यमे इति** । **हित्वा** त्यक्त्वा।

---

१ आचारे श्लो. ११८ ।

तत्र हेतुरुक्तः। **सर्वेति**। तदर्थमाहँ। **मध्यमे इति**। एवं द्विजाशूद्रविषये प्रागुक्तमपि मूलकृताऽनुकल्पं प्रकरणशुद्धये च कंचिद्विशेषं कथयितुमनुवदति। **शूद्रस्त्विवति**। मूलमेवाह। **शूद्रस्येति**। व्याख्यातामिदं प्रागनुक्तं तावनुकल्पं प्रतिपाद्य विशेषमाह। **मनुना चेति**। तेनापीत्यर्थः। द्विजातिहितमित्यनेन सूचित इति भावः। **यैरिति** व्याख्यातमिदं। न्यूनतां परिहरति। छुद्धये-

५ ऽनुक्तं विशेषांतरमाह। **अनेनैवेति**। **वसिष्ठाद्युक्तेनैवेत्यर्थः**। प्रपंचितं चेदं सर्वं **टीकायाम्**।

उत्तरार्द्धार्थमाह। **एवमिति**। उक्तरीत्येत्यर्थः। **तामित्यस्यार्थ आपदमिति**। योग्यतयाह। **प्रायश्चित्तेति**। **अथेत्यादिः**। उपाधिभेदेनात्मनो भेदेनाणिजाद्युपपत्तिः। पथीत्यस्य व्याख्या **स्वेति**। योग्यतयैवाह। **आत्मानमिति**। अत्र पक्षे तुर्यपादैकदेशस्यानतिप्रयोजनकतया न्यूनतानिरासस्य स्मृत्यंतरानुरोधेनेष्टत्वेन चाह। **यद्वेति**। तदेवाह। **तथा चेति**। बहुवचनेन

१० सातत्यं सूचितमुभयत्र **प्रतिग्रहेति**। बहुव्रीहिः। **येन** इत्यस्यानुषङ्गः। **तपः** कृच्छ्रादिप्रायश्चित्तम्। तपसा चैवेत्यर्थः। उभाभ्यामेवेति यावत्। एवेनान्यतरव्यवच्छेदः॥ ३५॥

## याज्ञवल्कीये ३६।३७।३८।३९ श्लोकाः।

प्रागुक्तरीत्याऽनुवृत्तद्विजपदार्थमाह। **ब्राह्मणस्येति**। **अपणनीयमिति**। अपवित्रोऽयमित्यर्थः। शस्त्रासवेत्यत्र द्वंद्वोत्तरपदको द्वंदः। एवमग्रेऽप्युभयत्र द्वंद्वस्थले समुदायान्वयः।

१५ मि. पृ. १९२ भ्रमनिरासायाऽऽह। **प्रत्येकमिति**। दध्याद्यनुरोधान्मन्वाद्यनुरोधाच्चेतिभावः। **तथैव चेति** समूहसर्वसमुच्चये। **आदिना** पनसादिविशेषमाह। **बदेति**। फलानां बदरेंगुदे इति पाठः। **फलानामिति** निर्धारणे षष्ठी। विक्रेयत्वप्रतिपादकोऽयम्। अत एव फलानि बदरेंगुदे फलान्यबदरेंगुदे इत्यपाठः। **अविकृतं** कुसुंबादिना न रक्तम्। तथा च **शंखलिखितौ** "शुष्ककाष्ठबदरेंगुदिकार्पासिकरज्जुकार्पासिकसूत्रकृतं न व्यवहरेदिति"। कार्पास-

२० संबंधि। तत्रापि क्रीतानि। अन्येषामक्रीतपर्ण्यैर्न व्यवहरेन्मुंजवल्कजैर्मूलफलैरित्यापस्तंबेन विक्रेयत्वोक्तेरिति **नारायणः**। **वस्त्रमिति**। तथा च "विकृतेः प्रतिषेधात्प्रकृतेरप्रतिषेध" इति भावः। अन्ये त्वतसीसूत्रमेव गृण्हंत उभयोरपि निषेधमाहुः। न्यूनतां निराचष्टे। **क्षौमेति**। तंतुकृतपटादिकं कुसुंभादिना रक्तम्। **अपि चेदिति** पूर्वान्वयि। अपिना रक्तसमुच्चयः। **ओषधीस्त्रिवृत्प्रभृतीन्**। एतन्मनुप्रपंचः प्राक्प्रतिपादितः। उपलक्षणत्वेनाऽऽह।

२५ **मंडकादीति**। **मात्रं** कृत्स्ने। पाकप्रधानानि द्रव्याणि **रसास्तदाह**। **गुडेक्षुरसेति**। **क्षौद्रं** मधुकल्पः सिक्थकं मधु माक्षिकं मधुमयं द्य इति सप्तेति भावः। विकाराणां तेषामपि अत्र यथासंख्यमन्वयः। द्वयं द्वयं विकारस्तत्र 'मंडं दधिभवं मस्तु' इति **कोशः**। अन्यव्याख्यातं। **गौतमप्रपंचः** प्रागुक्तः। **सिक्थमिति**। एवमेव **कोशः**। मामेति भाषाप्रसिद्धं। **शृंगी** वत्सनाभः। भूम्यंशे मानमाह। **नित्यमिति**। अत्र नित्यमिति। अत्र नित्यग्रहणस्य फल-

३० मुक्तं। तद्रक्तवस्त्रस्य पूर्वतो लाभादाह। **नीलीरसमिति**। रुमा स्याल्लवणाकरस्तत्र भवं रौमकम्। स्वार्थे कनित्याह। **सीसेति**। **शुष्केष्विति**। अत एव प्रागुक्तशंखलिखितसंगतिः। **वयांसि** पक्षिणः। अरण्यत्वं सर्वविशेषणं दंष्ट्रिणां भेदेनोक्त्या पशवस्तद्भिन्ना ग्राह्याः। 'गंधाश्च सर्वशः' इति **मनोराह**। **प्रभृतय इति**। अत्र प्रकरणे सर्वत्रोपलक्षणता **मनुगौतमाद्यनुरोधेनोक्तास्ते**

१ ध. सू. १।२०।१६; १।२१।१।

च प्राक् प्रतिपादिताः। तेनाऽनापदि एतद्रूपस्ववृत्त्या जीवनेऽप्येतन्निषेध इति प्रागभिहितं सप्रपंचम्।

एवं पदार्थानुक्त्वा वाक्यार्थमाह। **सर्वानेतानिति**। शंकोक्तनिरासाय दत्तद्वितीयदोषमुपपादयन्नाह। **क्षत्रियादेस्त्विति** ॥ ३६ ॥ ३७ ॥ ३८ ॥

## याज्ञवल्कीये ३९ श्लोकः।

### (उत्तरार्धः।)

वैश्यवृत्तौ स्वीक्रियमाणायां धर्मग्रहणं नित्यनैमित्तिकमात्रपरमित्याह। **यद्यावेति**। **पाकयज्ञेति** स्मार्तयागानां स्थालीपाकादीनां संज्ञा। तिलान् दत्वा धान्यं ग्राह्यं तेन धान्येन **समास्तत्समाः**। साम्यं च नात्र संख्यादिकृतमित्याह। **द्रोणेति**।

"पलं च कुण्डवप्रस्थ आढको द्रोण एव च। धान्यमानेषु बोद्धव्याः क्रमशोऽमी चतुर्गुणाः ॥"
**कृषीवलः** कृषिकरो विप्रः। अन्यद्व्याख्यातम्। न्यूनतां परिहरति। **धर्मेति**। भेषजादेरपीत्यर्थः। अशक्तताविति भेषजाविशेषणम्। तेनावश्यकता सूचिता। यदि ते तादृशास्तेन विक्रेयाः। **तु** तदा। आवश्यकभेषजार्थे। अवश्यं यज्ञार्थमेव चेत्यर्थः। उक्तनियमफलितमाह। **यद्यन्येति**। **भोजनेति** समाहारद्वंद्वः। 'कृमिभूतस्वविष्ठायामिति' पाठांतरम्। अत्र **मनोर्गौतम**विरोधपरि-

मि. पृ. १९३ हारः प्रागुक्त इति स एवात्रापि बोध्यः। रसविषयेऽपि प्रतिप्रसवमावश्यकं कार्यार्थे सूचयन्तत्र विशेषमाह। **सजातीयैस्त्विति**। प्रागुक्तैः सर्वैरित्यर्थः। **मनु**मेवाह। **रसा इति**। **निमातव्याः** परिवर्तनीयाः। अन्यत् व्याख्यातमिदं। **तु पाठे** पाठे तु। अत्र कृतान्नादिविषये विशेषोऽपि सप्रपंचं प्रागुक्तस्तत एव बोध्यः ॥ ३९ ॥

## याज्ञवल्कीये ४० श्लोकः।

**यावत्पूर्वोक्तेति** सकलप्रागुक्तनिषेधेत्यर्थः। नित्यपदार्थमाह। **द्विजातेः कर्महानीति**। तस्य यत्कर्म तद्धानीत्यर्थः। 'द्विजातकर्मेति' पाठांतरं। द्विजतो हीनत्वमित्याह। **शूद्रेति**। पादकानीति पाठः। 'पादनानीति' पाठे बहुव्रीहिर्बोध्यः। अन्यवैश्यवृत्त्याश्रयणेन वैश्यत्वप्राप्तेः सर्वत्रसत्वेन तथोक्तेरसांगत्वं स्पष्टमेव। तदेतद् ध्वनयन्ननुक्तविशेषमाह**ैतदिति**। सद्य इत्यादि उक्तार्थे सर्वत्र मानमाह। **यथाहेति**। **निर्गच्छति**[1] प्राप्नोति। व्याख्यातमिदं प्राक्। अत्र विशेषोऽपि सप्रपंचमभिहितः ॥ ४० ॥

## याज्ञवल्कीये ४१ श्लोकः।

**किंचेति**। मुख्यवृत्त्या जीवनासंभवे विप्रस्य वृत्यंतरमप्याहेत्यर्थः। अवसादो विशीर्णता। **ननु** प्रागुक्तवृत्त्याऽनिर्वाहस्तदानीमत आह। **क्षत्रेत्यादि**। सर्वं वाक्यमिति **न्यायेनाह**। **नैवेति**। लिङ्गार्थोऽविवक्षित इत्याह। **लिप्यत इति**। ह्यर्थमाह। **यत इति**। नात्र तेजः-

१ निगच्छतीति मिताक्षरपाठः।

पुण्यादिकृतं सादृश्यमित्याह । **तस्यामिति** । तदेव विशदयति । **यथेति** । **नेति** तत्रेत्यादिः । **ननु** पूर्वं तस्य तत्र वृत्त्यंतरस्य वाचनिकतयोक्तत्वेन तदनिच्छाकिंचित्करोति व्यर्थमिदमतस्तात्पर्यार्थमाहैवं **चेति** । **एवं वदता मूलकृता** चेत्यर्थः । परधर्मात्स्वनुष्ठितात्परधर्मेण जीवन्हीति मध्ये पाठान्तरम् । अस्य सैषाऽपि

५ "वैश्यवृत्तिमनातिष्ठन्ब्राह्मणः स्वपथि स्थितः । अवृत्तिकर्शितः सीदन्निमं धर्मं समाचरेत् ॥

"सर्वतः प्रतिगृह्णीयाद् ब्राह्मणस्त्वनयं गतः ।

"नाध्यापनाद्याजनाद्वा गर्हिताद्वा प्रतिग्रहात् । दोषो भवति विप्राणां ज्वलनांबुसमा हि ते ॥" इति ।

"जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः । आकाशमिव पंकेन न स पापेन लिप्यते ॥" इति च।

तथाऽर्थवादोऽपि

१० "क्षुधार्तश्चात्तुमभ्यागाद्विश्वामित्रः श्वजाघनी । चंडालहस्तादादाय धर्माधर्मविचक्षणः ॥" इति ।

श्वगजाघनी श्वश्रोणिः ॥ ४१ ॥

## याज्ञवल्कीये ४२ श्लोकः ।

**किंचेति** । तस्यापत्तावन्यदप्याहेत्यर्थः । नन्वेवं कार्यमित्येव सिद्धे तुर्यपादो व्यर्थोऽत आह । **आपत्तौ जीवेति** । **अनेन** पद्येन । एवं च तेन सैव कार्ये नान्येत्यैच्छिकविकल्पो नेति भावः ।

१५ **नन्वेवमपि** कृषिकुसीदयोर्वैश्यवृत्तित्वेन पूर्वत एव प्राप्त्याऽत्र तयोरुपादानं व्यर्थमत आह । **यथापदीति** । **स्वयमिति** । अनापदि परकारिता तु विप्रस्य स्ववृत्तिरेवेति प्रागुक्तमेव । **शिल्पादीनीति** । कुसीदभिन्नानीत्यर्थः । तस्यापि दृष्टांतत्वात् । तथा च तद्दृष्टांतेनान्यविधिरिति दार्ढ्याय तयोरुक्तिरिति न वैयर्थ्यमिति भावः । पदार्थानाह । **शिल्पमित्यादि** । 'रूपेति' पाठांतरं सूपेत्यत्र । प्राग्वदाह । **तत्स्वयमिति** । भृतितो भेदमाह । **परेति** । अनेन

२० तदन्यसर्वसंग्रहः । प्रचुरतरतृणवृक्षश्चासौ जलप्रायश्चेति कर्मधारयः । उक्तहेतोरेवाह । **स्नातेति** । **अपिना** गृहस्थसंग्रहः । अत्र केचन शक्यार्थाः केचन लक्ष्यार्था योग्यतया युक्ता । मि॰ पृ॰ १९४॰ अथ वाक्यार्थमाह । **एतानीति** । विपणिर्वाणिज्यं ॥ ४२ ॥

## याज्ञवल्कीये ४३ श्लोकः ।

अपिना प्रागुक्तसर्वसंग्रहः । **इत्यत इति** । इत्यतः । कचिच्चौर्याभ्यनुज्ञामाहेत्यर्थः । बुभुक्षित

२५ इत्यत्र मतिबुद्धीति क्त इत्याहा**नश्नन्निति** । 'अन्नाद्ये'त्यत्र नञ्भेदमात्रे तद्भिन्नात्स्वकर्मनिरतात्क्षत्रियादेर्दंडप्रायश्चित्तबाहुल्यं हीनकर्मणस्तत्क्रमेण ग्रहणेऽपि तथेत्यतः सर्वथा दोषाभावाय व्युत्क्रमेणाऽऽह । **शूद्रादित्यादि** । **मन्वनुरोधेनाह** । **हीनेति** । सर्वविशेषणमिदं । तत्वं त्वश्रोत्रियत्वादि । तथैवाहै**काहेति** । **तथैवेति** । व्याख्यातमिदं स्तेयप्रकरणे । अन्योऽपि विशेषस्तत्रैवोक्तः ।

---

१ मनुस्मृ॰ अ॰ १०।१०१।१०४॰

उत्तरार्धार्थमाह । **तथेति** । तद्वदित्यर्थः । **चोऽत्र** योज्यः । यथावृत्तं सत्यम् । **अधीत्य**-स्यार्थमाह । **आपदीति** । नाष्टिकेनेति पाठः । अनेनाभियोगाभावेऽनाख्यानं सूचितं । तद् ध्वनय-न्नाह । **यथाहेति** । यदि स पृच्छति तस्मै पृच्छते तदाख्यातव्यं चेत्यर्थः ॥ ४३ ॥

### याज्ञवल्कीये ४४ श्लोकः ।

**इदं** वक्ष्यमाणम् । राजधर्मीणां प्रागुक्तत्वादाहा**परमिति** । अत्र संगतिमाह । **आपदिति** । ५
तदो यदाकांक्षत्वादाह । **य इति** । अशनायेत्यप्रत्ययांतं स्त्रियां । नया परीतो भोजनेच्छया व्याप्तः
सन् दुःखी भवतीत्यर्थः । ज्ञानं न यथाकथंचिदित्याह । **परीक्ष्येति** । विधिफलमाह । **अन्य-थेति** । **तस्य** राज्ञः । **विषये** देशे । **दुर्भिक्षेति** शाकपार्थिवादिः । दुर्भिक्षसहितोपाधि-रित्यर्थः ॥ ४४ ॥

॥ इत्यापद्धर्मप्रकरणम् ॥ २ ॥ १०

---

# अथ वानप्रस्थधर्मप्रकरणम् ॥ ३ ॥

सशेष अध्यायद्वयसंगतिमाह । **चतुर्णामिति** । **प्रतिपादयितुमिति** । प्रतिपादयिषुरिति पाठान्तरम् ॥

### याज्ञवल्कीये ४५ श्लोकः ।

प्रकर्षो न बाहुल्यमित्याह । **नियेति** । गतिनिवृत्तिमात्रं न विवक्षितमित्याह । **चरतीति** । २०
गच्छतीत्यर्थः । वनप्रस्थस्यासंज्ञात्वेन स्वार्थाणाऽनिर्वाहादाह । **संज्ञायामिति** । पृषोदरादित्वादिति भावः । **ननु** वनगमनात्पूर्वं तत्वाभावेन कथं तेन शब्देनानुवादोऽत आह । **भाविनोऽपीति** ।
**वृत्तिं** वर्तनमाचारं शक्तिं संज्ञां वा । एवमुक्तमिति शेषः । फलितमाह । **वनमिति** । इत्येवमिति ।
ननु त्वया भोग्येत्येवमित्यर्थः । व्यवस्थितविकल्पमाह । **यदीति** । **मनुरपि** ( ६।४ )

"संत्यज्य ग्राम्यमाहारं सर्वं चैव परिच्छदम् । पुत्रेषु भार्यां निक्षिप्य वनं गच्छेत्सहैव वेति॥" २५

एतेन "तरुण्या निक्षेपो वृद्धायाः सह गमनमिति" व्याख्यानमपास्तम् । विशेषणांतराणि नित्यानि । भेदमाह । **तथेति** । किंचेत्यर्थः । विरोधत्वादाहो**र्ध्वेति** । अनेन पत्नीसत्वेऽपि न तदुपभोग इति सूचितम् । ब्राह्मणवसिष्ठ**न्यायेन** पृथगुक्तिरिति सूचयन्नाह । **तथेति** । तद्व-दित्यर्थः । तात्पर्यार्थमथाह । **सुतेति** । तथा तत्पक्षाणाश्रयणे स्मृत्यंतराविरोधाय विशेषमाह ।

मि. पृ. १९५ **एतच्चेति** । तथा च **मनुः** ( ६।८७-८८ ) ३०

"ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा । एते गृहस्थप्रभवाश्चत्वारः पृथगाश्रमाः ॥

"सर्वेऽपि क्रमशस्त्वेते यथाशास्त्रं निषेविताः । यथोक्तकारिणं विप्रं नयंति परमां गतिम्॥"इति।
तदेवाह । **अधीति** । **यं** आश्रमं तु तं तमेव इति । अनेन **मनुरिति** । **शंखो**ऽप्येवम् । **वली** त्वक्-शैथिल्यम् । **पलितं** केशपांडुर्यम् । समाहारद्वंद्वः । **एवो** व्युत्क्रमे । तदैवेत्यर्थः । अत्रापत्यस्या-

पत्यमिति सामान्योक्तावपि सत्यपि दौहित्र्ये सत्यामपि पौत्र्यां नायं विधिः शिष्टसंमतस्तदेतदभि-
प्रेत्यैव जातपौत्रस्येत्युक्तम् । एतेनेदमुभयं वयोविशेषोपलक्षणं "जातपुत्रः कृष्णकेश"
इत्यादिवदित्यपास्तम् । तद्वदुपलक्षणत्वे मानाभावात् । विकल्पासांगत्यापत्तेः । यस्य कथमप्यन्य-
तरन्न तत्संग्रहाय पक्षांतरोक्तेश्चेति दिक् । विशेषांतरमुक्त्वाविशेषांतरमाह । **अयं चेति** । पाक्षिक
५ इत्यर्थः । **विधेति** । तस्यैवेत्यर्थः । तथा च तदभिप्रायकमिदमेवेति भावः । एतेन तथोक्त्या
तस्यैवायं विधिर्न विधुरस्येत्यपास्तम् । तदाह । **मृतेति** । वनवासस्य स्मरणादिति पाठः । सर्वथा
समासासंभवात् विरोधं परिहरति । **अत इति** । अनुक्रमूलमाह । **दाहेति** । **कषायो** रागादि ।
तथा च यस्य नेंद्रियचापल्यं स वानप्रस्थः । अन्यस्तु दारपरिग्रहमेव पुनः कुर्यादिति भावः ।

विशेषांतरमाह । **साग्निरिति** । एवं विवेत्यत्रान्वयः । **कथंचित्** क्रमव्यवहितान्वयि । अदृष्टार्थत्व-
१० निरासायाह । **अग्नीति** । **वैतानिकं** त्रेताग्निविषयकं कर्म श्रौतं । **जुहुयात्** कुर्यात् । अग्निहोत्रं
होमसाधनं यवान्नादि न तु कर्मनामधेयम् । अत एव यथाश्रुतजुहोत्यर्थ उपपन्नः । तत्वे तु
प्रागुक्त एव जुहोत्यर्थः । उक्तमेव विशदयति । **दर्शमिति** । उभयं पर्वविशेषणं । **पर्व** तन्साध्यं
कर्म **अस्कंदयन्स्कन्दनं** विध्यतिक्रमः । यथा विहितस्यानुष्ठानस्यासंपादनम् । इदं योगत इति
च पादपूरणार्थमिति **मेधातिथिः** । **योगतः** युक्त्या **अस्कन्दयन्** अविनाशयन् इद-
१५ मुभयमपि कुर्यादित्यर्थः । शक्तित इति पाठांतरम् । किं च ( मनुस्मृ. ६।१० )

"दर्शेष्ट्याग्रयणं चैव चातुर्मास्यानि चाहरेत् । तुरायणं च क्रमशो दक्षस्यायनमेव चेष्टि ॥"

दर्शेष्टि चाग्रयणं चेति समाहारद्वंद्वः । चातुर्मास्यतुरायणद्राक्षायणाः श्रौतकर्मविशेषाः । ते
च क्रमेणानुष्ठेयाः । **शंखोऽपि**

"पुत्रे दारान्विनिक्षिप्य तया वाऽनुगतो वने । अग्नीनुपाचरेन्नित्यं वन्यमाहारमाहरेत् ॥" इति ।

२० **श्रौतवाक्यमाह । पत्न्या सहेति** । यत्तु **मेधातिथि**प्रभृतयः ( पृ. ४६३ )
आहिताग्नेः सहाग्निभिर्वनप्रस्थानं सभार्यस्य तत्र च यथाविधि व्रीह्यादिना श्रौतकर्मानुष्ठानं व्रीह्या-
दीनामपि मुन्यन्नता कथंचिदुपपाद्या । व्रीहियवावपि पवित्रे[1] । भार्यानिक्षेपश्चानाहिताग्नेः कथं-
चित्स्मार्तेऽग्नौ गतिः । उभयोः स्मार्तत्वात् । यस्य वा द्वे भार्ये जाते एकया चाग्नयो नीतास्तस्य द्वितीया-
परं निक्षेपवचनमिति तन्न । शब्दमर्यादया तथाऽप्रतीतेः । वक्ष्यमाणदोषगणाच्चात आह । **किंत्व-
२५ त्रेति** । अस्या उक्तेरावश्यकत्वायाह । **यथाहीति** । तस्यां तस्यां । तद्वद्यातन्निरपेक्षता तद्वदित्यर्थः ।
तत्र विधिवाक्यमाह । **यस्येति** । **अनालम्भका** स्पर्शायोग्या । ननु दृष्टांतवैषम्यं 'त्र्त्येऽहनी'-
त्युक्त्वा आरंभसमाप्तेरावश्यकत्वं । **तत्रेति** । **तत्र** तथाकल्पनं युक्तम् । नैवं प्रकृते आरंभाभावादत
आह । **यद्वेति** । यथा प्रोषितो यजमानः संविधानादिना दूरस्थोऽप्यधिक्रियते संविधाने एव च
कर्ता भवति तद्वत्पत्न्यापि वनं प्रतिष्ठमानमनुज्ञास्यतीति सहाधिकारस्तद्वदत्रापीति न तद्बोधक-
३० श्रुतिविरोध इत्यर्थः । **एतेन वैतानिकशब्दः** स्तुत्या स्मार्तपरः । तत्र च न व्रीह्यादिनियमः
"यदन्नः स्वयं तदन्नास्तस्य देवता" इत्युक्तेरेवं च व्रीह्यादिशास्त्राविरोधः । उभयोः स्मार्तत्वा-
त्सहाधिकारस्त्वस्यामवस्थायां बाध्यते । उक्तश्रौतवाक्यं श्रौतेष्वेव तथात्वबोधकमिति द्वितीयं तु

१ विवेचनीयमिति पं. ८

न युक्तं । दैवादिना कथंचित्प्रवासे तथानुष्ठानं हि युक्तं । न स्वेच्छया शक्तिसत्वे । अन्यथा बहूनामंगानां लोपापत्तेरिति च तदुक्तमपास्तम् । संकोचे मानाभावात् । दैवादिवदत्र वचनस्य साधकस्य सत्वात् । तद्बाधस्य सर्वथा तत्र सत्वाच्चेति दिक् ।

कस्यचिन्मतं खंडयति । **न चेति** । **लोप इति** । अग्नेरेवाभावादिति भावः । **तथेति** अत्र पक्षेऽग्नीनां प्रतिपत्त्यंतराम्नानात् 'अग्नीन्स्वात्मनि वैतानानिति' । इतिभावः । **अपेति** । तद्वत्तत्रापि ५ विकल्पानुक्तेरत एव प्रागुक्तशंखोक्तौ नित्यपदसंगतिरिति भावः ।

यत्तु स यद्वा नैवायं विधिर्गार्हस्थाग्नेः किं तु 'श्रावणकेनाग्निमाधायेति' शास्त्रविहितकर्मांतराणि वैतानादीनि दर्शादिप्रयोगस्तु तत्र गौणः । अतस्तदाधानमभार्यस्यैव । गार्हस्थ्योपात्तप्रतिपत्तिस्तूक्तैवेति तत्र तेषां तद्विषयतायां कथंचिदप्युपपत्त्यभावात् मृतभार्यादेर्वाचनिकतद्विधानपरतया तदुपपत्तेश्च । तदेतत् ध्वनयन्दृष्टांतवैषम्यमप्याह । **न चेति** । नापीत्यर्थः । सर्वथेति भावः । तदाह । १० **पंचमेति** । तत्र गमनोत्तरमिति भावः । **आहितेति** । श्रावणी श्रुतिस्तत्र भवः श्रावणिको मार्गस्तेनाहितोऽग्निर्येन तस्य ब्रह्मचार्यादेरित्यर्थः । तत्र मानं स्मृतिमाह । **वानेति** । चीराजिने वाससी यस्य सः । **मूलेति** समाहारद्वंद्वः । **क्षपाशयः** रात्रिनिद्रः । क्ष्माशय इति पाठे तु भूमिशय इत्यर्थः । **वृक्षेति** अत इनीति ठन् । तन्मूलनिवासीत्यर्थः । **वसिष्ठेति** । **गौतमो**ऽप्येवम् । **खंड इति** । "शकलखंडे वा पुंसी"त्युक्तेः । **वल्कलं** वृक्षत्वक् ॥ ४५ ॥ १५

## याज्ञवल्कीये ४६ श्लोकः ।

संगत्यर्थं निर्णीतार्थानुवादमाह । **साग्निरिति** । तत्र अनुष्ठाने गुणो द्रव्यं हविः । न्यूनतां निराचष्टे । **फालेति** । देशविशेषे कुद्दालादिनाऽपि कर्षणात् । तत्फलितमाह । **अकृष्टेति** । अग्निवृत्तिर्न विवक्षितेत्याह । **अग्निसाध्यानीति** । बहुवचनांतानां द्वंद्व इत्याह । **पितनिति** । **भृत्या**न्भरणीयान् । सेवार्थं समागतशिष्यादीन् । **यद्भक्ष्यमिति** । यदेव भक्षयते तत इत्यर्थः । बलिशब्द २० उपलक्षणं सर्वस्य वैश्वदेवस्य । **अम्मूलेति** इतरेतरद्वंद्वः । **आश्रमागतान्** पांथान् । **शंखो**ऽपि

"यदाहारो भवेत्तेन पूजयेत्पितृदेवताः । तेनैव पूजयेद्विद्वानतिथिं समुपागतमिति" ।

अत एवाऽऽह । **एवमिति** । एवेनान्यव्यवच्छेदः । **देवताभ्य इति** । सर्वदा यदेव देवताभ्यो हुतं दत्तं तच्छिष्टमेव भक्षयेन्न शाकमूलफलादीत्यर्थः । इदं पर्वपरिमिति तु **मेधातिथिः** ।

मि. पृ. ११६ आत्मनीति निमित्तादिति सप्तमी । आत्मनिमित्तं आत्मार्थं शरीरस्थित्यर्थमुपयोजयेदित्यर्थः । स्वयं कृतमित्यस्य सैंधवादिनिषेधे तात्पर्यं न यौगिकार्थे इत्याह । **ऊखरेति** । २५ फलितमाह । **एवमिति** । **ग्राम्यमिति** । व्रीहियवमयमन्नं । ततः प्रभृति नाश्नीयादित्यर्थः । परिच्छदः गवाश्व वस्त्रासनशय्यादि ।

**व्रीह्यादीति** । 'व्रीहिभिर्यजेत' इत्यादिश्रुत्या तेषां विहितत्वात् वाच्यमित्यर्थकं वचनीयं पदं । **बाध** इतीत्यग्रे योज्यम् । ननु न्यानर्थकाप्रतिहतामामिति **न्यायेन** तथैवोचितमित्यत आह । **अफालेति** । तत्र तन्नियमो नेति प्रागुक्तमेव । **न विरोध इति** । न श्रुति- ३०

१ मनुस्मृ. अ. ६ श्लो. १५

स्मृत्योर्विरोध इत्यर्थः । तथा चैकवाक्यतैवेति न बाध्यबाधकभाव इति भावः । **वासंतेति** । वसंते शरादि च पच्यंते तानि । तथा **स्वयमाहृतैरित्यनेन** प्रतिग्रहादिवृत्तिकर्मनिषेधः स्मार्तानामुक्तकर्मणामनुष्ठानार्थं हत्यादिनाप्युपहरणं । चरुपुरूडाशाश्च वैखानसशास्त्रोक्ता एव ज्ञेयाः । ननु मानवे 'वासंतेति' बहुवचनांतद्वंद्वस्य मेध्यैरित्यस्य च मुन्यन्नविशेषणत्वात् विश्रुत्यर्थस्यैव तेन प्रति-
५ पादनेन कथं व्रीह्यादेरफालकृष्टत्वसंभवे मानवं साधकमत आह । **नीवारादीति** । स्वतः स्वत एव मुन्यन्नत्वादेव व्रीह्यादीति वार्मतादेवेत्यर्थः । कथं ततस्तल्लाभोऽत आह । **मेध इति** । **तथा निघंटूक्तेरिति** भावः । तथा च मुन्यन्नैरित्यनेन तान्येव ग्राह्याणि तानि । न तु तानि । एतेन मुन्यन्नैरिति न पूर्वसंबंधी किंतु स्वतंत्रं निमित्तम् । अत एवोक्तशंकानवकाशः । मेध्यैरित्यनुवाद इति **मेधातिथ्याद्युक्तमपास्तम्** । अग्रिमं व्याचष्टे । **तथेति** । **जटाश्चेति** ।

१० "अग्निहोत्रं समादाय गृह्यं वाग्निपरिच्छदम् । ग्रामादरण्यं निःसृत्य निवसेन्नियतेन्द्रियः ॥

"मुन्यन्नैर्विविधैर्मेध्यैः शाकमूलफलेन वा । एतानेव महायज्ञान्निर्वपेद्विधिपूर्वकम् ॥

"वसीत चर्मचीरं वा सायं स्नायात्प्रगे तथेत्यादिः" । **नखमास्त्रियाम्** । "त्रिविधाश्चौपनिषदीरात्मसंसिद्धये श्रुती" रिति ( ६।२९ ) **मनोराहाऽऽत्मोपासनेति** । अत एव न वैय्यर्थ्यं । अन्यथा तत्स्पष्टमेव ॥ ४६ ॥

## १५ याज्ञवल्कीये ४७ श्लोकः ।

अर्थस्य साक्षादिनादिसंबंधाभावाच्छेषेणाह । **संबंधीत्यादि** । एवमग्रेऽपि बोध्यम् । **अर्थस्य** धान्यादेः । **कर्मपर्याप्तेति** दृष्टादृष्टकर्मपर्याप्तार्थसंचयमित्यर्थः । नियमफलमाह । **नाधिकमिति** । तस्य रागतः प्राप्तत्वेन नायमपूर्वविधिरिति भावः । नन्वेवं तुर्यपादसंगतिरत आह । **यद्येवमिति** । **कथंचित्** । रोगादिकृतभोजनाभावादिना अर्जनकाले तावत्तनायाः कर्तुमशक्यत्वेन च । एतेन
२० तावत्पर्याप्तसंचयस्यैव सत्वेनाधिकस्यैवाभावात्कस्य त्याग इत्यपास्तम् । इदमपि षण्माससमनिचयपक्षयोः । **मनुरपि** ( ६।१४–१५ ) ।

"सद्यः प्रक्षालको वा स्यान्माससंचयिकोऽथ वा । षण्मासनिचयो वा स्यात्समानिचय एव वा ॥" इति ।
"त्यजेदाश्वयुजे मासि मुन्यन्नं पूर्वसंचितम् । जीर्णानि चैव वासांसि शाकमूलफलानि चेति च ॥" इति ।

अजीर्णानां तु न त्याग इति भावः ॥ ४७ ॥

## २५ याज्ञवल्कीये ४८ श्लोकः ।

**किंचेति** । अन्यानपि तद्धर्मानाहेत्यर्थः । एवमग्रेऽपि बोध्यम् । **दर्पो** मदः । **अपराह्ण**-शब्देन यौगिकेन दिवसावसानसमयरूपः सायंभाग उच्यते । अतो न **मन्वादिना** श्रुत्यादिना च विरोधः । **भारते** तु पुरुषमात्रधर्मतयेदमुक्तं । **मनूक्तस्नानद्वयं** तु वैकल्पिकं बोध्यम् । अत्र सायं स्नानोक्त्या रात्रौ भोजनमनुमीयते । भुक्ते स्नाननिषेधात् इति केचित् । यतः स्नातक-
३० व्रतमतः स्नानमाचरेद्भुक्तेऽपीत्यके । णिन्यर्थमाह । **शील इति** । एवमग्रेऽपि । साहचर्यादाह ।

१ मनुस्मृ. अ. ४–६

**याजनादीति**। नित्ययोगे मनुमित्याह । **वेदाभ्यासेति** । यथा गार्हस्थ्येत्थावश्यकव्यापारदशा था तदभावस्तत्र तस्यैवाभावान्नेति भावः । अन्यासंभवादाह । **मूलफलेति** । त्रयाणां द्वंद्वः । आदिना शाकादि । **मनुरपि** ( ६।८ )

"स्वाध्याये नित्ययुक्तःस्याद्दांतो मैत्रः समाहितः । दाता नित्यमनादाता सर्वभूतानुकंपकः ॥" इति।

**शंखोऽपि** "स्वाध्यायं च तथा कुर्याज्जटाश्च बिभृयात्तथेति" ॥ ४८ ॥ ५

## याज्ञवल्कीये ४९ श्लोकः ।

रूपके साधारणधर्ममाह । **निस्तुषीति** । मत्वर्थीयष्ठनित्याह । **तदिति** । कालस्य कार्यमात्रं प्रतिसाधनत्वादाह । **कालेनैवेति** । धान्येति धान्यरूपा अवस्था यस्य तत्सतुषं धान्यमिति यावत् । न तु तंडुलादीति भावः । **वेणुशब्दस्तदीयधान्यपरः** । न्यूनतां निराचष्टे । **वाशब्द इति** । अग्निनैव पक्वमशनं यस्येत्यर्थः । **एवो**ऽन्यव्यवच्छेदे "अश्मकुट्टो भवेद्वापि दंतोलूखलिकस्तथे"त्यस्योत्तरार्द्धः ( ६।१७ ) । एवं चोभयत्रापीदं द्वयं बोध्यम् । अत एव दंतोलूखलिकत्वापेक्षया विकल्पमाह । **अश्मेति** । वाशब्दस्य मध्यमणिन्यायेनात्राप्यन्वय इति भावः । एतेन सकृद्वाशब्देन त्रयाणां विकल्प इत्यपास्तम् । व्यधिकरणबहुव्रीहिमाह । **अश्मनेति** । एतेनैकं फलपरमेकं धान्यपरमुभयमप्यन्यतरपरमित्यपास्तम् । १०

उत्तरार्धं व्याचष्टे । **तथेति** । क्रियास्तथेत्यस्यावैयर्थ्यायाह । **दृष्टार्थाश्चेति** । अनेन पूर्वयोरदृष्टार्थत्वं सूचितम् । फलातिप्रसंगनिरासायाह । **लकुचेति** । लकुचादयो वृक्षविशेषाः । नियमफलमाह । **त्विति** । **मेध्येति** । इदं च फलद्वारकं स्नेहविशेषमूलानुरोधात्स्थलजोदकशाकानि पुष्पमूलफलानि चेत्यस्यादिः । निषेधोऽपि **मानवे** (६।१४) १५

मि. पृ. ११७

"वर्जयेन्मधुमांसानि भौमानि कवकाणि च । भूस्तृणां शिग्रुकं चैव श्लेष्मातकफलानि चेति" ॥

"न फालकृष्टमश्नीयादुत्सृष्टमपि केनचित् । न ग्रामजातान्यार्तोऽपि मूलान्यपि फलानि चेति ॥" २०

**स्थलजान्युदकादीनि** । अनेन 'तदन्याभ्युपगमः ।' मधु क्षौद्रं तस्य नित्यं निषेधात् । कवकानां छत्राकाणां वृक्षकोटकादावपि जायमानत्वात्तद्व्यावृत्तये भौमानीति विशेषणमिति केचित् । गृहस्थधर्मेष्वविशेषेण निषेधात्तेषामत्र नियमो न युक्त इति । भौमानीति स्वतंत्रगोजिह्विकादिनिषेधपरमित्यन्ये । सर्वथा भूजातमात्रस्य न निषेधः । कवकानां प्रतिषिद्धत्वात्पुनः प्रतिषेधो भूस्तृणादीनां तत्समप्रायश्चित्तार्थः । भूस्तृणशिग्रुकशब्दौ वाहीकेषु प्रसिद्धौ शाकविशेषवचनौ । आरण्यस्यापि फालकृष्टस्य निषेधः । ग्रामजातान्यफालकृष्टान्यपि । सन्त्यजेदित्यनेनैव सिद्धे देवताभ्यर्चनादौ निषेधार्थमिदम् । आर्तोऽप्यन्यासंभवेऽवश्यकर्तव्यदेवतार्चनादौ प्रतिनिधिनापि न ग्राह्याणीत्यर्थः । अपिर्भिन्नक्रमे पुष्पादीन्यपि न ग्राह्याणि किं पुनर्धान्यानीत्यर्थः ॥ ४९ ॥ २५

## याज्ञवल्कीये ५० श्लोकः ।

**सदा** सर्वकालम् । एतत्सर्वशेषः । वेत्यस्यार्थो **यद्वेति** । अहनीत्यत्राहोरात्रं न विवक्षितं मन्वाद्यनुरोधादत आह । **नक्तमिति** । नयेदित्यादेरतिक्रामेदित्यर्थः । **नापीति**कालं नयेदित्यस्यानु- ३०

---

१ मनुस्मृ ६।१६

षंगः। एकं दिनमतीत्य द्वितीये सायं भुंजानश्चतुर्थकालिकः। एवं त्रीण्यतीत्य चतुर्थे सायं भुंजानोऽष्टमकालिकः। भोजनस्य प्रक्रांतत्वात्कालसंबंधः। मत्वर्थीयष्ठन्। एतदग्रे स एव (६।२०)

"चांद्रायणविधानैर्वा शुक्ले कृष्णे च वर्तयेत्। पक्षांतयोर्वाऽप्यश्नीयाद्यवागूं क्वथितां सकृदिति॥"
पक्षांतौ पर्वणी सकृत्सायंप्रातर्वा। शंखोऽपि

५ "चतुर्थकालिको वा स्यात्षष्टकालिक एव वा। कृच्छ्रैर्वाऽपि नयेत्कालं ब्रह्मचर्यं च पालयेत्॥
"एवं नीत्वा वने कालं द्विजो ब्रह्माश्रमी भवेदिति"। व्यवस्थामाहैतेषां त्रेति॥ ५०॥

## याज्ञवल्कीये ५१ श्लोकः।

**आहारेति**। तयोः समयं वर्जयित्वेत्यर्थः। निर्हारो निष्कृष्य हरणं निष्काशनादि वा। विहारेति पाठे संचारोऽर्थः। रात्रौ रागप्राप्तस्वापनियमविधिफलमाह। **नोपेत्यादि**। **रात्रावेवेति**।
१० नियमस्तु नेत्याह। **दिवेति**। **पुरुषेति** ब्रह्मचार्यादिसकलं पुरुषेत्यर्थः। एवं शुचित्वांशेऽपि न नियम इति बोध्यम्। नियमांतरमाह। **तथेति**। **शय्या** खट्वा। **मंचकः** पर्यंकः। आदिना मित्यादि। **दिनं संप्रपदैरिति** पाठस्तदाह। **दिनं त्विति**। अत्राश्रमे विहाराभावेन त्रयाणां न द्वंद्व इत्याह। **स्थानेति**। तदर्थमेवाह। **कंचिदिति**। श्रुतीरितीति।

"ऋषिभिर्ब्राह्मणैश्चैव गृहस्थश्चैव सेविताः। विद्यातपोविवृद्ध्यर्थं शरीरस्य च शुद्धये"॥

१५ इति शेषः। **दिनमितीति**।"स्थानासनाभ्यां विहरेत्सवनेषूपयन्नप" (६।२२)इति शेषः। विपरिवर्तनं। केवलभूमावेकेन पार्श्वेन पतित्वा पुनः पार्श्वान्तरेणास्थानं इदमेव परिलोटनम्. उपयन्नप इत्यनेन नद्यादीनामसंभवे उद्धृतोदकेनापि स्नानम्। सवनत्रये प्रागुक्ते दर्शितम्। **पादाग्रैरिति**। तथा च तदन्यसंबंधो न भूमेरिति भावः।

## याज्ञवल्कीये ५२ श्लोकः।

२० यद्यपि"ग्रीष्मे पंचतपास्तु स्याद्वर्षास्वभ्रावकाशकः। आर्द्रवासास्तु हेमंते क्रमशो वर्द्धयंस्तपः॥" इति **मानवं** यथाश्रुतं व्याख्यानं **मेधातिथिना** हेमंतग्रहणमात्रं शिशिरस्याप्युपलक्षणं कृतं तथापि तन्न युक्तम्। न्यूनतायास्तदवस्थत्वात्। तदेतत् ध्वनयन्नाह। **त्र्यतुरिति**। त्रयो ऋतवो यस्मिन्स संवत्सरः। तानेवाह। **ग्रीष्म इति**। सामीप्याल्लक्षणेति भावः। **चत्वार** 'अग्नय' इति पाठः। स्थंडिलं न विवक्षितं। मन्वनुरोधादतस्तात्पर्यार्थमावर्षाधारेति तन्निवारणार्थं छत्रवस्त्रादिकमपि न ग्राह्यमिति भावः। तात्पर्यार्थमाह। **यथा शरीरेति**। **तप इति**। "उपस्पृशं त्रिषवणं
२५ पितन्देवांश्च तर्पयन्" इत्यस्यादिः। उपस्पर्शः स्नानं। उग्रतरं प्रकृष्टतरं। मासोपवासादि शरीरपीडाजनकम्। शंखोऽपि

"तपसा शोषयेन्नित्यं स्वकं चैव कलेवरं। आर्द्रवासास्तु हेमंते ग्रीष्मे पंचतपा तथा॥
"प्रावृष्याकाशशायी च नक्ताशी च सदा भवेदिति॥" ५२॥

---

१ मनुस्मृ ६।३०। २ मनुस्मृ ६।२३.। ३ मनुस्मृ ६।२४।

## याज्ञवल्कीये ५३ श्लोकः।

बहुवचनलब्धार्थमाह। **कंटकादिभिरिति**। एवमग्रेऽपि। वेरर्थमाह। **विविधमिति**। योग्यतयाऽऽहांऽगानीति। तुश्चार्थे इत्याह। **यश्च चंदनेति** ॥ ५३ ॥

## याज्ञवल्कीये ५४ श्लोकः।

मि. पृ. १९८ **अग्निपरिचर्याक्षममिति**। चिरकालकृततपसा क्षीणसप्तत्यधिकावस्थां प्राप्तं वानप्रस्थं प्रतीत्यर्थः। अनतिप्रसंगायाह। **वृक्ष एवेति**। तन्मूलमेवेत्यर्थः। **चेन** स्मार्ताग्निसमुच्चयः। अत एवानग्निर्वाह्याग्निरहितः। अत एव वानिकेतः। अग्निरक्षणाद्यर्थं कृतपर्णकुट्याऽपि रहितः। मूलफलाशनारण्यानामपि नीवारादीनां भोक्ताऽन्नानाम्। मुनिः स्यात् वाङ्नियमकृत्स्यात्। मौनव्रतधारी स्यादित्यर्थः। तथा लोकप्रसिद्धेः। तदाह। **मुनिरिति**। किंच

"पुष्पमूलफलैर्वाऽपि केवलैर्वर्तयेत्सदा। कालपक्कैः स्वयंशीर्णैर्वैखानसमते स्थितः" ॥ इति सः (६।२१)। **यात्रार्थमित्यस्यार्थमाह**। **यावतेति**। **यात्रा** प्राणधारणम्। तदाह **मनुः (६।२६–२७)**

"अप्रयत्नः सुखार्थेषु ब्रह्मचारी धराशयः। शरणेष्वममश्चैव वृक्षमूलनिकेतनः ॥

"तापसेष्वेव वृक्षेषु यात्रिकं भैक्षमाहरेत्। गृहमेधिषु वान्येषु द्विजेषु वनवासिषु ॥" इति। शरणेषु कुटीवृक्षमूलादिषु। अममः आत्मीयत्वाभिनिवेशरहितः। तापसेष्वित्यादिषु पंचम्यर्थस्य तत्वविवक्षया सप्तमी। यात्रिकमिति मत्वर्थीयष्ठन्। अन्येभ्यो गृहस्थेभ्यो वनवासिभ्य एव द्विजेभ्यो वेत्यर्थः ॥ ५४ ॥

## याज्ञवल्कीये ५५ श्लोकः।

### (पूर्वार्धः।)

**तदसंभवः**। वानप्रस्थगृहभैक्षासंभवः। सर्वथाऽस्य बाधितत्वादाह। **व्याघ्यभीति**। **अर्थलुप्त इति**। अर्थाल्लुप्त इत्यर्थः। अस्यानुकल्पत्वेन ततोऽभिफलभिक्षैवेत्यपि। तथा **मनुरपि(६।२८–२९)**

"ग्रामादाहृत्य वाऽश्नीयादष्टौ ग्रामान्वने वसन्। प्रतिगृह्य पुटेनैव पाणिना शकलेन वा ॥

"एताश्चान्याश्च सेवेत दीक्षा विप्रो वने वसन्निति"। पुटं पत्रस्य। पाणिनेति भाजनाभावः। शकलं शरावादिखंडः। एताः प्रागुक्ता अन्याश्चक्षुर्निमीलनादयः दीक्षानियमाः। **शंखोऽपि**

"ग्रामादाहृत्य वाऽश्नीयादष्टौ ग्रासान्समाहित" इति। न्यूनतां निराचष्टे। **यदा पुनरिति**। **मुनेः** यतेः।

### (उत्तरार्धः।)

अवतरत्यालब्धार्थमाह। **अथवेति**। प्राग्वदाह। **वायुरेवेति**। अकुटिलेत्यत्र मानमाह। **यथाहेति**। **अपराजिता ऐशानी**।

"आ निपाताच्छरीरस्य युक्तो वार्यनिलाशनः" इत्यस्योत्तरार्द्धम्। इदमेव महाप्रस्थानं वीराध्वा च। अत एवातन्निरासायाह। **महेति**। ज्वलनस्याभ्यर्हितत्वात्पूर्वनिपातः। महाप्रस्थानेति। तथैवाहैवमिति। ऐंद्रवं चांद्रायणदीक्षानियमाः। मूलानुरोधेनाह। **महेति**। **कादाचित्कत्वनिरासायाह**। **नन्विति**। एता एव महर्षिचर्याः। **तदन्यतमया** एकपाकया।

कयाचिदपि यथासंभवं । नरकदुःखानुभवः शोकः । नरकं गमिष्यामीति भयं । तदुभयरहितः । विप्रग्रहणं द्विजोपलक्षणम् । अव्यवधानेनैवार्चिरादिक्रमेण ब्रह्मलोकं प्राप्य तत्र पूज्यमान आस्ते इत्यर्थः । **स्थानेति** । स्वर्गादपि निरतिशय इत्यर्थः । **तुरीयेति** । केवलकर्मकृतो मोक्षाभावादिति भावः । **गीतोक्तमाह** । **योगेति** । तद्भावो भक्तत्वम् । **आदिना** सारूप्यादिपरिग्रहः । अत्र ५ श्रुतिं मानमाह । **त एवेति** । श्रुतावित्यस्याभिधानद्वयेऽन्वयः । **स्कंधः** शाखा । **यज्ञ इति** । इत्येतिपाठांतरं । **प्रथमः** गृहस्थरूपः सः । द्वितीयो वानप्रस्थः । तृतीयो नैष्ठिकः । ब्रह्मेत्यादिनाऽयमेवोच्यते । उपकुर्वाणस्य संगृहीतत्वात्पृथगत्रानुक्तिः । यागादिकं तत्स्वरूपं । अन्यथा श्रुतिविरोधः मि. पृ. ११९ " स्पष्ट एवेति भावः । एवं सत्यन्यविरोधमपि परिहराति । **यदपीति** । एवेनैतद्विरुद्धं मेधातिथ्याद्युक्तमपास्तामिति दिक् ॥ ५५ ॥

१० इति वानप्रस्थप्रकरणम् ॥ ३ ॥

---

# अथ यतिधर्मप्रकरणम् ॥ ४ ॥

संगतिमवसररूपामाह । **वैखानसेति** । वानप्रस्थेत्यर्थः । **प्रस्तौति** । अभिकरोति । **प्रारभते** । तान्वक्ष्यमाणावधिकारिनिरूपयतीति यावत् ।

## याज्ञवल्कीये ५६ । ५७ श्लोकौ ।

१५ वनान्मोक्षे इत्यंशं व्याचष्टे । **यावतेत्यादि** । **तपः** प्रागुक्तकृच्छ्रचांद्रायणादि । **शोषितेति** । 'शोधितेति' पाठांतरं । **कषायो** रागः । तात्पर्यार्थमाह । **पुनश्चेति** । दूरांतिकार्थैरिति पंचमीत्याह । **तत्समेति** । ननु वनादिशब्दस्यान्यार्थकतया प्रसिद्धेः कथमुक्तार्थलाभोऽत आह । **वनेत्यादि** । प्रकरणादिनेति भावः । 'तत्संबंधाश्रमौ लक्ष्येते' इति पाठः । अन्यथापाठे तु जातावेकवचनम् । लक्षणाबीजं तु स्पष्टमेवोक्तं । तद्विना तदसंभवादाह । **मोक्षेति** । लक्ष्यत इत्यस्याग्रेऽनुषंगः । गृहाद्वा २० मोक्षे इत्यंशं व्याचष्टे । **अथवेति** । **समुच्चयपक्ष इति** । **मनुरपि** ( ६ । ८६–९७ ) ।

"एष धर्मोऽनुशिष्टो वो यतीनां नियतात्मनाम् । वेदसंन्यासिकानां तु कर्मयोगं निबोधत ॥
"ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा । एते गृहस्थप्रभवाश्चत्वारः पृथगाश्रमाः ॥
"सर्वेऽपि क्रमशस्त्वेते यथाशास्त्रं निषेविताः । यथोक्तकारिणं विप्रं नयंति परमां गतिम् ॥
"सर्वेषामपि चैतेषां वेदस्मृतिविधानतः । गृहस्थ उच्यते श्रेष्ठः स त्रीनेतान्बिभर्ति हि ॥
२५ "यथा नदीनदाः सर्वे सागरे यांति संस्थितिम् । तथैवाश्रमिणः सर्वे गृहस्थे यांति संस्थितिम् ॥
"चतुर्भिरपि चैवैतैर्नित्यमाश्रमिभिर्द्विजैः । दशलक्षणको धर्मः सेवितव्यः प्रयत्नतः ॥
"धृतिः क्षमा दमो स्तेयं शौचमिंद्रियनिग्रहः । धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम् ॥
"दश लक्षणानि धर्मस्य ये विप्राः समधीयते । अधीत्य चानुवर्तंते ते यांति परमां गतिम् ॥
"दशलक्षणकं धर्ममनुतिष्ठन्समाहितः । वेदांतान्विधिवच्छ्रुत्वा संन्यसेदनृणो द्विजः ॥
३० "सन्यस्य सर्वकर्माणि सर्वदोषमपानुदन् । नियतो वेदमभ्यस्य पुत्रैश्वर्ये सुखं वसेत् ॥

"एवं सन्यस्य कर्माणि स्वकार्यपरमोऽस्पृहः । संन्यासेनापकृत्यैनः प्राप्नोति परमां गतिम् ॥
"एष वोऽभिहितो धर्मो ब्राह्मणस्य चतुर्विधः । पुराणोऽक्षयफलः प्रेत्य राज्ञो धर्मं निबोधतेति" ॥
तृतीयं पक्षमाह । **तथेति** । गार्हस्थ्यादितरयोराश्रमयोर्वानप्रस्थसंन्यासयोरित्यर्थः । ब्रह्मचर्यं तु सर्वमूलभूतमस्त्येवेति भावः ॥

व्यवस्थामाह । **एषां चेति** । उक्तक्रमेणाह । **समुच्चयेति** । बाधनिरासायाह । **श्रुतीति** । ५ **इच्छयेति** । अधिकारेच्छयेत्यर्थः । तथा च व्यवस्थितविकल्पः । नान्यतमेनापरबाध इति भावः । **अतः** उक्तरीत्यो । निर्वाहात् तत्साफल्यमाह । **गार्हस्थेति** । **स्वाध्यायेति** । वेदाध्ययनाभावमूलकमित्यर्थः । दोषांतरमाह । **किंचेति** । ननु को वाऽत्राधिकारी यदि इच्छया विकल्पोऽत आह । **अस्मिंश्चेति** । **तथेति** समुच्चये । यथासंख्यमन्वयः । **ब्राह्मणस्य** नैष्ठिकस्यैव । ननु **मानवे** इतोऽप्युपक्रमे द्विजपदं श्रूयते मध्ये च उपसंहारे च । तथा हि ( ६।३३,३४,३६, ३७ ) १०

"वनेष्वथ विहृत्यैवं तृतीयं भागमायुषः । चतुर्थमायुषो भागं त्यक्त्वा संगान्परिव्रजेत् ॥
"आश्रमादाश्रमे गत्वा हुतहोमो जितेंद्रियः । भिक्षाबलिपरिश्रांतः प्रव्रजन्प्रेत्य वर्द्धते ॥
"अधीत्य विधिवद्वेदान्पुत्रांश्चोत्पाद्य धर्मतः । इष्ट्वा च शक्तितो यज्ञैर्मनो मोक्षे निवेशयेत् ॥
"अनधीत्य द्विजो वेदाननुत्पाद्यैव चात्मजान् । अनिष्ट्वा चैव यज्ञैश्च मोक्षमिच्छन् व्रजत्यध ॥" इति ।
"यो[१] दत्वा सर्वभूतेभ्यः प्रव्रज्यत्यभयं गृहात् । तस्य तेजोमया लोका भवंति ब्रह्मवादिनः ॥ १५
"यस्मादण्वपि भूतानां द्विजान्नोत्पद्यते भयम् । तस्य देहाद्विमुक्तस्य भयं नास्ति कुतश्चन ॥
"आगारादभिनिष्क्रान्तः पवित्रोपचितो मुनिः । समुपोढेषु कामेषु निरपेक्षः परिव्रजेदिति"॥
"अनेन क्रमयोगेन परिव्रजति यो द्विजः । स विधूयेह पाप्मानं परं ब्रह्माधिगच्छति ॥" इति।

"वेदान्तान्विधिवत् श्रुत्वा संन्यसेदनृणो द्विजः ।" इति च । तथा च कथं तत इष्टार्थसिद्धिः । किंच तथा सति वानप्रस्थप्रकरणे उपक्रमे द्विजपदसत्वेऽपि उपसंहारे "विप्रो वने २० वसन्" विप्रो ब्रह्मलोके महीयतेति द्विजस्तथोक्तोपक्रमत उपसंहारस्य प्राबल्येन तत्राप्यतिप्रसंगोऽत आह । **ब्राह्मणा इति** । **मात्रं** कार्त्स्न्ये । एवं सिद्धांतमुक्त्वैकदेशिमतमाह । **अन्ये त्विति** । **सूत्र**माह । **त्रयाणामिति** । **अपरार्के**ऽपि

"ऋणत्रयमपाकृत्य निर्ममो निरहंकृतिः । ब्राह्मणः क्षत्रियो वाऽथ वैश्यो वा प्रव्रजेत् गृहादिति ॥"

**धर्मविवृत्तावपि** २५

"[२]ब्राह्मणः क्षत्रियो वैश्यस्ततो गच्छेद्वनं कृती । संन्यसेद्वाऽथ वा शांतः सर्वभूतदयापरः ॥" इति।
ननु क्षत्रियादेरेतान्निषेधपराण्यपि वाक्यानि वक्ष्यमाणानीति तेषां का गतिरिति चेत् उच्यते "अबाधेनोपपत्तौ बाधो न न्याय्य" इति **न्यायेन** श्रुतिस्मृतिविरोधपरिहाराय विधिवाक्यानामाश्रमरूपविधौ तात्पर्यं निषेधवाक्यानां तु दंडादिग्रहणमात्रनिषेधे तात्पर्यं । तस्मात्क्षत्रियादेरपि तन्मात्रनिषेधो नाश्रमनिषेधः । एवं च ब्राह्मणपदमात्रघटितानि वाक्यान्यप्युपलक्षणपरतया ब्रह्म वेदस्तन्निष्टस्तदध्ययनवान् ब्राह्मण इति व्युत्पत्तिपरतया वा नेयानीति न कोऽपि विरोधः । ३०

---

१ ६।३९-४१ । २ अ. ६ श्लो. ८५,९४ ।

उक्तश्रुतौ तु बहुवचनादाद्यर्थलाभोऽपि सुवच इत्येतन्मततात्पर्यम् । अत्रान्ये त्वितीत्यनेनारुचिः सूचिता । सा चेत्थम्

"श्रुतिस्मृतिविरोधे तु श्रुतिरेव बलीयसी । अतः श्रुत्यनुसारेण व्यवस्था च विधीयते ॥"

इत्युक्ते"ब्राह्मणः प्रव्रजतीति" **श्रुत्या** ब्राह्मणत्वजातिप्रवृत्तिनिमित्तिकब्राह्मणशब्दबोध्य-
५ ब्राह्मणोद्देशेन प्रव्रज्या विधीयते । हविरुभयत्ववदुद्देश्यविशेषणस्याविवक्षितत्वेऽपि हविर्वत् ब्राह्मण-त्वस्योद्देश्यस्य विवक्षितत्वात् । न चोपलक्षणत्वं मानाभावात् । न च बहुवचनात्तदर्थलाभः । ब्रह्म-चर्याद्याश्रमभेदभिन्नानां त्रयाणां संग्रहेण तस्य साफल्येऽन्यथानुपपत्यभावेनागतिकगत्याश्रयणस्या-युक्तत्वात् । न चोक्तव्युत्पत्या त्रयाणामपि ग्रहाणां "रूढिर्योगमपहरतीति" **न्यायेन** सकललोक-तंत्रप्रसिद्धब्राह्मणत्वजातिमात्रार्थस्य त्यागे मानाभावादन्यथा 'गच्छाति गौरिति' व्युत्पत्त्या तेना-
१० न्यस्यापि तादृशस्य ग्रहणं । यतस्तस्मात्क्षत्रियादिशब्दवदयमपि तथैवेति तत्रैव श्रुतितात्पर्यं इति तस्यैवाधिकारः । अत एव **दत्तात्रेयोऽपि**

"मुखजानामयं धर्मो यद्विष्णोर्लिंगधारणम् । बाहुजातोरुजातानामयं धर्मो न विद्यते" ॥ इति

"गतिस्तुर्याश्रमे प्रोक्ता मुखजाना स्वयंभुवेति" च लिंगधारणनिषेधमात्रपरत्वं तु नास्य युक्तम् । आश्रमसत्वे तल्लिंगाभावस्यान्यत्रादृष्टत्वात् गत्यंतरसंभवे तथा कल्पनानौचित्याच्च ।
१५ **धर्मविवृतावपि**

"संन्यसेत् ब्राह्मणः सम्यक् वानप्रस्थो भवेन्नृपः । वानप्रस्थो भवेद्वैश्य एवं वर्णक्रमः स्मृतः ॥" इति ।

अस्यापि प्रागुक्तरीत्याऽर्थांतरकरणं तु तत एवायुक्तम् । एतेन "जायमानो वै ब्राह्मण" इतिवदत्रापि **श्रुतौ** ब्राह्मणशब्दस्त्रैवर्णिकपर इत्यपास्तम् । ब्रह्मचर्येणेत्यादिवाक्यशेषस्यैवात्र कस्यचिद्भमकास्याभावात् लब्धात्मिकीया रूढेः प्राबल्याच्च । अनुपपत्तेरभावेन लक्षणाया असं-
२० भवाच्च । नन्वेवमुक्तस्मार्तवचनानां का गतिरिति चेत् शृणु । अप्रमाणानि तानि । "औदुंबरी सर्वा वेष्टयितव्येति"वदिति केचित् । अन्ये तु **अपरार्कोक्त**स्मृत्यंतरस्य प्रव्रजेदित्यस्य वान-प्रस्थाश्रमं गच्छेदित्यर्थः । यद्यपि प्रवज्याशब्दस्य संन्यासे रूढिस्तथापि तिङन्तस्यान्यत्रापि प्रयो-गात् श्रुत्यविरोधार्थत्वाच्चात्र एवमेवास्यापि वैराग्यहेतुकत्वात् इत्याहुः । अपरे तु यदा "ब्राह्मणः स्ववृत्त्या जीवन् क्षत्रियवृत्तिमाश्रितवान् तयाऽप्यजीवन्वैश्यवृत्तिं ततस्तामापदं निस्तीर्यापि न तां
२५ त्यजति किंतु तत्रैवावास्थित" इति तत्पदं वाच्यो भवति तदभिप्रायकं । तत एतत्सूचनार्थमेवाथ शब्दः । तेन तत्तदानंतर्यप्रतिपादनादित्याहुः । एतेन **धर्मविवृत्ति**वचनं **छंदोगसूत्रं** च व्याख्यातम् अंत्ये यथोचितमित्यध्याहारेणापि निर्वाहः । एवं **मनुदत्तात्रेय**वचनानुकल्पमपि बोध्यम् । एवं रीत्या अन्यान्यपि विरुद्धवचनानि व्याख्येयानि ।

"शिखायज्ञोपवीतानां त्यागपूर्वकदंडयुगिति" **ब्रह्मांडपुराण**स्थवचनमपि **छंदोगसूत्र-**
३० समानार्थम् । यत्तु जडभरतं प्रति पैंगिरहस्योपदेशो "यदि मृत्योः परं शांतमनामयं शाश्वतं पदमिच्छुरासि तत्परमहंसो भवेति" तत्रापि परमहंसो निर्मरणो भवेत्यर्थः । प्रैषोच्चारेण पूर्वकमाश्रम-ग्रहणं तस्य हि क्वापि न श्रुतम् । या च **जाबालश्रुतिर्जनकयाज्ञवल्क्यसंवादे** तत्र "परमहंसका नाम संवर्तकारुणिश्वेतकेतुदुर्वासासौभरिमुनिदाल्भ्यजडभरतदत्तात्रेयरैवतकप्रभृतय"

इति तत्रापि अहंकारममतयोरभावात्परमहंससादृश्येन परमहंसा इति व्यपदेशस्तस्मात्सिद्धं ब्राह्मणस्यैवाधिकार इति दिगिति। अथाग्रिमं व्याचष्टे **यदेत्यादिना**। वेदस् शब्दो धनपर्यायः।

मि. पृ. २००. कर्मधारयात्तस्येदमित्यणित्याह। **सर्वधनेति**। **आदिना** पित्रादिपरिग्रहः। वनांशे फलाभावादाह। **अनेनेति**। "वनाद्गृहाद्वे"त्युक्तेः फलमाह। **यदा त्विति**। **तत्र** प्रजोत्पादनादौ। ननु सोऽपि अस्तु तस्यात आह। **रागेति**। **नियमेति**। रागप्राप्तत्वादेव तस्य नियमविधित्वमिति भावः। **अन्येति**। रागित्यर्थः। **तस्य** विधेः। **इति** श्रुतिरिति शेषः। **मात्रं** कात्स्न्र्ये। एवं च दारपरिग्रहोऽप्यावश्यक इति भावः। देवांशे दोषमाह। **यज्ञादिष्विति**। तदुक्तश्रुतेः का गतिरत आह। **तस्मादिति**। न तूत्पत्तिमात्रेण जायमानत्वमिति भावः। **तस्य** श्रुतिवाक्यस्य। अत एव कण्वभीष्मादीनां सद्गतिरिति बोध्यम्। उपसंहरति। **अतश्चेति**। **एवेन** तद्व्यवच्छेदः॥ ५६॥ ५७॥

## याज्ञवल्कीये ५८ श्लोकः।

तस्य तु उदासीने कर्तव्याभावादाह। **प्रियाप्रियेति**। हितत्वस्याप्यर्थधर्मत्वादाह। **उदेति**। यथाक्रममाहिताहितेति। **अनारंभीति**। ताच्छील्ये णिनिः। अविनिगमकत्वादाह। **बाह्येति**। **त्रय** इति। तद्धितार्थे द्विगुः। इदमुपलक्षणमित्याह। **एकं वेति**। एतदभिप्रायक एव **मनुः** (१२।१०)

"वाग्दंडोऽथ मनोदंडः कर्मदंडश्च ते त्रयः। यस्यैते नियता दंडाः स त्रिदंडीति कथ्यते"॥ इति।

**कात्यायनेन** सामान्यतः सर्वाश्रमिणां सदा यज्ञोपवीतधारणस्मरणादाह। **यज्ञोपेति**। उपलक्षणत्वादेवान्यदप्याह। **तथेत्यादि**। **पुत्रदारमिति** समाहारद्वंद्वः। प्राधान्यात्पृथगुक्तिः। वेदश्च अंगानि च। कमंडल्वादिमात्रांतद्वंद्वस्य सहेन समासः। अथाग्रिमं व्याचष्टे। **शौचेति**। एक एवारमते इति व्युत्पत्तेराह। **प्रत्रेति**। एकाराम इत्यत्र संमतिमाह। **तथा चेति**। **यथोक्तः**

मि. पृ. २०१ स्वोक्तधर्मविशिष्टः। **द्वौ मिथुनमेव स्मृतं**। **पैशून्यं मात्सर्यमपि**। संबंधात् भवत्यत्र **न संशय** इत्यर्थः। **सुखेति** सुखजनकं चेत्यर्थः। यथासंख्यमन्वयः। अविरोधायाक्षात्रेति। अत एव **स्मृत्यंतरं**

"एकाक्षरं परं ब्रह्म प्राणायामः परं तपः। उपवासात्परं भैक्षं दया दानाद्विशिष्यते॥"इति।

तत्र विशेषमाह। **वर्षेति**। वर्षाभ्योऽन्यत्रेति पूर्वान्वयि। वर्षासु तु **मात्स्येऽपि**

"अष्टौ मासान् विहारः स्यान्मुनीनां संयतात्मनाम्। एकत्रिचतुरो मासान् वार्षिकान्निवसेत्पुनः॥

"अविमुक्ते प्रविष्टानां विहारस्तु न विद्यते। न देहो भविता तत्र दृष्टं शास्त्रे पुरातनैः॥" इति। ५८॥

## याज्ञवल्कीये ५९ श्लोकः।

**असंकल्पितानीति**। अमनोनिश्चितानीत्यर्थः। सिद्धांतभूतपंचधाविभागेनाह। **अह्न इति**। **विधूम** इत्यादिबहुव्रीहिणा कालविशेषणम्। **सन्नं** निवृत्तं मुसलं तदाघातो यत्र। भुक्तवाजनो यस्मिन्। **शरावाणामुच्छिष्टपात्राणां** संपाते भूमौ त्यागे। **वृत्तेऽतीते**। अत्र यथासंभवं समुच्चयो विकल्पो वा बोध्यः। अत एव वक्ष्यमाणसंगतिः। **मनुमेवाह**। **तथा एकेति**। अत्र भिक्षाचरणकार्यस्य भोजनस्यैककालता विधीयते। न तु भैक्षाचरणस्यैव। द्विर्भोजननिषेधात्।

**अन्यथा** एककालभिक्षाचरणोऽपि स्थापितशेषेण द्वितीयभोजनसंभवस्तदाह । **न प्रेति** । द्वितीयभोजनार्थतया हि विस्तरः प्राप्नोति । तत्रेष्टापत्तौ दोषांतरमप्याह । **भैक्षेति** । तद्विषयेऽतिप्रसक्त इत्यर्थः । **हि** यतः । **ज्योतिर्नक्षत्रादि** । **ज्ञानं** चात्मनः । तयोरुपदेशादिना । **उत्पातो** दिव्यादि-धूमकेत्वादिः । **निमित्तं** ग्रहस्थित्यादि । **नक्षत्रविद्या** 'अथ कृत्तिके'त्यादि । **अंगविद्या**
५ हस्तलेख्यादि । **अनुशासनं** राज्ञस्तत्प्रकृतीनां चैवं वर्तितुं युक्तमित्यादि । **वादो**ऽभिमानहेतुकः शास्त्रार्थविप्रतिपत्तौ साधनदूषणाद्युपन्यासः । तेनैव **मनुनैव** । विरोधं मूलस्य "सायाह्ने" इत्यस्य "एककालमिति" **मनो**श्च परिहरति । **यत्पुनरिति** । यतिपरत्वेऽन्येषामपि तदैव संचारादसंगतिं परिहरति । **योगेन भिक्षणेति** । **वयोभिः** पक्षिभिः । **आकीर्णं** यत्र बहवोऽन्नलोभार्थं मिलितास्तत् गृहं । **यात्रा** रक्षणं संपत्तिः । **मुनिर्मनः**शीलः ॥ ५९ ॥

१० ## याज्ञवल्कीये ६० श्लोकः ।

मि. पृ. २०२ शुद्धिशब्दो लाक्षणिक इत्याह । **शुद्धिसेति** । **प्रयोगांगेत्यनेन** शुद्ध्यपेक्षा सूचिता । **नामेध्येति** तदुपहतिविषया नेत्यर्थः । **तदुपेति** अमेध्याद्युपहते त्वित्यर्थः । यदा भिक्षाचरणादिकं कर्म करिष्यमाणस्तदा तत्कर्मोपयुक्तमृद्दादिपात्राणि गोवालैरवघृष्य प्रक्षाल्य तत्कर्म कुर्यादिति तत्तात्पर्यम् । **अतैजसानि** अधातुमयानि ।

१५ "नाभिनंदेत मरणं नाभिनंदेत जीवितम् । कालमेव प्रतीक्षेत निर्वेशं भृत्यको यथा॥
"अभिवादांस्तितिक्षेत नावमन्येत कंचन । न चेमं देहमाश्रित्य वैरं कुर्वीत केनचित्" ॥ इत्यादि
**मानवे** ( ६।४५,४७ ) । स्पष्टम् । नियुक्तार्थलाभमाह । **चमसेति** । **प्रायोगिकी** तदंगभूता । तदंगत्वेन ततः पूर्वं क्रियमाणत्वेनैव प्रायोगिकत्वं । **मात्रया** यतिविषये किंचिल्लिख्यते । तत्र तावद्यतयश्चतुर्धा । कुटीचकबहूदकहंसपरमहंसभेदात् । तदुक्तं **विष्णुस्मृतौ**

२० "चतुर्धा भिक्षवेद् भिक्षां कुटीचकबहूदके । हंसः परमहंसश्च श्रेयश्चैषां यथोत्तरम् ॥
"एकदंडी भवेद्वाऽपि त्रिदंडी वाऽपि वा भवेत् । त्यक्त्वा सर्वसुखं स्वादं पुत्रैः स्वर्गसुखं रमेत् ॥
"अपत्येषु वसेन्नित्यं समस्त्वपकृतं त्यजेत् । नान्यद्गृहेषु भुञ्जीत भुंजानो दोषभाक् स्मृतः ॥
"कामं क्रोधं च लोभं च त्यजेद्वात्सल्यमेव च । कुटीचकस्त्यजेत्सर्वं पुत्रार्थं चैव सर्वतः ॥
"भिक्षाटनादिकं सर्वं यतिः पुत्रेषु सन्न्यसेत् । कुटीचक इति ज्ञेयः परिव्राजकबान्धवः ॥
२५ "त्रिदण्डो गुरवे चैव भिक्षाधारं तथैव च । सूत्रं तथैव गृह्णीयान्नित्यमेव समाहितः ॥
"प्राणायामेऽपि चरतो गायत्रीं सततो जपेत् । विश्वरूपं हरेन्नित्यं तथा च विजितेंद्रियः ॥
"इन्द्रियाणि मनश्चैव हर्षे हंसो विधीयते ।
"कृच्छ्रैश्चांद्रायणैश्चैव तुलापुरुषसंज्ञकैः । संतोषो यस्य देहेषु आकांक्षन् ब्रह्मणः पदम् ॥
"यज्ञोपवीतं दंडं च वस्त्रं यच्च निषेवते । अपां परिग्रहो नान्यो हंसस्य परिचोदनात् ॥
३० "आत्मा दृष्टसमायुक्तस्त्यक्तसर्वपरिग्रहः । चतुर्थोऽयं महान् तेषां धान्यभिक्षुरुदाहृतः ॥

---

१ ख-अन्यथा एककालभिक्षाचरणस्यैव द्विर्भोजननिषेधात् ।

"त्रिदंडं दंडिकाश्चैव सर्वाण्येककपालिकम्। जन्तूनां वरणं वस्त्रं सर्वं भिक्षुरिदं त्यजेत्॥
"कौपीनाच्छादनार्थं तु वासो भिक्षा परिग्रहम्। कुर्यात्परमहंसस्तु दंडमेकं च धारयेत्॥" इति
**हारीतश्च**
"कुटीचको बहूदको हंसश्चैव तृतीयकः। चतुर्थः परमो हंसो यो यः पश्चात्स उत्तमः॥"
तदुक्तं **निर्णयसिंधौ** ( पृ. ६९१ ) ५
"आद्यः पुत्रादिना कुटी कारयित्वा तत्र गृहे वा वसन्काषायवासाः शिखोपवीतत्रिदंडवान्बंधुषु स्वगृहे वा भुंजान् आत्मज्ञो भवेत्। एतदत्यंताशक्तपरम्। द्वितीयस्तु बन्धून्हित्वा सप्तागाराणि भैक्षं चरन्पूर्वोक्तवेषः स्यात्। हंसस्तु पूर्वोक्तवेषोऽप्येकदंडः "एकं तु वैणवं दंडं धारयेन्नित्यमादरादिति" **स्कान्दात्**। **विष्णुरपि**
"यज्ञोपवीतं दंडं च वस्त्रं जन्तुनिवारणम्। तावान्यपरिग्रहः प्रोक्तो नान्यो हंसपरिग्रहः॥" १०
चतुर्थोऽपि **स्कांदे**
"परमहंसस्त्रिदंडं च रज्जुं गोबालनिर्मिताम्। शिखां यज्ञोपवीतं च नित्यं कर्म परित्यजेत्"॥
अयमप्येकदंड एव। ये तु शिखोपवीतादित्यागनिषेधास्ते कुटीचकादिपराः। यत्तु **मेधातिथिः** "यावन्नरयुस्त्रयो दंडास्तावदेकेन वर्तयेदिति" तदपि तत्परमेव। **यच्चात्रिः** "चतुर्धा भिक्षवः प्रोक्ताः सर्वे चैव त्रिदंडिन" इति तद्वाग्दंडादिपरं न यष्टिपरं। १५
"वाग्दंडोऽथ मनोदंडः कर्मदंडस्तथैव च। यस्यैते नियता दंडाः स त्रिदण्डीति चोच्यते॥"
इति **मनूक्तेः** ( १२।१० )। तस्मात्परमहंसस्यैक एव दण्डः। सोऽप्यविदुषः। विदुषस्तु सोऽपि नास्ति। "न दण्डं न शिखां नाच्छादनं चरति परमहंसः" इति **महोपनिषदोक्तेः**। ज्ञानमेवास्य दंड इति वाक्यशेषाच्च। यत्तु **यमः**
"काष्ठदंडो धृतो येन शर्वाशी ज्ञानवर्जितः। स याति नरकान्घोरान्महारौरवसंज्ञितानिति॥" २०
तद्वैराग्यं विना जीवनार्थं संन्यासपरम्।
"एकदंडं समाश्रित्य जीवन्ति बहवो नराः। नरके रौरवे घोरे कर्मत्यागात्पतन्ति ते॥"
इति **स्मृतेः**। **यच्चाश्वमेधिके**
"एकदंडी त्रिदंडी वा शिखी मुंडित एव वा। काषायमात्रसारोऽपि यतिः पूज्यो युधिष्ठिरेति॥"
तस्यापि पूर्वोक्ता व्यवस्था ज्ञेयेति। २५

ननु भवत्वेवं चातुर्विध्यं। परंतु संन्यासपदार्थः क इति चेत्। अत्र **याज्ञवल्क्यः**(प्रा.५६)
"वनात् गृहाद्वा कृत्वेष्टिं सार्ववेदसदक्षिणम्। प्राजापत्यं तदंते तानग्नीनारोप्य चात्मनि॥
"अधीतवेदो जपकृत्पुत्रवानन्नदोऽग्निमान्। शक्त्या च यज्ञकृन्मोक्षे मनः कुर्यात्तु नान्यथा"॥
एतदाश्रमसमुच्चयपक्षे। **जाबालश्रुतौ** त्वन्येऽपि पक्षा उक्ताः "यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा। अथ पुनरव्रती व्रती वा स्नातकोऽस्नातको वोत्सन्नाग्निरनग्निको वा यदहरेव विरजेत्तदहरेव प्रव्रजेदिति"। **अंगिराः** ३०

"प्रव्रजेद्ब्रह्मचर्याद्वा प्रव्रजेच्च गृहादपि। वनाद्वा प्रव्रजेद्विद्वानातुरो वाऽथ दुःखितः॥" इति। आतुरो मुमूर्षुः। दुःखितश्चौरव्याघ्रादिभीतः। एवं च सर्वं त्यक्त्वाश्रमादनाश्रमाद्वाऽऽश्रमं गच्छामीति संकल्पप्रैषोच्चारणाभयदानानि मुख्यसंन्यासः। यथा चैतत्तथाऽस्पष्टमुपनिषदि। नांदी-

मुखादिदंडग्रहणांतः क्रियाकलापोऽस्यांगभूत एव । एवं चोक्तसंकल्पाद्यतिरिक्तं दंडग्रहणादि कृता-कृतं वेदितव्यम् । अत एवातुरस्य संकल्पादिमात्रात्फलं श्रूयते **जाबालोपनिषदि** । "यद्यातुरः स्यान्मनसा वाचा संन्यसेदेष पंथा ब्रह्मणहां नु वितस्तेनैति संन्यासी ब्रह्मविदित्येवमेवैष भगवन्निति।" अत्रातुरत्वेनोभयोः संग्रहः । **स्मृतिरपि**

५ "संन्यस्तमिति यो ब्रूयात्प्राणैः कंठगतैरपि । स भित्वा मंडलं भानोः परं ब्रह्माधिगच्छति ॥"

**अत्रिर्भारते**

"आतुराणां च संन्यासे न विधिर्नैव च क्रिया । प्रैषमात्रं समुच्चार्य संन्यासं तत्र पूरयेत्" ॥इति ।

**दत्तात्रेयः**

"उत्पन्ने संकटे घोरे चोरव्याघ्रादिगोचरे । भयभीतस्य संन्यासमंगिरा मुनिरब्रवीत् ॥"

१० **स्मृतिरपि**

"आतुराणां विशेषोऽस्ति न विधिर्नैव च क्रिया । प्रैषमात्रस्तु संन्यास आतुराणां विधीयते ॥

"आपत्काले च संन्यासः कर्तव्य इति शिष्यते । जरया हि परीतेन शत्रुभिर्व्याधितेन च ॥

"संन्यस्तोऽहमिति ब्रूयात्सर्वेषु त्रिषु क्रमात् । त्रीन्वारांश्च त्रिलोकात्मा शुभाशुभविशुद्धये ॥

"यत्किंचित् बाधकं कर्म कृतमज्ञानतो मया । प्रमादालस्यदोषाद्यत्तत्सर्वं संत्यजाम्यहम् ॥

१५ "एवं संत्यज्य भूतेभ्यो दद्यादनयदक्षिणाम् ।

"पद्भ्यां कराभ्यां विहरन्नाहं वाक्कायमानसैः। करिष्ये प्राणिनां हिंसां प्राणिनः संतु निर्भयाः॥" इति।

**अंगिराः**

"षष्टिं कुलान्यतीतानि षष्टिमागामि कानि च । कुलान्युद्धरते प्राज्ञः संन्यस्तमिति यो वदेत् ॥

"एकरात्रोषितस्यापि यतेर्या गतिरुच्यते । न सा शक्या गृहस्थेन प्राप्तुं क्रतुशतैरपि ॥

२० "संन्यस्तमिति यो ब्रूयात्प्राणैः कंठगतैरपि । न तत्क्रतुशतेनापि प्राप्तुं शक्नोति मानवः ॥ "

**कपिलः**

"संन्यस्तमिति । सोक्षेपाल्लभते लोकान्पुनर्जन्म न विद्यते" । **मनुः** ( ६।३९ )

यो दत्वा सर्वभूतेभ्यः प्रव्रजत्यभयं गृहात् । तस्य तेजोमया लोका भवंति ब्रह्मवादिनः ॥" इति ।

अत्रमात्रचापद्यविलंबित आतुरस्तदा प्रैषोच्चारणमेव कार्यं न संकल्पाभयदानेऽपीति सूचि-

२५ तम् । एवं च स एव मुख्यसंन्यासः । अन्यत्तु यथासंभवं कार्यं । एवं चाहिताग्निनाऽपि ईदृशे विषये एवमेव कार्यम् । अन्यदा तु प्रायश्चित्तेष्टिं तत्स्थाने पूर्णाहुतिं वा कृत्वा तत् कार्यं । ततोऽन्यथाकरणे तु भयभ्रष्टः पतितो भवेत् इत्यादि स्पष्टमन्यत्र ।

अथ **तत्संस्कारः स्मृत्यर्थसारे**

"सर्वसंगनिवृत्तस्य ध्यानयोगरतस्य च । न तस्य दहनं कार्यं नाशौचं नोदकक्रिया ॥ "

३० **पुलस्त्यः**

"कुटीचकं तु प्रदहेत्पूरयेत्तु बहूदकम् । हंसं जले विनिक्षिप्य परहंसं प्रकारयेत् ॥

"सपिंडनादि नैवैषां सर्वेषां स्मृतिशासनात् । अहन्येकादशे प्राप्ते पार्वणं श्राद्धमाचरेत् ॥"

अन्यत्र

"संन्यस्तानां मृते देहे नाशौचं नोदकक्रिया । पदे पदेऽश्वमेधस्य वाहकस्य फलं भवेत् ॥

"विष्णुबुध्या परित्यज्य स्नात्वा गच्छेद्गृहं ततः । आशौचबुद्ध्या स्नातश्चेदिक्षुर्यत्र व्रजेन्नरः"॥ इति।

**वसिष्ठः**

"चतुर्विधानं भिक्षूणां ज्ञातिबंधुसुतादिभिः । एकादशेऽन्हि कर्तव्यं श्राद्धं तेषां तु पार्वणम् ॥
"एकोद्दिष्टं जलं पिंडमाशौचं प्रेतसत्क्रियाम् । न कुर्यात्पार्वणादन्यद् ब्रह्मीभूतपरिव्रजे ॥"

**सुमंतुः** ५

"मासिकं नैव कुर्वीत सपिंडीकरणं न च । औरसः क्षेत्रजो वाऽपि भ्राता वा तत्सुतोऽपि वा ।
"कुर्यात्तु पार्वणं श्राद्धं शिष्यांतेवासिभूमिपाः । पिंडयज्ञं सुतः कुर्याद्दर्शश्राद्धं मृतेऽहनि ॥
"यतेर्महालये दर्शे तस्य वा मृतिवासरे । पार्वणं त्वितरेषां तु एकोद्दिष्टं तु वा भवेत् ॥"

**स्कान्दे**

"चतुर्थमाश्रमं गच्छेद् ब्रह्मविद्यापरायणः । एकदंडी त्रिदंडी वा सर्वसंगविवर्जितः ॥ १०
"एकादशेऽह्नि संप्राप्ते यद्वा तु द्वादशेऽहनि । पार्वणेन विधानेन श्राद्धं कुर्यात्तदौरसः ॥
"नारायणबलिं कृत्वा पार्वणं श्राद्धमाचरेत् ।
"प्रत्यब्दे दार्शिकश्राद्धे तीर्थेष्वपि महालये । संबंधनामगोत्रेण श्राद्धकालेषु नित्यशः॥" इति।

**यमः**

"दंडग्रहणमात्रेण प्रेतत्वं नैव जायते । प्रेतत्वस्य विमोक्षार्थं षोडशश्राद्धिको विधिः ॥ १५
"पिंडोदकं न चान्नादि क्षुत्तृष्णाविनिवृत्तये । सपिंडीकरणश्राद्धं पितृत्वप्राप्तये विधिः ॥
"अवस्थात्रयहानानां यतीनां द्वादशेऽहनि । श्राद्धाधिकारसिध्यर्थं पार्वणं तु सुतश्चरेत् ॥"

नामगोत्रसंबंधरूपावस्थात्रयप्रच्युतानां यतीनां पूर्वसंबंधनामगोत्रोल्लेखेन क्रियमाणप्रत्यब्द-दर्शादिश्राद्धेषूद्देश्यत्वसिध्यर्थमित्यर्थः । **शातातपः**

"एकोद्दिष्टं जलं पिंडमाशौचं प्रेतसत्क्रियाः । न कुर्यात्पार्वणादन्यद् ब्रह्मीभूताय भिक्षवे ॥" इति । २०

**उशनाः**

"एकोद्दिष्टं न कुर्वीत यतीनां चैव सर्वदा । अहन्येकादशे प्राप्ते पार्वणं तु विधीयते ॥
"सपिंडीकरणं तेषां न कर्तव्यं सुतादिभिः । त्रिदंडग्रहणादेव प्रेतत्वं नैव जायते ॥"

**प्रचेताः**

"एकोद्दिष्टं यतेर्नास्ति त्रिदंडग्रहणादिह । सपिंडीकरणाभावात्पार्वणं तस्य सर्वदेति ॥" २५

एवं च कुटीचकस्य दाहेऽपि तीर्थे भस्मास्थिप्रक्षेपांतं कार्यं नाग्रे उक्तहेतोरिति स्पष्टं **निर्णयसिंधौ**।

नन्वेवं भवतु उक्तस्थले उक्तवचनैस्तथा आतुरस्थले तु दाहादिसर्वं स्यात् । वचना-भावात् । अत एव दंडग्रहणात्पूर्वं मृते तु दाहादिसपिंडनांतं सर्वं विधिना कार्यमेवेति **नारायण-भट्टोक्तिस्तथा निर्णयसिंधूक्तिश्च** संगच्छते इति चेन्न । तथा सति तत्प्रतिपादकफलबोधक-प्रागुक्तसकलवचनानर्थक्यापत्तेः । अत एव दंडग्रहणादेव त्रिदंडग्रहणादेवेति उपलक्षणं प्रैषो- ३०
च्चारणस्य । अत एवैवमात्रपदयोः सार्थक्यं मिथोऽविरोधश्च । अन्यथा दंडग्रहणस्य सर्वांतत्त्वा-त्तदानर्थक्यं वचनयोर्मिथोविरोधश्च स्पष्ट एव । एतदभिप्रायैव **नारायणभट्टाद्युक्तिः । पौनरुक्त्यं**

तु न । उपसंहारपरत्वात् । अत एव संन्यासिनां तत्र कार्यमसंन्यासिनां तु तन्नियमेन कार्यं पुत्रादिभिः । प्रेतत्वविमोक्षार्थत्वात् । विपक्षे बाधकश्रवणाच्च । तथाहि

"यस्यैतानि न दत्तानि प्रेतश्राद्धानि षोडश । पिशाचत्वं स्थितं तस्य दत्तैः क्रतुशतैरपि ॥" इति **विज्ञानेश्वरा**युक्तिः संगच्छते । अत एव शिष्टसमाचरोऽप्यनुगृहीतो भवतीति दिक् ॥ ६० ॥

५

## याज्ञवल्कीये ६१ श्लोकः ।

उत्तरप्रकरणसंगत्यर्थमाहै**वमिति** । एवं कुर्वतः फलं कथयन्नित्यादिः । **आत्मैपेति** । वक्ष्यमाणेत्यादिः । निरोधस्य सावधिकत्वादाह । **रूपादीति** । वक्ष्यमाणमाह । **द्वैतेतिं** ॥ ६१ ॥

## याज्ञवल्कीये ६२ श्लोकः ।

**किंचेति** । अन्यमपि नियमविशेषमाहेत्यर्थः । एवमग्रेऽपि बोध्यम् । योगशास्त्रपरिभाषया

१० **आशयोंऽ**तःकरणम् । तच्छुद्धेर्बीजमाह । **विषयेति** । साकांक्षत्वादाह । **प्राणेति** । **तस्याः** फलमाह । **तस्या इति** । ज्ञानं न यत्किंचिदित्याह । **आत्मेति** । ज्ञानस्योत्पत्तिं प्रतिनिमित्तत्वादित्यर्थः । ननु न तावन्मात्रेण ज्ञानोत्पत्तिर्दृश्यते अत उक्तं । **स्वातंत्र्येति** । स्वातंत्र्यं न प्रवृत्तिविषयविरोधादित्याह । **एवं सतीति** । अंतःकरणशुद्धौ सत्यामित्यर्थः । **सक्तीति** । सक्तिश्च **तज्जन्यदोषाश्च** । तदात्मकेत्यर्थः । **भिक्षुकेण** यतिना । **विशेषत** इत्यनेन.धर्मादिप्रधानाना-

१५ मन्येषामपि तत्सत्ता सूचिता । **ध्मायेति** । अग्निसंयुक्तानामित्यर्थः । **दोषा** विप्रपदर्शनप्रीत्यादयः ॥ ६२ ॥

## याज्ञवल्कीये ६३।६४ श्लोकौ ।

संगतिमाहेंद्रि**येति** । **वैराग्येति** । इंद्रियनिरोधार्थमित्यर्थः । **आदिना** विहिताकरणादि । अवेक्ष्या इत्यस्याग्रेऽप्यनुषंगो यथासंभवम् । **अविद्यादयो** व्याख्याताः प्रारंभे । **अभीति**

२० तेनाक्रमणरूप इत्यर्थः । अयं जरापदार्थः सहस्रशब्दोऽनंतपर इत्याह । **तथा श्वेति** । **प्रियेति** व्याचष्टे । **तथेति** । तात्पर्यार्थमाहेत्यादीति । अनेन मूलमुपलक्षणमिति सूचितं ।

तस्याप्यर्थमाहाऽऽ**त्मैकेति** । **तस्या एव** । चित्तवृत्तेरेव । एवं च ध्यानरूपो योग

मि. पृ. २०३ इत्यर्थस्तदाह । **निहीति** । **आदिनें**द्रियादिपरिग्रहः । **क्षेत्रज्ञः** जीवः । वाक्यार्थस्यात्र कर्मत्वमित्याह । **इत्येवमिति** । अत एव निदिध्यासनस्य दर्शनसाध्यत्वादेव ।

२५ **इतीति** । इति विहितेत्यर्थः । पुरोवर्तित्वादेव तस्य तत्त्वमिति भावः ॥ ६३ ॥ ६४ ॥

## याज्ञवल्कीये ६५ श्लोकः ।

**प्राक्तनेति** । अव्यवहितेत्यादिः । **हेरर्थो यस्मादिति** । तदर्थोऽसाविति । तात्पर्यार्थमाह । **यातीति** । **अत** इत्यपरार्थस्तस्मादिति । अविरोधायाह । **अनेनेति** । पद्येनेत्यर्थः । आपेति तत्कारकत्वेनेत्यर्थ । **तस्यापि** । आश्रमस्यापि । मूलार्थे संमतिमाह । **तदुक्तमिति** ।

३० **दूषितोऽपि**[1] कटकाद्याभरणैः । **धर्मं** यतेर्यद्विहितमात्मोपासनादि तच्चरेत् । यत्र तत्र कुत्र-

---

१ इदमसमीचीनम् । दूषितोऽपि आश्रमाविरुद्धाचारदूषितोपि इति युक्तम् । भूषित इति पाठस्य सर्वा विरुद्धत्वात् ।

चिदाश्रमविहितमपि धर्मं चरेत् त्रिदंडादिलिंगधारणमात्रेणात्मानं कृतिनं न मन्येतापि तु 'समः सर्वेषु भूतेषु स्यात्' । रागद्वेषादिपरिहरेदित्यर्थः ॥ ६५ ॥

## याज्ञवल्कीये ६६ श्लोकः।

अनपकारिण्यसंभवादेवाहापेति । **आदिना** शरीरं । **प्रचेति** प्रचलितमुद्विग्नं यच्चित्तं तस्येत्यर्थः । संयतेंद्रियतायाः पृथगुक्तेराह । **मदेति** । प्रतिषिद्धे प्रतिषेधादेवाप्रवृत्तिरित आह । ५ **अप्रतीति** । अयं सर्वः प्रागुक्तो धर्म एव धर्मसाधनत्वादुदाहृतः । शास्त्रे कथित इत्यर्थः । तात्पर्यार्थमाहैतैरिति । तस्यापि तात्पर्यमाह । **अनेनेति** । धारणरूपं यद्बाह्यलक्षणं तस्मादित्यर्थः ॥ ६६ ॥

## याज्ञवल्कीये ६७ श्लोकः।

तत्त्वे बीजमाहाऽऽत्मेति । नेदं परमार्थत इत्याह । **यद्यपीति** । अस्य श्लोकस्य प्रधानांशोपपादकत्वसंभवे प्रधानांशमात्रोपपादकत्वं न युक्तमत आह । **यद्वेति**। **क्षेत्रज्ञेति** । १०
मि. पृ. २०४. जीवानामित्यर्थः । नन्वेवं वेदानुपपादनात्कथं दृष्टांतसंगतिरित आह । **तैजसस्येति** । ॥ ६७ ॥

## याज्ञवल्कीये ६८ श्लोकः।

कर्मवशादियुक्तमत्युक्तमिति शंकते । **ननु चेति** । **क्रियाभाव** इत्यत्राकारप्रश्लेषः । **धर्मेति** । तयोरध्यवसायो निश्चयस्तदात्मकमित्यर्थः । नन्वेवमपि तदनुपयोग्येवात आह । **तस्य** १५ **चेति** । उत्क्रमानसकर्मण इत्यर्थः । **विशिष्टेति** । विजातीयेत्यर्थः । वाक्यार्थमाहैवमिति । समस्तं तत्र जन्मनीत्यादिः । आत्मेत्यंतं । स्वर्थमाहैवेति । तस्य व्याख्यान्वयेति । तस्यैव विवरणं **स्तन्येति** । तर्हि कथं प्रवृत्तिरित आह । **प्रागिति** । **भाविता** निष्पादिता । **अनुभाव** उद्बोधः । धर्मश्चाधर्मश्च तदुभयं च तद्रूपमित्यर्थः । चरमे संमतिमाह । **तथा चेति** । उपसंहरति । **एवमिति** । ॥ ६८ ॥ २०

## याज्ञवल्कीये ६९ श्लोकः।

**एवं सति** । तत एवप्रभवे सति । **कथंचिदुपाधितः** । **तस्य च ब्रह्मणः** । **इति** । इत्यादि । **सत्यमिति** । अजातेऽस्यान्वयः । तदुक्तानुवादस्तावानग्रे समाधिः । **प्रपंचो** विस्तारः । **निमित्त**शब्दः कारणमात्रपर इत्याह । **अविद्येति** । तत्तात्पर्यमाह । **न पुनरिति** । तत्राग्रिमं हेतुगर्भमित्याह । **यस्मादिति** । अग्रेऽप्येवमेवेत्याह । **नन्वित्यादिना** । मोहरूपस्य विकारस्य। २५ [illegible] । यत इत्यादिः । एतेन सांख्यमतनिरासः । अग्रेऽप्येवमित्याह । **यस्मादिति** । आदिना कर्मपरिग्रहः । एवमन्वयमुखेनोक्तदार्ढ्याय व्यतिरेकमुखेनाह । **न ह्यति** । उपसंहरति । **तस्मादिति** । बृहबृहि वृद्धौ । नन्वेमप्यगुणस्य कथं कर्तृत्वमत आह । **न चेति** । **एतावता** तच्छक्तिसंबंधावश्यकत्वेन । **तादृगिति** तस्यास्तादृक् रूपत्वे इत्यर्थः । **वचनीयं** वाच्यम् । प्रागुक्तमुपसंहरति । **तस्मादिति** । पूर्वपक्षस्यैवानुवादः । **अत इति** । समाधत्ते । ३०
मि. पृ. २०५. **तथापीति** । ननु तदेव कथमित्यत आह । **शरीरेति** । **सर्गादावि**त्यस्यार्थः ॥ ६९ ॥

## याज्ञवल्कीये ७० श्लोकः।

सृष्टीति। भवन्निति। अवस्थांतरयोगितयेति भावः। तान् आकाशादीन्। अत्राकाशादिक्रमो गुणानुरोधेनोक्तः। श्रुतिरप्येवम् "एतस्मादात्मन आकाशः संभूत" इति॥ ७०॥

## याज्ञवल्कीये ७१ श्लोकः।

५ साकांक्षत्वादाह। यजेति। आहुतौ कर्मणि क्तिनित्याह। पुरोडेति। रसादिति सूर्यविशेषणम्। अथेत्यस्यार्थस्तत इति। तच्च औषधिरूपं च। अन्यथा असंभवादाह। सेवीति। साक्षादप्यसंभवादाह। रसेति। शुक्रग्रहणमुपलक्षणमित्याह। शुक्रेति॥ ७१॥

## याज्ञवल्कीये ७२ श्लोकः।

शंकाया एतावता समाधेराह। तत इति। इत्याह। इत्यत आह। अन्यदा निषेधाद-
१० संभवाच्चाह। ऋत्विति। संयोगे सतीति शेषः। एवमग्रेऽपि। समाहारद्वंद्वमाह। शुक्रं चेति। एतेन द्विवचनमित्यपास्तमनन्वयापत्तेः। संयोग इत्यस्यात्रापि कर्मयत्रंततयाऽन्वय इत्याह। परस्परेति। अबीजानि दुष्टानि। अन्वयायाह। स्थित्वेति। अभिसृष्टं मिश्रितम्। भूतात्मा प्रागुक्तः। तस्य स्थिरत्वादाह। वायुनेति॥ ७२॥

## याज्ञवल्कीये ७३। ७४ श्लोकौ।

१५ उभयेति। इंद्रियद्वयेत्यर्थः। हृत्स्थ एवात्र नेत्याह। प्राण इति। वृत्तीति। तत्तत्स्थाने इति भावः। तस्यानादेरित्यस्य क्रमेणार्थद्वयं आत्मजानितं आत्मीयजनितं तदाह। प्रागिति॥ ७३॥ ७४॥

मि. पृ. २०६

## याज्ञवल्कीये ७५ श्लोकः।

अनुवृत्त्या आह। असाविति। एवव्यवच्छेद्यमाह। न कठीति। ननु कारणाभावात्कथं
२० तत्वमत आह। अयमिति। भूतजातं भूतसमूहरूपम्॥ ७५॥

## याज्ञवल्कीये ७६। ७७। ७८ श्लोकैः।

शीतं जलम्। उष्णमग्निः। तस्याप्यर्थं विवक्षितमाह। सूक्ष्मेक्षीति। आदिग्राह्ये मानमाह। आकाशादिति। करणल्युटा आह। स्पर्शेंद्रियमिति। एवमग्रेऽपि। तयोः समानधर्मत्वे प्रकृतोपयोगिनमाह। तेजस इति। चार्थतुसंग्राह्यमाह। तथेति। तत्र मानमाह। शौर्येति।
२५ स्वस्मिन् शैत्यासंभवादाह। अंगानामिति। तृतीये इति पूर्वान्वयि। अजत्वं च वास्तवमित्याह। सर्वमिति। तदर्थमाहैतदिति। प्रागुक्तमित्यर्थः। तत इत्यस्य व्याख्या चतुर्थे इति॥ ७६॥ ७७॥ ७८॥

## याज्ञवल्कीये ७९ श्लोकः।

मि. पृ. २०० दोषमेवाह। वैरूप्यमिति। तद्दौहृदमिति। तत्रार्थे दौहृदशब्दः। पृषो-
३० दरादित्वात्साधुः। चामुंडावत् दोषो न भिन्न इत्याह। विरूपेति। "तस्मादि"त्यस्यार्थस्तदोषेति। उपलक्षणमिदमित्याह। गर्भेति। प्रसंगादन्यदप्याह। तथेति। व्यवायो मैथुनम्। अतितर्पणम्। अतिभोजनादि। वेगौ मूत्रपुरीषादिः। कुक्कुटासनम्। द्वाभ्यां पादाभ्यामेवाव-

१ ब्रह्मवल्ल्यां १।६

स्थानम् । तत्रैव सुश्रुते एव । अनुबंधो मेलनम् ॥ ७९ ॥ ८० ॥

## याज्ञवल्कीये ८१ श्लोकः।

पूर्वत्र वायुः साधारणो धातुभिन्नः ॥ ८१ ॥

## याज्ञवल्कीये ८२ श्लोकः।

धात्रीं मातरम् । पुनरिति वीप्सा । गर्भमित्याह । पुनरिति । प्रार्थमाह । शीघ्र- ५
मिति ॥ ८२ ॥

## याज्ञवल्कीये ८३ श्लोकः।

मि. पृ. २०८ यंत्रपदार्थमाह । स्नाय्वस्थीति । ज्वर उपलक्षणमित्याह । दुःसहेति । तदनंतरं मनूक्तमाह । अतीति । दशे पटले ॥ ८३ ॥

## याज्ञवल्कीये ८४ श्लोकः। १०

शिखी वह्निः । स एव रक्तरूप एव । ननु एवं ततः प्राक्तनान्नरसेनापि प्रकारांतरत्वापत्तिरत आह । अन्नेति । भेदाभावादाहरंभेति । मुख्यमत्र न त्वक्त्वमित्याह । त्वगिवेति । उत्तमांगं शिरः । गात्रमवशिष्टं शरीरम् । तस्य स्वरूपज्ञानायाहोपरीति ॥ ८४ ॥

## याज्ञवल्कीये ८५ श्लोकः।

तामेव षट्श्लोकीमाह । स्थालैरित्यादि । नखमस्त्रियाम् । चेन संख्यासमुच्चय इत्याह । १५ विंशतिरेवेति । तेषामित्यत्रैकशेषेण द्वयोरपि ग्रहणमित्याह । नखानामिति । यथोक्तमुपसंहरति । इत्येवमिति ॥ ८५ ॥

## याज्ञवल्कीये ८६ श्लोकः।

अस्थिविशेषणत्वात् षष्ठीत्यत्र नपुंसकत्वम् । अरत्निकेत्यत्र प्रमाणे कनित्याह । बाह्वोरिति ॥ ८६ ॥ २०

## याज्ञवल्कीये ८७ श्लोकः।

मि. पृ. २०९ समुद्गवे इति द्विवचनांतमस्थिविशेषणम् । अग्रे समाहारद्वंद्वेन द्वयं सप्तम्यन्तम् ॥ ८७ ॥

## याज्ञवल्कीये ८८।८९ श्लोकौ।

अर्बुदशब्दो नात्रसंख्यापर इत्याह । अस्थीति । मध्येति बहुव्रीहिः ॥ ८८ ॥ ८९ ॥ २५

## याज्ञवल्कीये ९० श्लोकः।

उपसंहरति पूर्वोक्तैरिति ॥ ९० ॥

## याज्ञवल्कीये ९१ श्लोकः।

शरीरस्वरूपकथनानंतरं तत्रैवाकांक्षया विषयाश्चक्षुरादीनि चोच्यंते इत्याह । सवीति । उक्तार्थभावे बीजमाह । विषया इति । अवधेः शेषत्वविवक्षया षष्ठीत्याहेत्यस्येति । इंद्रियाणामतींद्रियत्वेन तत्सत्वेऽनुमानं प्रमाणमाहैतैश्चेति । अत एव तानुक्त्वै वैतान्युक्तानि । तत्र संबंधमाह । बोध्यत्वेनेति । संवित् ज्ञानम् ॥ ९१ ॥ ३०

## याज्ञवल्कीये ९२ श्लोकः ।

मि. पृ. २१०. **पादौ चेति** प्रसिद्धावित्यर्थः । तत्सत्वे मानमाह । **युगपदिति** ॥ ९२ ॥

## याज्ञवल्कीये ९३ श्लोकः ।

**समानेति** । समाननाम्नोऽपीत्यर्थः । अपिनाऽन्यस्य सर्वस्य समुच्चयः । एतेनैतेषां प्राणा-५ यतनत्वेपानादीनामच्छेदापत्तिरित्यपास्तम् ॥ ९३ ॥

## याज्ञवल्कीये ९४ श्लोकः ।

लाघवार्थं व्युत्क्रमेण व्याचष्टे । **नाभिरित्यादि** । तौ अवहननप्लीहाख्यौ । **अत एव** तद्वि-वरणादेव । एतेन पौनरुक्त्यं परिहृतम् ॥ ९४ ॥ ९५ ॥

## याज्ञवल्कीये ९६-९७-९८-९९ श्लोकाः ।

१० **मुष्कौ** अंडौ ।

"**अवटः**स्यात् बिले गर्ते कूपे कुहकजीविनि। अवटुः कथिता घाटा कूपगर्तेषु सूरिभिरिति" **विश्वः**। **वर्णशब्द** आच्छदकपर इत्याह। **यद्वेति**। **शरीरके**। कुत्सिते कनित्याशयेनाह। **कुत्सित इति**। पदार्थोक्त्यनंतरं वाक्यार्थमाहैवमिति। तान्येवेति व्याचष्टे। **तथेति**॥९६॥९७॥९८॥९९॥

## याज्ञवल्कीये १०० श्लोकः ।

१५ नन्वेवं कथं तत्वमत आह । **नानेति** ॥ १०० ॥

## याज्ञवल्कीये १०१ श्लोकः ।

जानीतेत्युक्तेराह । **हे सामेति** ॥ १०१ ॥

## याज्ञवल्कीये १०२ श्लोकः ।

अस्थ्नामिति शेषस्य फलमाह । **स्नाय्विति** । आदिना रोमादिपरिग्रहः ॥ १०२ ॥

२० 
## याज्ञवल्कीये १०३-१०४ श्लोकौ ।

केवलानामसंभवादाह । **पूर्वोदितेति** । **स्वेदायनै**रित्यस्यार्थः । **स्वेदेति** । संस्थिते भावे मि. पृ. २१२. क्त इत्याह । **संस्थानेति** । एकार्थमाह । **महान्तीति** । तात्पर्यार्थमाह । **अत इति** ॥ १०३ ॥ १०४ ॥

## याज्ञवल्कीये १०५-१०६-१०७ श्लोकाः ।

२५ अविरोधायाहै**तच्चेति** । इतीत्यस्य व्याख्याद्वयं एतदर्थमाह। **शुचीति** । शेषमाह । **बुद्धिरिति** । एवमग्रेऽपि । अत एव शरीरकं । अंतः मांसादि तद्रक्षणार्थं समागतान्श्वादेरित्या-थर्यः । तात्पर्यार्थमाह । **तस्मादिति** ॥ १०५ ॥ १०६ ॥ १०७ ॥

## याज्ञवल्कीये १०८-१०९ श्लोकौ ।

अत एवौचित्यादाह्**ोपेति** । अभिः सर्वतोभावे । तदाह **कवंवेति** । **न्यूनतां** निराचष्टे

---

१ ख-पाद्मनादीनां ।

मि. पृ. २१३. **अपरा इति** । ततोऽन्या इत्यर्थः । सामान्यदीपस्य तत्वासंभवादाह । **निवातेति** । तस्य न सामान्यतः ज्ञानमुपयोगीत्याहैव**मिति** । पूर्वोक्तत्वात्तच्छब्देन तथैव परामर्श इति भावः । तत्राग्रिमं हेतुरित्याह । **यत इति** । चार्थतुसूचितमाहा**मृतत्वं चेति** ॥ १०८ ॥ १०९ ॥

## याज्ञवल्कीये ११० श्लोकः ।

योगमित्यस्यार्थमाह । **चित्तेति** ॥ ११० ॥

## याज्ञवल्कीये १११ श्लोकः ।

तत्स्वरूपं दाढर्यायानुवदति । **योऽसाविति** । दृष्टांतसूचितमाहै**तदेवेति** ॥ १११ ॥

## याज्ञवल्कीये ११२ श्लोकः ।

यथाविधानेनेत्येकपदस्यार्थमाह । **स्वाध्येति** । गायमिति भिन्नं पदं तदर्थमाह । **गानमिति** । कर्मणि ल्युट् । तदेवाह । **साम्न इति** । तदभ्यासेति न तत्प्राप्तौ हेतुरित्याह । **तत्रेति** । शब्दब्रह्मोपासने इत्यर्थः । **तदुक्तमिति** । **वैष्णवे** इति भावः । "द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत्" इत्यस्य पूर्वार्द्धः । एतन्मूलभूता **श्रुतिरपि मुंडके** प्रसिद्धा ( १।४ ) "द्वे विद्ये वेदितव्ये इति ह स्म यत् ब्रह्मविदो वदंति परा चैवापरा चैवेत्यादि" ॥ ११२ ॥

## याज्ञवल्कीये ११३-११४-११५ श्लोकाः ॥

**तासु** उभयरूपासु प्रसिद्धतालस्वरग्रहणमनुपयोगादित्याह । **ताल इति** । नन्वेवं कथमप्रयासोऽत आह । **तालादीति** । तथा नञल्पार्थक इत्याह । **अल्पेति** । ॥ ११३ ॥ ११४ ॥ ११५ ॥

मि. पृ. २१४.

## याज्ञवल्कीये ११६ श्लोकः ।

अनुचरत्वं न यथाकथंचित् तेनैव सहेत्युक्तेरत आह । **सचिव इति** ॥ ११६ ॥

## याज्ञवल्कीये ११७ श्लोकः ।

अनादित्वे हेतुमाह । **प्रागुक्तेति** । कुत्रेत्याशंकायामाह । **अज इति** । जीवात्माऽत्र नेत्याह । **परेति** । अग्रे जगत् न प्रागुक्तमित्याह । **तदुदिति** । अत्रात्मा जीव एवेत्याह । **जीवानामिति** । स्वतस्तत्वाभावादाह । **स्थूलेति** । बहुव्रीहिः । केनेत्याशंकायामाह । **सर्गादाविति** ॥ ११७ ॥

## याज्ञवल्कीये ११८ श्लोकः ।

अग्रिमसर्वावतरणमाह । **एतदेवेति** ॥ ११८ ॥

## याज्ञवल्कीये ११९-१२० श्लोकौ ।

**मुनिभिः** सामश्रवःप्रभृतिभिः । **आह** । **योगीति** शेषः । इत्यर्थमाह । **तद्ब्रुवतीति** । प्रसिद्धिरिति भावः । सहस्रशब्दोऽनंतपर इत्याह । **अनेकेति** । तत्साहचर्यादेवाह । **अनेनेति** । अत एवाह । **बह्विति** । कं मस्तकम् । ननु तस्य *निरवतवत्वात्कथमिदमत आह । **एतच्चेति** । इत्यर्थमाह।

* एवं मूले ।

**यत इति** । अत्राग्निमं हेतुरित्याह । **यस्मादसौ** इत्यस्यार्थः । **असाविति** । विराजो ब्रह्मणः पुरोडाशाद्यन्नात्मकं यद्रूपं तेनेत्यर्थः ॥ ११९ ॥ १२० ॥

## याज्ञवल्कीये १२१।१२२।१२३।१२४ श्लोकाः ।

द्रव्यदेवतयोस्त्याग इति नार्थ इत्याह । **द्रव्यस्येति** । त्यागात्संभूतत्वं नार्थ इत्याह । **य** ५ **इति** । **उत्तम** इत्यस्यार्थः **सकलेति** । **समर्थः** सम्यगिति । अनिष्टनिरासायाह । **अभीति** । योग्यतया शेषमाह । **प्रेर्येति** । तत इत्यस्यार्थः । **शशीति** । सौरं धामेत्यस्यार्थो **भान्विति** । **विहितमित्यस्य** तैः । योषितमित्यर्थे श्रुतिविरोधोऽत आह । **सैषेति** । सूर्यमंडलरूपेत्यर्थः । **ततः** तन्मयात् । अमृतपदार्थो **रसमिति** । उत्तमत्वमेवाह । **यदिति** । धातूनामनेकार्थत्वाद्गत्यर्थकत्वेनाह । **चरेति** । कर्तरि ल्युडिति भावः । जन्मेत्यस्य लक्ष्यार्थमाह । **जननेति** । तस्मादित्यस्यार्थो १० **वृष्टीति** । **भंग्या** रीत्या । अनाद्यंतमित्यस्यार्थः । **प्रवाहेति** । उक्तप्रश्नोत्तरमुपसंहरति । **इत्यनेनेति** ॥ १२१ ॥ १२२ ॥ १२३ ॥ १२४ ॥

## याज्ञवल्कीये १२५ श्लोकः ।

तत्र च जगदुत्पत्तौ अनादिरात्मेति हेतुगर्भमित्याह । **यद्यपीति** । अंतरेत्यस्य व्याख्या । मि॰ पृ॰ २१६ **शरीरेति** । योग्यतया आह । **शरीति** । तदर्थमाह । **भोगेति** । शरीरे १५ इत्यर्थः । समाधिमुपसंहरति । **तस्येति** । समवायस्येत्यर्थः ॥ १२५ ॥

## याज्ञवल्कीये १२६।१२७।१२८ श्लोकाः ।

स्वतस्तत्वासंभवादाह । **सकलेति** । अत एव सहस्रपद्मनेकपरमित्याह । **बह्विति** । तस्यानादित्वादाह । **तथा सकलेति** । व इत्यस्य व्याख्या युष्माकमिति ॥ १२६ ॥ १२७ ॥ ॥ १२८ ॥

२०

## याज्ञवल्कीये १२९ श्लोकः ।

**अत्रेति** । सामश्रवःप्रभृतय इत्यर्थः । एवमित्यस्यार्थ **आत्मैवेति** । आदिना प्रपंचः ॥ ॥ १२९ ॥

## याज्ञवल्कीये १३० श्लोकः ।

मि॰ पृ॰ २१७ शंकोत्तरमाह । **किंचेति** । **तथा** पूर्ववत् । पूर्वपक्षमुपसंहरति । **तस्मादिति** २५ ॥ १३० ॥

## याज्ञवल्कीये १३१ श्लोकः ।

**तत्र** तयोर्मध्ये । भवेत्यस्योत्पत्तेः स्थानानां शतानीत्यर्थः । शतशब्दोऽनंतपरस्तदाह । **जन्मेति** ॥ १३१ ॥

## याज्ञवल्कीये १३२ श्लोकः ।

३० **किंचेति** । उक्तमुत्तरं पोषयतीत्यर्थः । सत्वेति । इतराभिभवपूर्वकं स्वावस्थानमित्यर्थः । **तत्कार्याणि** । भावकार्याणि ॥ १३२ ॥

## याज्ञवल्कीये १३३ श्लोकः।

**प्रेत्य** मृत्वा। तत्फलितमाह। **देहान्तरे इति**। **आदिना** "शुष्यत्सस्यसंजीवनकामः कारीर्या यजेतेति" हि विधिः। वृष्टिस्तु तन्मूर्त्याद्युक्ता "चित्रया यजेत पशुकामः"। **अत्र च**। अत्र तुतदर्थमाह। **कर्मणामिति**। प्रयोजनशब्दः कर्तृल्युट्प्रत्ययांत इत्याह। **प्रयोजकेति** ॥१३३॥

## याज्ञवल्कीये १३४ श्लोकः।

तेषामन्यथाध्यानं न विवक्षितमित्याह। **परेति**। अभ्यर्थमाह। **अभीति**। अत्राप्यन्यथा नेत्याह। **करीति** ॥ १३४ ॥

## याज्ञवल्कीये १३५।१३६ श्लोकौ।

मि. पृ. २१८ **किंचेति**। प्रपंचोत्तरमाहेत्यर्थः। एवमग्रेऽपि बोध्यम्। णिन्यर्थमाह। **शील इति** ॥ १३५ ॥ १३६ ॥

## याज्ञवल्कीये १३७ श्लोकः।

**आहेति**। श्लोकत्रयेणेति भावः। मुख्यात्मज्ञत्वमविवक्षितमित्याह। **विद्येति**। अविनिगमकत्वादाह। **बाह्ये**। **अर्थेषु**। विषयेषु। धर्मशब्देनात्र काम्यस्याग्रहणमित्याह। **नित्येति**। विद्याशब्देनात्र तदर्थ इत्याह। **वेदार्थेति** ॥ १३७ ॥

## याज्ञवल्कीये १३८।१३९ श्लोकौ।

**अधीर** इत्यस्य व्याख्या **व्यग्रेति**। **आरंभी**त्यस्य व्याख्या **सदेति**। विषयीत्यस्य व्याख्या **विषेति** ॥ १३८ ॥ १३९ ॥

## याज्ञवल्कीये १४० श्लोकः।

उपसंहारमाहे**तीश्वर इति** ॥ १४० ॥

## याज्ञवल्कीये १४१ श्लोकः।

मि. पृ. २१९ ज्ञानेत्येस्याधिकरणस्य शेषत्वविवक्षया षष्ठीत्याह। **अवबोधे इति**। एवं प्रागपि ॥ १४१ ॥

## याज्ञवल्कीये १४२ श्लोकः।

**प्रकाशत्वात्** तद्रूपत्वात् ॥ १४२ ॥

## याज्ञवल्कीये १४३ श्लोकः।

**यदुक्तमिति**। तृतीयशंकेत्यर्थः। सर्वः आत्मादिरूप आश्रयो यस्यास्तां तदाह। **अध्यात्मेति**। सर्वदेहो न विवक्षित इत्याह। **स्वेति**। न चाप्नोति वेदनामिति तुर्यपादं व्याचष्टे। **न देहांतरेति**। वेदनामाप्नोतीति शेषः। ह्यर्थं चसूचितमाह। **भोगेति**। **आरंभेति**। आरंभकादृष्टेत्यर्थः। **चस्त्व**र्थे इत्याह। **यस्त्विति**। वास्तवमुक्तत्वं नेत्याह। **मुक्तेति**। सर्वासामित्यस्यार्थमाह। **सकलेति**। शेषमाह। **वेदितेति** ॥ १४३ ॥

## याज्ञवल्कीये १४४ श्लोकः।

**आत्मनि** सतीति शेषः। **अपारेति**। सर्वथेत्यादिः। मतद्वयस्यापि **उत्तरमीमांसायां प्रतिपादित्वात्** ॥ १४४ ॥

## याज्ञवल्कीये १४५ श्लोकः।

त्याहेति। दाढर्यायेति भावः। भूश्चेति। प्रसिद्धेत्यर्थः। इत्यर्थः। एते इति। आरोपितं धातुत्वमित्याह। वातेति। तत्र तेषां मध्ये ॥ १४५ ॥

## याज्ञवल्कीये १४६।१४७।१४८ श्लोकाः।

५ त्रितयमुपलक्षणमित्याह। चीवरेति। एवमग्रेऽपि। करणजातं करणसमूहं। वार्युक्तिः मि. पृ. २२० इतरापेक्षा। प्राग्वदत्र नेत्याह। केवलमिति। मार्गार्थोऽयम्। रूप्यते इति रूपं। तदाह होमेति। एवमर्थस्तथेति। चार्थोऽपीति। कारणानीत्यस्यार्थः पृथीति। संभूत्येत्यस्यार्थः परस्परेति। हेत्यस्यार्थोऽस्मिन्निति। प्राग्वदाह। निजेति। ॥ १४६ ॥ १४७ ॥ १४८ ॥

१० 
## याज्ञवल्कीये १४९ श्लोकः।

अन्यथेत्यस्यार्थो यदीति। तदाकारमाह। यथाऽयमहमिति। ॥ १४९ ॥

## याज्ञवल्कीये १५० श्लोकः।

### पूर्वार्धः।

संश्रुतामित्यत्र मतिबुद्धीति वर्तमाने क्त इत्याह। श्रूयेति। अनेन पुनरित्यस्य व्यवहित-
१५ संबंधः सूचितः। यथाश्रुते दोषाभावादाह। तस्येति। ॥

## याज्ञवल्कीये १५० उत्तरार्धः १५१ श्लोकौ।

युक्त्यंतरमप्याह। किंचेति। ये गत्यर्थास्ते ज्ञानार्था इत्याह। अनुभूतेति। स्वप्नपदं मि, पृ. २२१. तज्ज्ञानपरमित्याह। स्वप्नेति। लक्ष्यार्थमाहोपभोगेति। उपसंहरति। तस्मादपीति। ॥ १५० ॥ १५१ ॥

२० 
## याज्ञवल्कीये १५२ श्लोकः।

विभ्रूण्वन्निति। अनेन पौनरुक्त्यं निरस्तम्। साकांक्षत्वादाह। योऽसाविति। विषयसप्तमी। मत्यपेक्षयाचार्थवाग्रेमाह। तयेति। ह्यर्थमाहैवेति। ॥ १५२ ॥

## याज्ञवल्कीये १५३ श्लोकः।

साकांक्षत्वादाह। तस्येति। दारेत्याद्युपलक्षणमित्याह। आदय इति। 'सहेत्यस्यैव
२५ व्याख्या विप्लुतेति। उद्देश्यमिदम् ॥ १५३ ॥

## याज्ञवल्कीये १५४।१५५ श्लोकौ।

प्रकृतिस्वरूपमाह। आत्मन इति। अनाशके भावे ण्वुलित्याह। अनशनेति। प्रवेशस्योभयत्रान्वयः। इदमुपलक्षणमित्याह। विशेषेति। विप्लवो दोषः। वृत्त इत्यस्य मि. पृ. २२२ व्याख्या नाना। वितथेत्यस्यार्थोऽसदिति। कर्मणेति जातावेकवचनमित्याह।
३० तत्कृतेति। साक्षात्तदसंभवादाह। शरीरेति। ॥ १५४ ॥ १५५ ॥

## याज्ञवल्कीये १५६।१५७।१५८।१५९ श्लोकाः ।

विश्रंभो बंधमोक्षः । वेदशब्दोऽत्र योग्यतया वेदांतपरः । एवं शास्त्रमपि पातंजलाद्य-वेतदाह । वेदांतेति । आदिना योग्युक्तपरिग्रहः । षष्ठ्यर्थमाह । प्रतीति । निद्रेति । तत्सदृशीत्यर्थः । व्यर्थो विशेषणेति । परामर्शो विचारः । प्राग्वदाह । बाह्यांतरीति ॥ १५६ ॥ ॥ १५७ ॥ १५८ ॥ १५९ ॥ ५

## याज्ञवल्कीये १६० श्लोकः ।

तत्त्वमात्सेत्याहात्मेति । हेतुरयमपि । कर्मशब्दोऽत्रबीजपरः पूर्वान्वयीत्याह । कर्मेति ॥ १६० ॥

## याज्ञवल्कीये १६१ श्लोकः ।

किंचेति । गत्यंतरमप्याहेत्यर्थः । नन्वेवमपि नार्थसिद्धिर्जातसाधननैष्फल्यं चात आह । तदिति । ॥ १६१ ॥ १०

## याज्ञवल्कीये १६२ श्लोकः ।

इत्याह । इत्यत आह । नानारूपेत्यादिबहुव्रीहिद्वयम् ॥ १६२ ॥

## याज्ञवल्कीये १६३ श्लोकः ।

निमित्तांतरमप्यस्तीत्याह । किंचेति । तदेवाह । न केवलमिति । पद्ये कालकर्मेति संहारद्वन्द्वेन पृथक् पदमित्याह । कालेति । आत्मबीजानामित्यस्यार्थमाह । स्वेति । दोषै-रित्युभयत्रान्वयि । हीने भावे क्तः । वैकुतेऽप्येवम् । स्वार्थेऽण् । तदाह हीनत्वेति । स्थिति-नियमाभावादाह । अनियतेति । ॥ १६३ ॥ १५

## याज्ञवल्कीये १६४ श्लोकः ।

*लिंगेतित्यदादशतत्त्वात्मकमित्यर्थः । पूर्वं मुक्तो मुक्तपूर्वः । पूर्वत्वं च मोक्षावधिकम् । तत्फलितमाह । कदेति । ॥ १६४ ॥ २०

## याज्ञवल्कीये १६५ श्लोकः ।

प्रतीति बहुव्रीहिः । वर्तिपदं सदीपपरमित्याह । नानेति । आधारे इति भावः । विक्रियापि चेति व्याचष्टे । तासां चेति । नन्वेवमपि तथैवात्र कुतो न कारणसत्वादत आहैतादिति । ॥ १६५ ॥

## याज्ञवल्कीये १६६।१६७ श्लोकौ ।

मि. पृ. २२४. प्रागुक्तयुक्तेराह । सर्वत इति । शेषमाह । वर्तत इति । ॥ १६६ ॥ १६७ ॥ २५

## याज्ञवल्कीये १६८।१६९ श्लोकौ ।

इहेत्यस्य व्याख्या संसारे इति । कर्मणो भागासंभवादाह । कर्मकेति । ॥ १६८ ॥ १६९ ॥

## याज्ञवल्कीये १७०।१७१।१७२।१७३ श्लोकाः ।

श्रुत्यंतरमाह । अस्थूलमिति । हेतुत्वार्थमेवाज्ञानेति । द्योतनैः द्योतकैः । हेतुत्वार्थ- ३०

---

* एवं मूले ।

मेवाह । जीवोपेति । तदर्थमेवाह । देहे इति । एवमग्रेऽपि । वेद्यमानम् । अनुमीयमानम् । जगतः कारणमात्मानमिति शेषः ॥ १७० ॥ १७१ ॥ १७२ ॥ १७३ ॥

### याज्ञवल्कीये १७४।१७५।१७६ श्लोकाः ।

मि. पृ. २२५. तत्र गमकांतरमप्याह । किंचेति । ॥ १७४ ॥ १७५ ॥ १७६ ॥

५ 

### याज्ञवल्कीये १७७।१७८ श्लोकौ ।

अत्र पद्ये अर्थशब्दो विषयपर इत्याह । शब्दादीति । ॥ १७७ ॥ १७८ ॥

### याज्ञवल्कीये १७९।१८० श्लोकौ ।

ततः अव्यक्तात् त्रिप्रकारत्वमेवाह । सत्वेति । सत्वादिक्रमेणैवाह । वैकारिक इति । तत्र तेषां मध्ये ॥ १७९ ॥ १८० ॥

१० 

### याज्ञवल्कीये १८१।१८२।१८३ श्लोकाः ।

मि. पृ. २२६, लिंगैर्हेतुभिः ॥ १८१ ॥ १८२ ॥ १८३ ॥

### याज्ञवल्कीये १८४ श्लोकः ।

पितृयाने करणे ल्युट् । मार्गो विशेष्यः ॥ १८४ ॥

### याज्ञवल्कीये १८५ श्लोकः ।

१५ दानेत्युपलक्षणमित्याह । दानादीति ।. सम्यगिति पूर्वान्वयीत्याह । सम्यगिति । मंगलं कल्याणं ॥ १८५ ॥

### याज्ञवल्कीये १८६ श्लोकः ।

मि. पृ. २२७. प्रतिसंचरे लये । तस्येति शेषे षष्ठी । मुख्यप्रकृतोपयोगिशंकामाह । कथंतरामिति । ॥ १८६ ॥

२० 

### याज्ञवल्कीये १८७।१८८ श्लोकौ ।

अन्येऽपि तत्र संतीत्याह । किंचेति । सर्वारंभेत्यस्य व्याख्या केवलेति । मेधायुक्ता इत्यपि बोध्यम् । तिष्ठंते इति । तत्र पितृयाने । गत्वेति शेषः । तावता किमत आह । तत्र चेति । पितृयाने इत्यर्थः ॥ १८७ ॥ १८८ ॥

### याज्ञवल्कीये १८९ श्लोकः ।

२५ ते प्रागुक्ता द्विविधाः । यत इत्यस्य व्याख्या द्विवीति । तथेत्यस्यार्थो नित्येत्यादि । उत्तरसंगत्यर्थमाहैवं सतीति । तेषां नित्यभूतत्वे सतीत्यर्थः ॥ १८९ ॥

### याज्ञवल्कीये १९० श्लोकः ।

अत एवाह । तत इति । इत्याह । इत्यत आह । तदेवाह । वेदस्येति । अनुवचनमध्ययनम् । तस्य तत्वे सति ॥ १९० ॥

३० 

### याज्ञवल्कीये १९१।१९२ श्लोकौ ।

अन्यदपि फलमित्याह । किंचेति । तदेवाह । यस्मादिति । *अर्थसर्वोद्यर्थः प्रमेति ।

---

* एवं मूले ।

मि. पृ. २२८ **आत्मप्रमेति**। आत्मनि प्रमाणभूत इत्यर्थः। एवमेवेत्यस्यार्थं **उक्तेति**। विविधार्थ इत्याह। **नानेति**। अर्थार्थमाह। **तदनंतरमिति**। चसूचितं निदिध्यासनमाह। **तत इति**। अरण्ये भवमारण्यकं। तदाह। **निर्जनेति**॥ १९१॥ १९२॥

## याज्ञवल्कीये १९३।१९४ श्लोकौ।

**पुरुष इति**। **अभ्येत्य** ब्रह्मलोकादागत्येति शेषः॥ १९३॥ १९४॥ ५

## याज्ञवल्कीये १९५।१९६।१९७ श्लोकाः।

त्वर्थे चार्थमाह। ये **पुनरिति**। शेषमाह। **व्रीह्यादीति**। आत्मवानित्यस्यार्थः **प्रेति**। ज्ञानमात्रेण न फलमत आह। **मार्गेति**। तथा च धातोर्ज्ञानपूर्वके तत्र लक्षणेति॥ १९५॥ ॥ १९६॥ १९७॥

## याज्ञवल्कीये १९८।१९९।२००।२०१ श्लोकाः। १०

मि. पृ. २२९ तत्तात्पर्यमाह। **बद्धेति**। तदुक्तमन्यत्र यथा

"पद्मासनं स्वस्तिकाख्यं भद्रं वज्रासनं तथा। वीरासनमिति प्रोक्तं क्रमादासनपंचकम्॥

"ऊर्वोरुपरि विन्यस्य सम्यक् पादतले उभे। अंगुष्ठौ च निबध्नीयाद्धस्ताभ्यां व्युत्क्रमात्ततः॥

"**पद्मासन**मिति प्रोक्तं योगिनां हृदयंगमम्।

"जानूर्वोरंतरा सम्यक्कृत्वा पादतले उभे। ऋजुकायो विशेद्योगी **स्वस्तिकं** तत्प्रचक्षते॥ १५

"सीमन्याः पार्श्वयोर्न्यस्य गुल्फयुग्मं सुनिश्चलम्। वृषणाधः पार्श्वपादौ पाणिभ्यां परिबंधयेत्॥

"**भद्रासनं** समुद्दिष्टं योगिभिः परिकल्तिम्।

"ऊर्वोः पादौ क्रमान्न्यस्य जान्वोः प्रत्यङ्मुखांगुली। करौ निदध्यादाख्यातं **वज्रासन**मनुत्तमम्।

"एकं पादमधः कृत्वा विन्यस्योरौ तथोत्तरम्। ऋजुकायो विशेद्योगी **वीरासन**मितीरितम्॥

"आसनानि च तावंति यावत्यो जीवजातयः। एतेषामखिलान्भेदान्विजानाति महेश्वरः॥ २०

"चतुरशीतिलक्षणमेकैकं समुदाहृतम्। ततः शिवेन पीठानां षोडशोनं शतं कृतम्॥

"आसनेभ्यः समस्तेभ्यो द्वयमेतदुदाहृतम्। एकं सिद्धासनं प्रोक्तं द्वितीयं कमलासनम्॥

"योनिस्थानकमंघ्रिमूलघटितं कृत्वा दृढं विन्यसेन्मेढ्रे पादमथैकमेकहृदये बध्वा समं विग्रहे॥

"स्थाणुः संयमितेंद्रियोऽचलदृशा पश्यन्भ्रुवोरंतरम्। एतन्मोक्षकपाटभेदनकरं **सिद्धासनं** प्रोच्यते॥

"वामोरूपरि दक्षिणं च चरणं संस्थाप्य वामं तथा। सव्योरूपरि तत्र बंधनविधिं कृत्वा कराभ्यां दृढम्॥ २५

"तत्पृष्ठे हृदये विधाय चिबुकं नासाग्रमालोकयेदेतत् व्याधिविकारभेदनकरं **पद्मासनं** प्रोच्यते॥" इति।

**अन्यत्रापि**

"वीरं वा स्वस्तिकं वाऽपि बध्वाऽन्यतरदासनम्। उदङ्मुखः प्राङ्मुखो वा जपपूजादिकं चरेत्॥

"पद्मं वा मुक्तकं वापि बध्वा ध्यानादिकं चरेत्। एवमासनयुक्तः सन्भूतशुद्धिं समाचरेत्॥

"एकं पादमथैकस्मिन्विन्यस्योरुणि संस्थितः। इतरस्मिंस्तथा चारुं वीरासनमुदाहृतम्॥ ३०

"सीमन्यामात्मनः पार्श्वगुल्फौ निक्षिप्य पादयोः। सव्ये दक्षिणगुल्फं तु दक्षिणे दक्षिणेतरम्॥

"एतद्वा स्वस्तिकं प्रोक्तं सव्ये न्यस्येतरं करम्।

"अंगुष्ठौ चारु बध्नीयाद्धस्ताभ्यां व्युत्क्रमेण तु । ऊर्वोरुपरि विप्रेंद्र कृत्वा पादतले उभे ॥
"बद्धपद्मासनमिदं सर्वेषामपि पूजितम् । संपीड्य सीमनीं सूक्ष्मां गुल्फेनैव तु सव्यतः ॥
"सव्यदक्षिणगुल्फेन मुक्तासनमुदीरितम् ।" इति ।

साहचर्यादाहोत्ताने इति । तात्पर्यमाह । **यथेति** । **ततः** तदनंतरं । तस्य सर्वदा ५ सत्वादेवाह । **मन इति** । **स्वरूपं चेति** । उच्यते । इति शेषः । **एकैकेति** । तथोक्तप्रकारेण त्रिभिस्त्रिभिः प्राणायामैरेकैका धारणा स्मृतेत्यर्थः । **ताभिस्तिसृभिर्धारणाभिः** ॥ १९८ ॥१९९॥- २०० ॥ २०१ ॥

## याज्ञवल्कीये २०२।२०३ श्लोकौ ।

श्रोत्रेण जानातीति श्रोत्रज्ञस्तस्य भावस्तत्ता । तदाह । **अतीति** । **छंदत** इत्यस्य १० मि॰ पृ॰ २३० तात्पर्यमाह **करणेति** प्रसिद्धेत्यादिः । करणो ल्युडाह । **लिंगमिति** । **च**स्तत्र सर्वसमुच्चायको व्युत्क्रमे । ॥ २०२॥२०३ ॥

## याज्ञवल्कीये २०४ श्लोकः ।

नित्यनैमित्तिकयोरत्यागादाह । **काम्येति** । सर्वासंभवादनावश्यकत्वादेकवचनोक्तिश्चाह। **अन्यतममिति** । **वनेवसन्नि**त्यस्य तात्पर्यार्थमाहै**कांतेति** । उपायांतरमाह । **किंचेति** । १५ काम्यनिरासायाह । **नित्येति** । णिन्यर्थमाह । **शील इति** । अयं सर्वोऽप्युपाय इत्याह । **सन्निति** । एतत्फलमाह । **आत्मेति** । ॥ २०४ ॥

## याज्ञवल्कीये २०५ श्लोकः ।

**ज्ञानं** ध्यानम् । तथापाठ एव वा । हेरर्थो **यस्मादिति** । अत एव साकांक्षत्वात्प्रागुक्ता- विरोधेनाह । **तस्मादिति** ।

२० इत्यध्यात्मप्रकरणं ॥

### अथ योगविधिः ॥

एवं जपादिसिद्धप्रणवो योगी यथोचितमासनमास्थाय तन्मंत्रन्यासादिकं कृत्वा मूलाधार- गतस्यादिवर्णत्रयं तेजसोमध्यत्रिकोणबिंदुस्थवृत्तनादमयीं परां शब्दब्रह्मात्मिकां देवीं भावयेत् । आत्मकुंडलिनी

२५ "तस्या मध्यगतं सूक्ष्मं सर्वविश्वस्य कारणम् । शिवात्मकं परं तेजः संविद्रूपं परं स्मरेत् ॥" इत्युक्त- क्रमेण मूलाधारे अकारादिप्रणवांशत्रयं त्रिरेखं त्रिकोणं संचिंत्य प्रणवमुन्मन्यंतमात्रेपि तमु- च्चार्य अंतर्नादात्मकं अलिविरुतिकोमलं शब्दब्रह्मात्मकं सूक्ष्मं तेजस्ते सुनिभं नादं सुषुम्नाध्वना तदग्रगतपरमात्मकगतं निनयेत् । इति **सूक्ष्मतंतुनयनप्रयोगः** ।

अथैवमेव मूलाधारे आवर्तत्रययुक्तं बिंदुं संचिंत्य तारं तथोच्चार्योच्चार्य द्वादशांतस्थ ३० चित्तं तु प्रोतं परिकल्प्य ततोमृतवर्यं ध्याय तारमभ्यसेत् । इति **बिंदुस्वरूपनयनात्मकः** सपापमृत्युहरो योगः ।

एवं मूलाधाराकारादित्रिकोणमध्यबिंदुगतं **नादरूपप्रभां बिसतंतुमिभा संचिंत्य प्रणव-**

मुन्मन्यंतमात्रायुक्तमुच्चार्य द्वादशांतस्थाच्चिंद्वदे नीत्वा तस्मादमृतवर्षं भावयन्प्रणवमावर्त्तयेत् ।०।
इति **मात्रानयनात्मको** योगः । विहरणादिनिपुणः ।

मूलाधारमध्यगतत्रिकोणमध्यबिंदुगतनादं तेजः पीततंतुनिभं ध्यात्वोक्तक्रमेण परमात्मनि निनयेत् । पुनरावृत्तिविहीनं त्वारमभ्यसेत् । पीततंतुनिभं योगो मोक्षकरः ।

अथ मूलाधारे एवं विचिंत्य स्थूलसूक्ष्मकारणसामान्यबीजसंविद्भावक्रमेण अकारमुकारे ५ उकारं मकारे मकारं बिंदौ बिंदुं नादे नादं शक्तौ शक्तिमुन्मन्यंते निर्द्वंद्वत्वादिलक्षणे शांते संहरन्प्रणवमभ्यसेत् । अयं क्रमः संहारात्मको मोक्षप्रदो योगः ।

एवमहरहर्योगं कृत्वा दिनत्रयावृत्तौ च मनसा जाग्रदात्मकं बीजं स्वप्नरूपे बिंदौ विलापनं तं सुषुप्तिरूपे नादे तंतुरीयरूपायां शक्तौ तांतुरीयातीतरूपे शांते जाग्रदादिभिः सह मनसा संहरेत् । अयं मंत्रोच्चारको मोक्षप्रदो योगः । मंत्रोच्चारके योगे सूक्ष्मायां स्वमहिमायां १० वाचि व्याख्यायां ख्यातिरूपायां मूलाधारस्थायां परायां वाचि पश्यंत्यां नाभिस्थायां वाचि मध्यमाख्यवैखर्योश्च हृदयमुखस्थयोश्च प्रणवोच्चारणोत्पाद्यंतां पंचमीं तां वैखरीमेवोच्चारणानंतरं तदंतरध्वनिरूपेणास्य भ्रूमध्ये मूर्धद्वादशांतं षोडशांतं स्थित्वा अनुक्तक्रमेण वैखरी मध्यमा परा सूक्ष्माख्या सुसंहरन् प्रणवमभ्यसन्योगी योगं कुर्यात् । इत्यादिसर्वमवगंतव्यम् ।

अथास्य प्रणवस्य यंत्रमपि भावनार्थमंत्रदेवताप्रकाशिकोक्तप्रकारेण लिख्यते । १५

"षट्कुक्षिं पीठसंस्थं तदुपरि विलसत्सोमसूत्रं सबिंदुं ।
तन्मध्ये नादसंज्ञं प्रणवमभिवृतं बिंदुनादौ पुनश्च ॥
इत्थं संचिंत्य योगी विविधमनुदिनं तारकं व्योमसंस्थं ।
सर्वाधारं महेशं सकृदपि मनसा संस्मरेद्यः स मुक्तः"॥ अस्यार्थः । षट्कुक्षिरित्यकारोऽन्वर्थसंज्ञः पीठ इत्युकारः । सोमसूत्रमिति तिर्यग्भूतरेखाद्वयम् । बिंदुरिति तदुपरि रेखावलयं । नादमिति । तत्र २० दीर्घरेखातारं प्रणवः । तदुपरि च बिंदुनादौ । व्योमकारः । शेषं प्रसिद्धम् । ध्यानं " विष्णुं नमामि" इति मंत्रस्य शतलक्षजपः । पायसैर्घृतसिक्तैश्च दशांशहोमः । विप्रभूरुहसमिद्भिर्वा ॥ विप्रभूरुहं पलाशं । एवं पुरश्चरणहोमः । ॥ २०५ ॥

---

# अथ प्रायश्चित्तप्रकरणम् ॥ ५ ॥

उक्तजातस्य वक्ष्यमाणेनावसरसंगतिमाह । **वर्णेति प्रतीति** । प्रश्नविषयकथनविषयेत्यर्थः । २५ **षड्विति** षड्विधः स्मार्तधर्ममध्ये इत्यर्थः । तस्य तत्वं च वर्णधर्म आश्रमधर्मः वर्णाश्रमधर्मो गुणधर्मो निमित्तधर्मः साधारणधर्मश्चेत्येवं बोध्यम् । निमित्ते भवो **नैमित्तिकः** । निमित्तं च विहिताकरण-निषिद्धसेवनादि मूले एव वक्ष्यमाणं । अत एव **बृहस्पतिः** "विहितस्याननुष्ठानात्प्रतिषिद्ध-निषेवणात्प्रायश्चित्तं यत् क्रियते तन्नैमित्तिकमुच्यते " इति । अवांतरभेदेनाह । **धर्मजातमिति** । धर्मसमूहमित्यर्थः । **प्रायश्चित्तेति** । तत्पदवाच्य इत्यर्थः । ३०

तदुक्तं "प्रायः पापं विनिर्दिष्टं चित्तं तस्य विशोधनमिति"। **चतुर्विंशतिमते**ऽप्येवम् । तथा च पापनिवर्त्तनक्षमधर्मविशेषे योगरूढोऽयं शब्द इति तत्त्वम् । संकेतविशेषसंबंधेन प्रायश्चित्तशब्दवत्त्वमेव तत्त्वम् । अत एव क्रत्वंगप्रेषप्रायश्चित्ते तद्व्यवहार इत्यन्ये । **प्रथेति** । आदौ तत्र **यत्प्ररोचनमभि**रुचिस्तदर्थमित्यर्थः । तदुन्मुखत्वार्थमिति यावत् । फलांतरमाह । **अधिकारिविशेषणेति** ब्रह्महत्या-
५ दीत्यर्थः । श्रद्धाऽऽस्तिक्यादीत्यर्थो वा । **अर्थेति** । प्रायश्चित्तविधिर्ब्राह्मणहननादिनिषेधोभयार्थवादेत्यर्थः । अनेनोक्तिसाफल्यमुक्तम् । **कर्मेति** । जन्मांतरभावीत्यादिः ।

## याज्ञवल्कीये २०६ श्लोकः ।

तस्यैकभ्रमनिरासायाह । **ब्रह्मेति** । वक्ष्यमाणमूलत आह । **तामिस्रादीति** । 'यथा कर्मेति' (श्लो.२१७) वक्ष्यमाणत्वात् । न हि सर्वे सर्वत्रेत्याह । **स्वेति** । घोरानित्यस्य व्याख्या-
१० **अतीति** । दारुणत्वमेवाह । **दुःखैकेति** । दुःखस्यैकः केवलं यो भोगस्तत्स्थानभूतानित्यर्थः । दुःखलेशोऽपि येषु नास्तीति भावः । एतावन्मात्रेण न सर्वकर्मक्षय इति व्याचष्टे । **कर्मजन्येति** । नेयं हेतुपंचमी किंतु ल्यब्लोपे पंचमीति ध्वनयन्स्पष्टार्थं योग्यतया शेषेणाह । **अनंतरमिति** । उक्तरीत्यैव हेतुमाह । **कर्मेति** । इहेत्यस्य व्याख्या **संसारे इति** । मृगश्वेत्यादिवक्ष्यमाणानुरोधेनाह । **श्वेवेति** । **दुःखबहुलेति** । विशेषणेन सुखलेशसत्तासूचनद्वारा पूर्वतो विशेषोऽत्र प्रति-
१५ पादितः । **प्रार्थः** प्रकरिति । तदर्थो **भूयो भूय इति** । न्यूनतादि निराचष्टे । **महेति** । **आदिना**ऽनुपातक्यादिपरिग्रहः । तत्र बीजमाह । **तेषां चेति** । तेषामपीत्यर्थः । नरकभोगोत्तरमिति शेषः । इदमप्यग्रे वक्ष्यते "तामिस्रं लोहशंकुं चे"त्यत्र ( श्लो. २२२ ) । विशेषोऽपि तत्रैव वक्ष्यते । ॥ २०६ ॥

## याज्ञवल्कीये २०७।२०८ श्लोकः ।

२० मि. पृ. २३१ मृगेत्यादि लवणहारक इत्यंतमस्यैव सामान्योक्तस्य विवरणमित्याह । **महेति** । तदुक्तम्

"एष सर्वः समुद्दिष्टस्त्रिप्रकारस्य कर्मणः । त्रिविधस्त्रिविधः कृत्स्नः संसारः सार्वभौतिकः ।

" यादृशेन तु भावेन यद्यत्कर्म निषेवते । तादृशेन शरीरेण तत्तत्फलमुपाश्नुते ॥" इति ।

मृगशब्द आरण्यकसामान्यवाचीत्याह । **हरिणाद्य इति** ।

२५ "विप्रान्मूर्द्धावसिक्तो हि क्षत्रियायां विशः स्त्रियाम् ।अम्बष्ठः शूद्र्यां निषादो जातः पारसवोऽपि वेति॥"

प्रतिपादितानुलोमनिरासायाह । **प्रतीति** । अयं मत्स्याघातजीवी । तदुक्तं **व्यासेन**

"शूद्रान्निषादो मत्स्यघ्नः क्षत्रियायामिति क्रमादिति" । **वैदेहकेनेति** । अयमपि प्रतिलोमजः । तदुक्तं ( आचारे ९३ श्लो. )

" ब्राह्मण्यां क्षत्रियात्सूतो वैश्याद्वैदेहकस्तथा । शूद्राज्जातस्तु चंडालः सर्वधर्मबहिष्कृतः ॥" इति ।

३० प्रायशः सर्वत्र तथैव सत्वादाह । **सजातीयेति** । नन्वेवं कथमुत्पत्तिरत आह । **मांसेति** । आदिना कुत्सितकर्दमादिपरिग्रहः । कीटानाह । **तत इति** । कृमिभ्य इत्यर्थः । **स्वार्थे तरप्** । **विशेष-**

---

१ आचारे ९१ श्लोकः

मुक्त्वा सामान्यमाह। **सजेति**। वक्ष्यमाणानुरोधेनाह। **ब्राह्मणेति**। प्रमाणमपि तस्य वक्ष्यते। **क्रमश** इत्यत्रार्षः शंस स्वार्थे इत्याह। **क्रमेणेति**। इदं पूर्वत्रापि स्थलत्रये विशेषणं बोध्यमत एव सर्वांते मूले उक्तमन्वादिविरोधं परिहरति। **एतच्चेति**। **कामेति**। इच्छाकरणपूर्वं कृते त्वित्यर्थः। अन्यास्वपि मूलोक्तभिन्नास्वपि योनिमित्यादेरग्रेऽप्यनुषंगो बोध्यः। संख्यैकवचनादित्युभयत्र शस्। **क्रव्यादां**। **अपंक्तमासभक्षिणां**। क्रव्ये चेति विट्॥ २०१॥ २०८॥ ५

## याज्ञवल्कीये २०९ श्लोकः।

**किंचेति**। अन्यदप्याहेत्यर्थः। न केवलं तदनंतरं तिर्यग्योनिप्राप्तिरेव किंतु तदनंतरं अन्यदपीत्याशयोऽस्येत्याहैवमिति। उक्तप्रकारेणेत्यर्थः "नरका रौरवो रौद्रः शूकरस्ताल एव च" इत्यादि। **यमानुरोधेनाह**। **रौरवादीति**। **जननसमय** एवेत्यनेनोत्पत्तिशिष्टत्वमेषां सूचितम्। तेनोत्पन्नशिष्टव्यवच्छेदः। तस्याल्पत्वात्। एवं सामान्यपद्यतो लब्धमर्थमुक्त्वा प्रकृतार्थमाह। **तत्रेति**। १० तेषां मध्ये इत्यर्थः। **राजेति** व्रीह्यादित्वादिनिः। वक्ष्यमाणानुरोधेनाह। **निषिद्धेति**। कृत्रिमत्वनिरासायाह। **स्वभेति**। प्राग्वदाह। **ब्राह्मणेति**। प्राप्नोतीति शेषः। **तल्पं** दाराः। दुश्चर्मत्वमेवाह। **कुष्ठितामिति**॥ २०९॥

## याज्ञवल्कीये २१० श्लोकः।

तृतीयार्थमाहैतेषामिति। संवत्सरपर्यंतमिति शेषः। अन्नं चतुर्विधं॥ २१०॥ १५

## याज्ञवल्कीये २११ श्लोकः।

**धान्यमिश्रोतिरिक्तांग इति**। धान्यं च मिश्रं च धान्यमिश्रे। ते यस्य स्त इति अर्श आदित्वात् जातावेकवचनं। संबंधश्चापहार्यापहर्तृभावादिः। तथा च धान्यचौरश्चातिरिक्तं शून्यं अधिकं च यथाक्रममंगं यस्य तादृश इत्यर्थः। तदेतदभिप्रेत्याह। **षडंगुल्यादिरिति**। **आदिना** चतुरंगुल्यादेरपि परिग्रहः। तथा च **विष्णुः** "धान्यचौरोंऽगहीनः। मिश्रचौरोऽतिरिक्तांग" इति। २० अपद्रव्यमिश्रणेन यो द्रव्यमपहरति **स मिश्रचौर इति कल्पतरुः**। "धान्यचौरोंऽगहीनत्वमातिरेक्यं तु मिश्रक" इति **मनुरपि** (११।५०)। यो द्रव्याणि अद्रव्यैस्तदाभासैः संमर्दयति यथा कुंकुमं कुसुंभेन स मिश्रक इति तु **मेधातिथिः**। **वस्तुतस्तु** मूरवकोधान्यहारीति वक्ष्यमाणात्वादेक एवात्रार्थो मूलाभिमत इति बोध्यम्। सूचकेनापौनरुक्त्यायाह। **विद्येति**। अत **एवासदिति**। तत्र वक्ष्यति। **शील इति**। अग्रे तु सकृदपीति बोध्यम्। प्रागवदाहै**तच्चेति**। २५ एतदपीत्यर्थः। नरक(भो)तरमितिशेषोऽत्रापि बोध्यः। **यद्वा तद्वा**। यत्किंचिदपि॥ २११॥

मि. पृ. २३२

## याज्ञवल्कीये २१२ श्लोकः।

**ब्रह्मस्वं** ब्राह्मणद्रव्यम्। तत्र विशेषस्योक्तत्वादाह। **सुवर्णव्यतीति**। हेमकर्तृशब्दोऽपि तज्जातिवाची॥ २१२॥

## याज्ञवल्कीये २१३ श्लोकः। ३०

**यत्रेत्यनेन** फलशाकव्यावृत्तिः। शिष्यार्थमाह। **मयूर इति**। 'पत्रशाकं तु बर्हिण' इति **मनोः**॥ २१३॥

---

१ ख ध्यान; २१४ श्लो.।

## याज्ञवल्कीये २१४।२१५ श्लोकौ ।

योज्यतया शेषमाह । **हत्वेति** । अग्रेऽप्यस्यानुषंगो बोध्यः । **पयो**ऽर्थमाह । **क्षीरमिति** । **श्वित्री** कुष्ठी ॥ २१४ ॥

## याज्ञवल्कीये २१६ श्लोकः ।

५ पूर्वोक्तोपसंहारपरं मूलमित्याहैव**मिति** । **प्रदर्शनं** निदर्शनं । **पृष्ठाकोटेन** पृष्टकोटिभिः । **एकोपेति** । एकोक्तिविशेषेणेत्यर्थः । **कर्मविपाकं** तत्सामान्यं । स्तेयकर्मणीति न पूर्वान्वयि । पूर्वमन्यत्राप्युक्तत्वात् । तदाह । **स्तेयेति** विषयसप्तमी । अत एव शेषमाहाऽपेति प्रकारशब्देन रूपविशेष इत्याशयेन । विष्णुस्मृतिमाह । **यथा कांस्येति** । अत्र व्याख्यानेऽतिप्रसंगं हृदि निधायाहाथ**वेति** । अत्र प्रकारशब्देन फलं । तदाह **यत्फलेति** । यस्य फलस्य साधनं द्रव्यम-
१० पहरति तत्फलसाधनरहित इत्यर्थः । **मनु**माह (११।५१) **यथा पंगुतामिति** । स्पष्टार्थमाह ।

मि. पृ. २३३. **शंखेनेति** । तैजसं रजतादि । **मंडली** मंडलीख्यरोगवान् । **खलतिः** घर्घर-स्वरः स्खलद्वीर्वा । **प्रतिहर्ता** प्रतिकूलवृत्तिः । **कुंडाशी** कुंडस्यान्नमश्नाति सः । यद्वा कुंडं पात्रं तत्रैव योऽश्नाति सः । "चतुःषष्टिपलैः शुद्धैः कुंडं प्रस्थचतुष्टयम् । भवेत्तयस्तु निगरेत्सकुंडाशी पतत्यधः ॥" इति **ब्रह्मांडे** । एकस्मिन्नेव भोजने यः प्रस्थचतुष्टयपरिमाणं भक्षयेत्स कुंडाशीति ।
१५ तदर्थ इति केचित् । स्त्रियमेव पण्यां कृत्वा यो जीवति । कुमारं पतिमुपपन्नाः दारास्तत्त्यागी कौमारदारत्यागी । **क्षपणकः** जिनपरिव्राट् । **कपाली** कपालरोगवान् । **कौशिकी** पक्षिविशेषः । एवं **खंडकाणे**ऽपि ।

**खल्वल** इत्यस्यैव व्याख्या **मुहुरिति** । श्लीपदीत्यस्यार्थ **उच्छूनेति** । **अवगोरणे**ऽर्श आद्यच् । **वातवृषणः** एकस्थूलैकन्हस्वः । **न्यासः** थाथीति प्रसिद्धः । **पुरुषमृगः** पुमान्मृगः ।
२० **द्वीपी** व्याघ्रः । **जलप्लवः** । पणडुवीति प्रसिद्धः । **यतस्ततः** । अनियमेन । कक्षतृणं कक्ष-वनयोर्दहनात् । **दारका** बालकाः। मंडलाकारकुष्टवान् । **श्वपाक**श्चंडालः । स्नेहं घृतादि । **ज्ञानाप-हारी** अननुज्ञातश्रोता । चांडालीपुल्कस्योर्गमने मरुदेशस्थपिशाचः । शूद्रागमने इति पाठः । **वार्धुषिकः** निषिद्धवृद्ध्युपजीवी । **अविक्रेयं** लवणादि । **राजमहिषी** मुख्यराज्ञी । इदमुपलक्षण-मित्याहेत्येते **इति** । इत्यादयो नरकगामिन इत्यर्थः ।

२५ न्यूनतां निराचष्टे । **स्त्रियोऽप्येतेष्विति** । एवेन जात्यंतरनिरासः । **जातिषु** विषये । **कल्पेन प्रकरणेन** ।

प्रागुक्तमर्थवादत्वं स्पष्टयति । **एतच्चेति** । क्षपित्वादिरूपलक्षणेत्यर्थः । जन्मांतरानुष्ठितब्रह्म-वधादेरिति भावः । तथा च ब्रह्महत्यादेर्यथाश्रुते प्रागुपादानेऽपि विपरीतवाक्यकल्पनया विपरीत उद्देश्यविधेयभावो बोध्यः । **ब्रह्महेति** इदानींतनेत्यादि । **न पुनरिति** । उक्तरीत्योक्तिसाफल्याय
३० तथा प्राप्तावपि न तस्योक्तरीत्याऽर्थवादत्वेन साफल्यादिति भावः । पापस्य द्वितीयाऽपि शक्तिर्वक्ष्यमाणेत्याह । **संसर्गेति** । **व्रतं** प्रायश्चित्तं । तद्विनेति भावः । **पापेति** । वक्ष्यमाणस्थल-विशेषे इति भावः । वचने हि शेषसत्वादाह । **प्रारब्धेति** । बहुव्रीहिः । भोगेन प्रायश्चित्तस्येति भावः । उक्तमेव दृष्टांतमुखेन द्रढयति । **न हीति** । **वेधे** कार्ये । **तद्व्यापारस्य** तद्व्यापारांतरस्य । **पुनः**

पश्चात्। कार्मुकनिर्मोकानंतरम्। ननु न भोगेन तन्नाशः किंतु प्रायश्चित्तेन। तन्निमित्तपापापूर्वनाशद्वारा तन्नाश इति तदावश्यकमित्याह। **न च तदारब्धेति**। पापापूर्वारब्धनरकादीत्यर्थः। अत्र हेतुमाह। **न हीति**। तत् चक्रादिकारकः। 'पूर्वेति' प्रसिद्धः। **आदिना** घटादिः। अतिप्रसंगमपि सूचयन्नाह। **न च नैसरिति**। नापीत्यर्थः। जन्मतः प्राप्तं **प्रत्यानेतुं** दूरीकर्तुम्। असंभवादिति भावः। अत एव हेतुगर्भविशेषणं तत्र दत्तम्। ५

ननु नरकादिभोगेन तदपूर्वनाशेऽपि यदपूर्वेण शेषेणेह कौनख्यादिसंपन्नं तदपूर्वमात्रनाशार्थमेव प्रायश्चित्तं स्यादत आह। **किंचेति**। **आदिना** प्रागुक्तान्यपरिग्रहः। अनुभूते गत्यर्थाकर्मकेति-कर्तरि क्तः। अनुभूतवत इत्यर्थः। **उत्पन्नमात्रेणे**त्यनेनोत्पत्तिपूर्तिः कालांतराद्यनपेक्षा च सूचिता। **आशुशुक्षणिर**ग्निः। आद्यपक्षमुपसंहरति। **तस्मादिति**। तादृशस्थले इति भावः। नन्वेवमपि द्वितीयशक्तिनाशार्थमेव तदावश्यकमत आह। **नापीति**। अनुषंगेणान्वयः। अत्र हेतुमाह। **न हीति**। उपसंहरन्नुक्त्यंतरमाह। **प्राचीनेति**। विरोधं परिहरति। **यत्त्विति**। **तदिति**। १० यथा गृहदाहनिमित्ते क्षामवतीष्टिरनुष्ठीयते केवलं न तावतैव गृहदाहप्रत्यापत्तिस्तद्वदित्यर्थः। तदेव मात्रपदव्यवच्छेद्यमाह। **न पुनरिति**। **वा** इवार्थे। पापक्षयार्थमिव संव्यवहार्यत्वसिद्ध्यर्थमित्यर्थः।॥ २१६॥

## याज्ञवल्कीये २१७ श्लोकः। १५

मि. पृ. २३४. क्षयरोग्यादिजन्मानंतरमपि किंचिच्छेषभूतं न तावतैव समाप्तिरित्याह। **किंचेति**। **यथाकर्मेति**। पदार्थानतिवृत्तावव्ययीभाव इत्याह। **स्वकृतदुरिति**। तस्यापि तात्पर्यार्थमाह। **तदन्विति**। फलपदार्थमाह। **नरकादीति**। गामश्वमितिवदाह। **तिर्यक्त्वं चेति**। **कालपर्ययादि**त्यस्यार्थः **कालक्रमेणेति**। शेषं योग्यतयाऽऽह। **क्षीणे इति**। क्षयरोग्यादिजन्मनेति भावः। एतदर्थमेवेदम्। अन्यथाऽनतिप्रयोजनकत्वमस्य स्फुटमेव। **लक्षणभ्रष्टा** इत्यस्य २० सुलक्षणाद्रहिता इत्यर्थस्तत्फलितमाह। **दुष्टेति**। **पुरुषाधमा** इत्यत्र षष्ठीसमासनिषेधात्सप्तमीसमास इत्याह। **पुरुषेष्विति**।॥ २१७॥

## याज्ञवल्कीये २१८ श्लोकः।

प्राग्वदाह। **किंचेति**। सामग्र्यभावे तदपि कथमत आह। **प्राग्भवीयेति** ॥ २१८॥

## याज्ञवल्कीये २१९।२२० श्लोकौ। २५

**काम्यस्थले** विहितत्वसत्त्वेऽपि तथा शास्त्रेणानुक्तत्वात्तन्निरासायाऽऽह। **यदावश्यकमिति**। सकृदपि दोष इति सूचनाय व्याचष्टेऽ**करणादिति**। पतनमित्यस्य नरकादियोग्यतामित्यर्थं हृदि निधायाऽऽह। **प्रत्यवायीति**।

तृतीयनिमित्तांशे शंकते। **नन्विन्द्रियेति**। **अर्थ**शब्दो विषयपरः। **अपिरुक्तसमुच्चायकः**। **इति** इत्यस्य। **एकांततः** आसाधारण्येन। ननु किन्ततोऽत आह। **तत्र चेति**। तेषु इत्यर्थः। ३० **इंद्रियेति** व्यधिकरणबहुव्रीहिः। **स चेति**। स तु संकल्पस्तु व्रतपदवाच्यसंकल्पांशमादाय भावरूपो नञर्थविशेषणनिषेधांशमादायाभावरूप इति उभयरूप इत्यर्थः। यद्यपि 'प्रासादवासि' **न्यायेन** माषभोजननिषेधस्यामिश्रणेऽपि प्रवृत्त्यंगीकारेण च तथा संभवति तथापि 'सिद्धस्य गतिश्चिंतनी-

येति' 'ब्राह्मणवसिष्ठ'न्यायेन तथोक्तं पर्युदासेऽप्यार्थिकप्रतिषेधव्यवहार इष्ट एवेति बोध्यम् । एतेन स अल्पप्रतिषेध इति 'ब्राह्मण वसिष्टादि'वत्प्राधान्यख्यापनार्थं वा तदुक्तिरिति **मेधातिथ्याद्युक्तमपास्तम्** । इंद्रियार्थप्रसंगाभ्यासेन पापाधिक्यार्थमिदमिति **कल्पतरूक्तमपि** ।

आद्यनिमित्तांशे शंकते । **ननु वीति** । विधिबोधितस्यापि स्वत एवाप्रवर्त्तकत्वेन तदाक्षेप

५ आवश्यक इत्याहाऽऽक्षिपतीति । सर्वत्रेष्टसाधनताज्ञानस्यैव प्रवर्तकत्वेनात्र न तदपेक्षेत्याह । **स्वविषयेति । सा** उक्तरूपचोदना । **तावन्मात्रेण** तावतैव । तद्व्यवच्छेद्यमाह । **न पुनरिति । अनुपपत्तेः** तदुपपादकत्वासंभवात् । अननुपपत्तेरिति पाठस्तु युक्तः । अत एवाऽऽह **अभ्युपेत्यापि । किंच यद्यनुपेति । अर्थांतरं** तदपि विधिस्थले इति भावः । निषेधस्थले प्रतिबंदीमाह । **तर्हीति** । तस्याकिंचित्करत्वादिति भावः ।

१० विधेः क्षीणशक्तित्वेन तदसंभवेऽप्यन्यथा तदाह । **नन्विति । निषिद्धेषु** सुरापानादिषु । **अर्थवादाः** प्रागुक्ताः । **तथेति** । तत्र सर्वत्रार्थवादसत्तां मन्यते । **हि** यतः । हेतुत्वबोधकोऽयम् । एवमग्रेऽपि । उत्थिताकांक्षाया अभावेऽपि वाक्यशेषवदन्वयसंभव इति मूला स्मृतिरेव तादृशी सर्वत्र विधावित्याह । **न च विहितेति । वाक्येति** । अर्थवादस्थानापन्नेत्यर्थः । चतुरस्रं समीचीनं युक्तमिति यावत् । "संदिग्धे तु वाक्यशेषादिति' **न्यायेनाह । न हीति । प्रमिते**

मि. पृ. २३५.

१५ संदिग्धे तु आकांक्षया समभवति । ननूभयाकांक्षाया अभावेऽपि 'विहितस्येति' स्मृतेरेवाकांक्षया तस्याप्याकांक्षामुत्थाप्यैकवाक्यतया तत्त्वमस्याः संभवतीत्याह । **भवतु वेति । नाभावेति** । तस्य तत्त्वेन कार्यजनकत्वस्यान्यत्र इष्टत्वादसंभवाच्चेति भावः । एतेनार्थवादगतप्रत्यवायपरिहारार्थमेव **स** च यत्र नास्ति तत्रापि कल्पते । अन्यथा विधेरेवाप्रवर्तकत्वापत्तिरित्यादि **मेधातिथ्याद्युक्तमपास्तम्** ।

२० अत्रापि शंकोक्तेपि तथा चं तत्रापि भावस्यैव तज्जनकत्वं नाभावस्य प्रतिबंधकाभावस्य तु तत्वेन कार्यमात्रं प्रति तत्वं सर्वसंमतमेवेति भावः । इत्यस्याः स्मृतेः **कथं गतिरित्यन्वयः** । तदंशे एवाहाऽ**ग्निहोत्रेति** । स हेतुरिति शेषः । तथा चेदृशप्रत्यवायस्तदंशे विवक्ष्यतो न तु निषिद्धानुष्ठानादिवन्नरकादिहेतुभूतपापापूर्वरूप इति भावः ।

अविरोधायाह । **नन्विति । वर्णानां** क्रमेणाह । **वांतेत्यादि** । अत्र विच्युतत्वमात्रं

२५ स्वधर्मरहितत्वरूपमुद्देश्यतावच्छेदकमन्यत्सर्वं विधेयमेवमग्रेऽपि तदनुवृत्त्या बोध्यम् । **उल्का** ज्वलत्काष्ठम् । **कुणपः** शवशरीरम् । आद्यंतयोस्तदुद्देश्यस्योक्तत्वान्मध्यद्वयमपि तद्विषयमित्याहे**त्येतानि । विहितेति** । अत्रातात्पर्यादाह । **वेति** । अत्र शब्दार्थत्यागापत्तिरत आह । **यद्वेति** । निषिद्धाचरणस्य तज्जनकत्वस्य क्लृप्तत्वेनात्र तदभावादा**क्षिप्तेति** । नात्र पक्षे पूर्ववत् विकल्प इत्याह । **वांताश्युल्केति** । विशेषाभिप्रायेणोपसंहरति । **इति न क्वचिदिति** । अथ समुदिते ।

३० **ननु पुंश्चलीति** । पुंश्चली वानरखरैर्दष्टाश्च मिथ्याभिशस्तश्च तदादावित्यर्थः । अपि नोभयादिसमुच्चयः । तत्र तदभावे इष्टापत्तावाह । **कथं चेति**

"श्वसृगालखरैर्दष्टो ग्राम्यैः क्रव्याद्भिरेव च । नराश्वोष्ट्रैर्वराहैश्च प्राणायामेन शुध्यति ॥" इति । **मनुः** ( ११।१९९ )। **मिथ्याभिशस्तः** । अनृतमभिशप्यमानः कृच्छ्रं मासं समाचरेत् । **पातकेषु** 'महापातकेषु द्विमासं कृच्छ्रमिति' **पैठीनसिः** । अन्यथाऽनुपपत्त्या **आह्वास्मान्नेवेति** ।

३५ विधानादित्यस्य कल्पते इत्यत्रान्वयः । तस्य तत्र तत्वस्य सत्वाभावदाह । **जन्मान्तरेति** ।

**आदिना** तद्दृष्टादिपरिग्रहः । **तन्निमित्तेति** बहुव्रीहिः । **अनुष्ठितमिति** । सूचितं प्रयत्नमाह । **पुरुषेति** । वर्त्रंतरमादायान्यथासिद्धिस्तु नेत्याह । **न चेति** । एतेनेंद्रियार्थप्रसंगशब्देन देशाभिशापौ लक्ष्येते । **स्वकार्यत्वादिति** । तत्रापि तदर्थं तृतीयग्रहणमिति **शूलोक्तमपास्तम्** । **उपसंहरति** । **तस्मादिति** ।

एवं साधितेऽर्थे साधकांतरमप्याह । **तथा चेति** । **विहितं** नित्यं नैमित्तिकं च । **निंदितं** ५ निषिद्धं सुरापानादि । **इंद्रियार्थेषु** तद्विषयेषु अविहितत्वेषु संस्कृतभोजनचंदनानुलेपनादिषु । **प्रसंगश्चा**सेवाविषयाभिलाषपरतेति यावत् । प्रायश्चित्तीयते । मत्वर्थेनंताद्भृशादित्वात् क्यङ् । एतेन प्रायश्चित्तमेति इच्छति वे व्यत्ययो बहुलमिति इयङ् प्रत्यय इति तदुक्तमपास्तम् । शिष्टस्याक्रियाप्रतिषिद्धस्य सेवनामिति द्वैविध्यम् । **गौतमोक्तं** तु प्रायिकमिति न विरोधः । **नर** इति वचनं चातुर्वर्ण्याधिकारार्थमिति यदुक्तं खंडयति । **नर इति** । उभयत्रेति भावः । एतेन १० वैदिकांशमेव प्रायश्चित्तं न चंडालादीनामित्यपास्तम् । **तस्मादिति** ।

द्वितीयपद्यार्थमाह । **तस्मादिति** । साकांक्षत्वात्पूरितमिदम् । तेनेत्यस्यार्थः **कृतेति** । **इहेति** लोकपरम् । अन्यथा नैर्कल्पात् । तच्च स्मृत्यंतराद्युपलक्षणं विशुद्ध्येत्यत्रान्य इत्याह**हेति** । एवमित्यस्यार्थः **प्रायश्चित्तेति** । तात्पर्यार्थमाहैवं **चेति** । **एवं वदता योगिना** चेत्यर्थः । **अधिकार इति** । तद्रूपाधिकार इत्यर्थः । तत्र अनुष्ठीयमानप्रायश्चित्ते । अस्यादृष्टचरत्वनिरासायाह । १५ **जातेष्टीति** । 'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते' इति विहितेष्टौ पुनत्वादिफलवदित्यर्थः"। तथा च तत्परिहारस्याप्युपस्थितत्वात्तद्वत्संवलिताधिकार एव । तथा च **जाबालिः**

"क्षयं केचिदुपात्तस्य दुरितस्य प्रचक्षते । अनुत्पत्तिं तथैवान्ये प्रत्यवायस्य मन्वते ॥

"नित्यक्रियां तथैवान्ये अनुषंगफलां श्रुतिमिति "। इत्ये**तावता** एतावन्मात्रेण । **कामेति** प्रायश्चित्तं कामरूपाधिकार एवेत्याशंक्येत्यर्थः । **न चेति** । न हीत्यर्थकमिति । शेषमाह । २० **यस्मादिति** । **मनुमाह** । **चरीति** । अनिष्कृतैनस इति छेदः । एवं च पापिनः प्रायश्चित्तं नित्यं नैमित्तिकं काम्यं च । अतो विकल्प्यंगादपि पापस्य नाशः । किंत्वल्पस्यैव न तु समग्रस्य । एवं च प्रधाननिष्पत्तावंगानिष्पत्तावपि न प्रधानावृत्तिरिति बोध्यम् ॥ २१९ ॥ २२० ॥

## याज्ञवल्कीये २२१ श्लोकः ।

मि. पृ. २३६. तदेव मूलकृदप्याहेत्याह । **प्रायश्चित्तेति** । **कष्टानित्यादेरर्थः क्लेशे**- २५ त्यादि ॥ २३६ ॥

## याज्ञवल्कीये २२२।२२३।२२४।२२५ श्लोकाः ।

'महानरकेति' 'संजीवनेति' च समाहारद्वंद्वः । घोरैर्भयंकरतदपूर्वैरन्विता इत्याद्यर्थः । ननु संज्ञाभेदोक्तावपि स्वरूपभेदो नोक्त इति कथं तद्विवरणमत आह । **अन्वर्थेति** ।

**तामिस्रो**ऽधकारवान् । **लोहशंकुः** सूचीभेदनम् । **महानिरयः** । महती सर्वप्रकारा पीडा ३० यत्र । **शाल्मलिः** शाल्मलिकंटकैस्तोदनं यत्र । **रौरवः** शब्दवेधो यत्र । **कुड्मलं** कलिकारूपेण तोदनं यत्र । **पूतिमृत्तिकं** पुरीषादि । पापक्षय एव । किंतु वचनापाद्दताधमृतिका यत्र । **कालसूत्रकं** कुलालचक्रच्छेदनं यत्र ॥ २२२ ॥

**संघातः** अत्यंतसंवृत्तदेशे बहूनामवस्थानं। **लोहितोदं** रुधिरमेवोदकं यत्र। **सविषं** विषबहुलम्। **संप्रपातनं** सम्यक्प्रपतनं यत्र। **महानरकः**। तप्तभूमिवर्त्मनाऽऽगमनं यत्र। **काकोलः** काकैर्भक्ष्यते यत्र। **संजीवनं** यत्र संजीव्य पुनः पुनर्व्यापाद्यते। **महापथः**। महामार्गकृतपीडा यत्र ॥ २२३ ॥

५ **अवीचि** दाहो महान्यत्र। **अंधतामिस्रं** निबिडांधकारो यत्र। **कुंभीपाकः** कुंभ्यां पाको यत्र। **असिपत्रवनं** असिरूपपत्राणां वनं समूहो यत्र। यदीयपत्रैर्वर्ष्म विदार्यते। **तापनं** अग्न्यादिदाहो यत्रेति बोध्यम् ॥ २२४ ॥

**घोर**पदार्थमाह। **भयमिति** ॥ २२५ ॥

## याज्ञवल्कीये २२६ श्लोकः।

१० **वक्ष्यमाणैरिति**। 'वक्ष्यमाणलक्षणैरिति' पाठे वक्ष्यमाणस्वरूपैरित्यर्थः। **कामतः**। अ इति प्रश्लेषेणाह। **न काम इति**। पूर्वानुषंगेणान्वयः। तथा च पूर्वान्वयीदमिति सूचितं। **त्वर्थ**माह। **किंत्विति**। तत्र कामतः कृते पापे "एतेन कामतः कृते पापे तैरिह व्यवहार्यो भवतीति" **कल्पतरूक्तम्**। अज्ञानकृतपापप्रायश्चित्तेन कामकृतपापनाशो न किंतु व्यवहार्यतामात्रवचनात्। यद्वाऽकारप्रश्लेषाद्यथोक्तप्रायश्चित्तेन कामतोऽपि भावेऽपि व्यवहार्यो नेति **शूलोक्तं** चापास्तम्। १५ उक्तयुक्तेः।

असंगत्याभासं परिहरति। **अत्र चेत्यादिना**। **तुल्यत्वेति** तुल्यफलत्वेत्यर्थः। बुद्धिपूर्वं पूर्णमुक्ताहा**बुद्धीति**। **अधिगतः** बाधितः। उपदिष्ट इति यावत्।

नन्वस्तु तुल्यफलत्वं तथापि नयोरव्यभिचाराभावेनावश्यसत्तायास्तत्राभावेन कथं तत्सांगत्यमत आह। **किंचेति**। बलात्कारनिरासायाह। **स्वतंत्रेति**। तस्य प्रवृत्तिरित्यर्थः। ज्ञानादेः २० प्रवृत्तिकारणत्वादिति भावः। **अविनाभावो** व्याप्तिः। ननु स्वतंत्रप्रवृत्तेरपि नोभयानियतत्वं तयोरविनाभावस्यैवासत्वेनान्यतराभावेऽपि तत्संभवादित्याशयेनाह। **न चेति**। **कामनाभावादित्य**कारप्रश्लेषः। यतः बलात्कारस्य प्रवृत्तिहेतुत्वात् चौरादिज्ञानं सुस्कामनमेवेति भावः। अन्यत्र व्यभिचारमाह। **यस्त्विति**। अत्रेच्छा शुष्कपातविषया ज्ञानं तु कर्दमविषयामिति भेदः। **वास्तवेति**। शुष्कविषयकज्ञानाभावात्तद्विषयकामनायाः सत्या अपि असत्कल्पत्वं प्राग्वत्। यद्विषयमवास्तव-

२५ मि. पृ. २३७. ज्ञानं तद्विषयेच्छास्त्येवेत्यर्थः। एवमन्यत्राप्याह। **प्रसंगादेवमिति**। **फलेति**। प्रारब्धकर्मणां भोगादेव क्षयादिति भावः। **यथेति**। यत इत्यादि क्रमते प्रवर्तते न तदपेक्षेति यावत्। **तत्रेति**। "अथ खल्वयं पुरुषः पापेन कर्मणा लिप्यते यथैतदयाज्ययाजनमभक्ष्यभक्षणमवद्यवदनाशिष्टस्याक्रियाप्रतिषिद्धसेवनमितीति" तदादिः। **'पाप्येनेति'** पाठे गर्हणीयेनेत्यर्थः। **'शिष्टस्येति'** विहितस्याकरणमित्यर्थः। **मीमासंते** विचारयंति। पूर्वपक्षमाह। **न कुर्यादिति**। ३० **न हीति**। फलोपभोगमंतरेणेति भावः। अपरं मतं सिद्धांत इत्यर्थः। **पुनःस्तोमाख्यो** यागः प्रायश्चित्तरूपः। एवमग्रेऽपि। **यजत इति**। अभिशुताभिशस्यमानं याजयेदिति च बोध्यम्। पुनः पुनरपि प्राप्तः सवनमाध्यंदिनसावनसायंसवनसाध्यकर्म प्राप्नुवंतीत्यर्थस्तदाह। **सवनेति**। तथा च पुनः स्तोमादीनां प्रायश्चित्तानां श्रुतौ दर्शनात्पापोत्पत्तिवत्तन्नाशस्यापि शास्त्रैकगोचरत्वाद्युक्तैव

निष्कृतिरिति कर्तव्यमेव प्रायश्चित्तमिति भावः । मात्रपदेनोक्तार्थे प्रामाण्यनिरासः । प्राशस्त्ये एव तात्पर्यात् । **रात्रीति** "प्रतितिष्ठंति ह वा य एता रात्रीरुपयंती"त्यत्र प्रतिष्ठारूपफलवदित्यर्थः । 'उपस्थितामिति' **न्यायादिति** भावः । न्याय्यत्वादिति प्रायश्चित्तस्यैवाभावादित्यर्थः ।

हेत्वेसिद्धिं परिहरति । **तदेति** । अवेत्यत्रान्वयः ।**अनभिसंधिरनिच्छा** । **प्रमाप्य** हत्वा । भृग्वग्निपतनादिकं तु तत्रापि प्रायश्चित्तमस्तीत्याह । **भृग्वग्नीति** । **चेन** स्मृत्यंतरस्यापि ५ समुच्चयः । तथाहि

"यः कामतो महापापं नरः कुर्यात्कथंचन । न तस्य शुद्धिर्विज्ञेया वन्हौ प्रपतनादृते ॥
"शरीरं न दहेद्यावत् ब्रह्महा पापकृत्तमः । तावत्तस्य न शुद्धिः स्याद्भगवान्मनुरब्रवीत् ॥
"प्राणांतिकं तु यत्प्रोक्तं प्रायश्चित्तं मनीषिभिः । तच्च कामकृतं प्राप्य विज्ञेयं नात्र संशयः॥"

**इत्यंगिराः** । १०

"इयं विशुद्धरुदिता प्रमाप्याकामतो द्विजम् । कामतो ब्राह्मणवधे जीवतो नास्ति निष्कृतिरिति॥" **कालिकापुराणे** इति ।

उक्तवचनद्वयगतिं क्रमेणाह । **यत्त्वित्यादि** । शेषमाह । **शुद्धीति** । अन्यथा विरोधः स्पष्ट एवेति भावः । ननु पूर्वं द्वादशवार्षिकाद्यवभृथस्नानांतानां त्रयोदशः प्रायश्चित्तानामुक्तत्वात्कथं तस्या एव परमर्शोऽत आह । **सर्वेति** । तेषामुत्सर्गतः प्रधानपरामार्शित्वात् । तस्या एषादावुक्तत्वाद्विकल्पे- १५ नाग्रिमपक्षाणामनुकल्पत्वेनोक्तत्वा प्राधान्यात् । अत एवैकवचनसंगतिः । **भवदेवोऽप्येवं** । **एतेन** प्रागुक्तसर्वस्य तेन परामर्शात्तत्र मरणास्याप्युक्तत्वाच्चिंत्यमिदम् । तस्माद्व्यवहार्यत्वरूपनिष्कृत्यभाव- परं तत्सर्वं न तु पापनिष्कृत्यभावपरम् 'कामतो व्यवहार्यस्त्विति' मूलानुरोधादिति मूलोक्तमपास्तम् । उक्तयुक्तेः । उक्तस्मृत्यंतरानुरोधाच्च । ज्ञानकामाभ्यां कृते प्रायश्चित्ताभावः । केवलकामकृते तु मरणमिति **श्रीकरोक्तं** तु न युक्तं । तयोरव्यभिचारस्य प्रतिपादितत्वात्पूर्वं तस्या एव मुख्यत्वेनोक्त- २० त्वादाह । **द्वादशेति** । **मात्रं** कार्त्स्न्ये । **आदिना** तद्द्वैगुण्यादिपरिग्रहः । पुनस्तत्रैव विरोध- माशंकते । **नन्विति** । उभयत्र कामकृते च ज्ञानकृते तारतम्यमाह । **यत्र त्विति** । **पित्रिति** मातृपितृयोनिसंबन्धगामीत्यर्थः । इदमग्रे स्फुटीभविष्यति । आर्षत्वादानङ् पूर्वनिपातश्च न । **आदिना** पितृत्रित्यादिनोक्तानुपातकसंग्रहः । मात्रव्यवच्छेद्यमाह । **न पापेति** । शास्त्रप्रामाण्यादिति भावः । तदेव विशदयति । **द्वे हीति** । **इतरेति** । नरकोत्पादिकेत्यर्थः । २५ एतेन शक्तेरैक्ये कथं विभाग इत्यपास्तम् । उपसंहरति । **तस्मादिति** । पूर्वपक्ष्यभिमतं खंडयति । **यत्त्विति** । नन्वेवं कामतः कृते प्रायश्चित्तं न स्यादत आह । **कामकारेति** । कामस्य कारः करणं तेन कृते इत्यर्थः । यद्वा कामकारः कामकर्ता कामी तेन कृते इत्यर्थः । इच्छापूर्वक- करणे इति यावत् । **अपिना** पूर्वसमुच्चयः । **एके** मुख्याः सिद्धांतिनः । उभयथाऽपि व्यतिक्रमे प्रायश्चित्तं कर्तव्यमिति तात्पर्यम् । अस्य तत्वे हेतुमाह । **श्रुतीति** । "इंद्रो यतीन् शालावृकेभ्यः ३० प्रायच्छत् । तमश्लीला वागभ्यवदत् । भ्रूणहन्निति । स प्रजापतिमुपाधावत् । तस्मा अयमुपहव्यं प्रायच्छदित्यादि" **श्रुतीत्यर्थः** । **अश्लीला** निष्ठुरा इंद्राय बुद्धिपूर्वकं श्वभ्यो यतीन् वादयितुं दत्तवते प्रजापतिरुपहव्याख्यं कर्म प्रायश्चित्तं दत्तवानित्यर्थः । अतः कामकृतेऽपि प्रायश्चित्तमस्तीति भावः । अपिना स्मृत्यंतरसमुच्चयः । तच्चाकामतः इति वक्ष्यमाणादि **अपिनाऽन्यसमुच्चयः** ।

पूर्वपक्ष्यभिमतं निराचष्टे । **न पुनरिति** । । उक्तहेतोरिदमपि पतनीये एव चेदपतनीये कामतः कृते कथमत आह । **अपतेति** । **अपिना** प्रागुक्तस्यैव समुच्चयः । **वेदाभ्यासः** कामतप्रायश्चित्तापेक्ष-लघुप्रायश्चित्तोपलक्षणं प्रायश्चित्तांतराणामपि विधानात् । **पृथग्विधैः** भिन्नैः । प्रायश्चित्तांतरैः । यद्यपि 'मुह वैचित्य' इति--धात्वर्थानुसारादज्ञानमात्रं मोहः । यथा शूद्रस्य ब्राह्मणीं मोहाच्छलत
५ इत्यादौ तथाऽप्यत्र कामत इत्युक्तेर्न तस्य ग्रहणमपि तु धर्ममूढत्वमेतेन मोहशब्देन देवेंद्र-बुद्धिपूर्वो व्यतिक्रमः । "उच्यते पंडितैर्नित्यं पुराणेशांशपापन" इति सांकेतित**भविष्यपुराणोक्त-मोहग्रहणा**मित्यप्यपास्तम् । न कामत इत्यादिप्रागुक्तमपि मरणांतिकप्रायश्चित्तभिन्नविषयमिति ध्वनयन् पतनीयेऽपि **गौतमोक्ते** विशेषमाह । **पतनीयेऽपीति** । **कर्मणि** प्रागुक्तान्यतमे । **फलांतरेति** । इह लोके फलाभावात्पारलौकिकमेव फलं कल्प्यं । तच्च पापापनोदनमेवेति भावः ।
१० **नास्येति** । अश्वमेधावभृथादिषु संभवत्स्वपि । **अस्यास्मिन्**जीविते इह लोके । **प्रत्यापत्तिः** शुद्धिर्नास्तीत्यर्थः । मृतस्य तु कल्मषं निर्हण्यते तेन पुत्रादिभिः संस्कारादि कर्तव्यमिति भावः । अन्ये तु पूर्वसूत्रं तन्निवृत्त्यर्थं मन्वते । प्रत्यापत्तिः पुत्रादिभिः पित्रादिभावेन संबंध इति **हरदत्तः** । **छागलेयोऽपि**

"प्रायश्चित्तमकामानां कामावाप्तौ न विद्यते । उपपातक एव स्यात्तथा चात्मोपघातने॥" । इति ।
१५ कामावाप्तौ ज्ञानपूर्वपापनरकोपभोगनिवारकं तन्नास्ति उपपापात्मघातियोस्तु ज्ञानपूर्वत्वे-ऽप्यस्त्येव । आत्मघातार्थं विषभक्षणादिके कृते यदि जीवति तदा तदस्ति । अथ मृतस्तदा तद्धितेच्छुना कार्यमित्युभयथापि तदस्तीति न विरोधः । तथा च कामकृते मरणद्वैगुण्याचरणेनेह व्यवहार्यत्वस्य नित्यकर्मानुष्ठानप्रतिबंधकपापशक्तिनिरासस्य च सिद्ध्या कर्मस्वधिकाराद्विहित-कर्मकरणेन प्रत्यवायाभावात्पापांतरानुत्पत्तिरिति तत्सत्ताप्रतिपादकवचनाशयः । नरकोपभोगहेतु-
२० भूतपापशक्तेरनपायात्तादृशप्रायश्चित्ताभाव इति नास्तीति वचनाशय इति तात्पर्यम्॥ २२६ ॥

## याज्ञवल्कीये २२७ श्लोकः ।

व्यवहितसंगतिमाह । **निषिद्धाचरणादिकं** । तद्विशेषमाह । **यद्वापेति** । तस्य तत्त्वायाह । मि. पृ. २३८ **कारणांतरेति** । व्यापारांतरेत्यर्थः । अन्यथा तु न तत्वमिति भावः । 'ब्रह्मभ्रूणेति' भूते क्विबित्याह । **हतेति** । **निषिद्धेति** । यस्य या सुरा निषिद्धा तस्या इत्यर्थः । अनेनान्यत्र दोषा-
२५ ल्पत्वं सूचितम् । एवमग्रेऽपि । विशेषणफलं सर्वत्र बोध्यम् । **सुवर्णस्येति** । अशीतिरक्तिपरिमिता-न्यूनस्वर्णस्येत्यर्थः । अपहरणं च समक्षं । परोक्षबलाच्चौर्येण वा । **गुरुतल्पेति** । गुरुरत्र पिता । ननु तल्पशय्यायां प्रसिद्धेः कथं भार्यालाभोऽत आह । **तल्पेति** । प्रसिध्यप्रसिद्धिनिबंधनः शक्तिर्लक्षणा-व्यवहार इति मतेनेदम् । वस्तुतस्तु तत्रापि शक्तिरेव "तल्पं शय्याऽट्टदारेष्विति" **कोशादिति** ( **अमरकोशे** ३।४।३४६. ) बोध्यम् । गमनं चात्र रेतःसेकपर्यंत चेन्महापातकं तयोरर्वाङ्नि-
३० वृत्तौ तनुपातकम् । महशब्देन कर्मधारय इत्याह । **महदिति** । ततोऽत इनीतीनिरित्याह **तद्यो-गीति** । ननु संज्ञाकरणस्य न किंचित् फलमत आह । **लाघवार्थमिति** । लघ्वर्थं संज्ञाकरण-मिति **महाभाष्योक्ते**रन्यथा सर्वेषां विशिष्य तत्र तत्रोपादाने गौरवं स्यादिति भावः । **एकशेष-**बोध्यसाहित्यनिरासायाह । **प्रत्येकमिति** । एतत्तत्त्वमग्रे तत्रैव स्फुटीभविष्यति । **तदाहेतीति** । इत्यादिवक्ष्यमाणरीत्येत्यर्थः ।

न्यूनतां निराचष्टे । **तथेति** । **प्रकारेति** । सदृशेत्यर्थः । **आदिना**ऽनुमंत्रादि । एवमग्रेऽपि । न तु तेषां स्वरूपमतः क्रमेणाह । **अन्वित्यादिना** । **च**स्त्वर्थे । उपरोधे निमित्तं सूचयन्नाह । **अमित्रमिति** । नन्वेतस्य दुष्टत्वे किं बीजं तादृशव्यापारस्य तत्राभावादत आह । **अत एवेति** । तस्य तत्सदृशत्वादेवेत्यर्थः । **हिंसेति** । हिंसाजन्यफलेत्यर्थः । एवमग्रेऽपि । **कस्य-चित्त**दभावशंकानिरासायाह । **सर्वेषामिति** । निर्धारणषष्ठीयम् । **तत्र** तर्हि तस्मिन्विषये वा । ते सर्वे हंतृभिन्नास्तस्य तत्त्वस्यान्यतः सिद्धत्वात् । **स्वर्गेति** बहुव्रीहिः । **कर्मास्विति** विषयसप्तमी। तत्र तारतम्यमाह । **यो भूय इति** । भूय इति अव्ययमतिशयमित्यर्थकम् । **तत्र** प्रयोजकादीनां मध्ये । **तत्र** तेषां त्रयाणां मध्ये । आदिनाऽधीष्टादि । **तत्र** च उपदेष्टृविषये । ५

उभयत्र शंकते । **नन्विति** । अनुमननस्य संप्रत्यपर्यायस्यानुज्ञानस्य प्रवृत्युत्तरव्यापार-रूपमनुमननांतरमाह । **न चेति** । **अहेतुत्वादिति** अन्वयव्यतिरेकव्यभिचारादिति भावः । अत एवाह । **व्यर्थेति** । **यत्र हीति** । स्वयं मनसा प्रवृत्तोऽपि भृत्यादिर्यत्र स्थले राजादिपारतंत्र्याद्य-दन्यतरं भयं ततः शिथिलप्रयत्नतः सान्नित्याद्यर्थः । अत्रान्वयव्यतिरेकयोः सत्वात्तत्वमिति भावः । एवं चैतत्परमेवेदं न सार्वत्रिकमिति बोध्यम् । १०

निमित्तकर्त्तारमाह । **तथेति** । आक्रुष्टः । निर्भर्त्सितः । मन्यूत्पादने निमित्तांतरमाह । **तथेति** । अन्वयव्यभिचारेणातत्वमाह । **न चेति** । **कस्यचित्**शांतस्य विरक्तस्य **पुरुषेति** । तथा च मन्यूनां नानात्वेन मन्युसामान्यं प्रति आक्रोशाद्यन्यतमस्य हेतुत्वासंभवान्मन्युविशेषं प्रति तस्य हेतुत्वस्यावश्यं वाच्यत्वेन पुरुषभेदेनापि भेदं विवक्ष्य तत्पुरुषे विजातीयमन्युं प्रति तस्य हेतुत्वमिति नोक्तदोष इति तात्पर्यम् । तदाह । **येऽल्पेति** । एवमेतेषां साम्येन फलसंबंधे उक्ते प्रायश्चित्तसाम्यं स्यादत आह **तेषां चेति** । **गुरुशब्दः** सर्वत्र धर्मपरः साक्षात्कर्त्रंशे उक्तम-प्यापस्तंबीयं युक्तितौल्येनाप्याह। **यो भूय इति**। ततः अनुग्राहकात्।तत्रापि तारतम्यमाह । **प्रयोजेति** । उक्तमेव व्यतिरेकमुखेन द्रढयति । **यदीति** । **प्रयुक्तिः** प्रेरणा । **स्थपति**र्मांडलिकः । स च तडागकर्त्ता च तत्खनिता तदादीनामित्यर्थः । **जैमिनि**न्यायमाह । **शास्त्रेति** । **देवकुलं** देवालयः । **अस्वर्गेति** । स्वर्गकामनारूपाधिकाराभावादित्यर्थः । प्रकृते वैलक्षण्यमाह । **अत्र पुनरिति** । **प्रयोजकात्** त्रिविधात् । अत एवाह । **प्रयोजेति** । तद्विना तदप्रवृत्त्या तस्यांतरंगत्वमत्र तु नैवमिति तत्वम् । इति भावः । अत एव लघुत्वमपि मात्रमवधारणे येनातिप्रसंगः स्यात् । किंत्वन्यथासिद्धत्वघटितेन तेनेति प्रकृते तत्र तयोरन्यथासिद्धत्वान्न तत्वमिति । १५ मि० पृ० २३९ २० २५

नन्वेवं तदीयपूर्वभावित्वस्य का गतिरत आह । **कारणेति** । **तथेति** । पूर्वेत्यर्थः । तदे-वोपपादयति । **यदिति** । स्वरूपातिरिक्तत्वमपि व्यापारविशेषणम् । अत्रोदाहरणमाह । **यदीति** । **सोम**स्तदाख्यो यागः । तदेवाह । **न हीति** । प्रसंगात्तुल्ययुक्त्याऽन्यदप्याह । **अनेनैवेत्यादि** । **कूपखेति** बहुव्रीहिः । उपसंहरति । **अत इति** । अन्यदपि तद्वदाह । **तथेति** । **गोरिति** पूर्वा-न्वयि । सर्वत्र निमित्तसप्तमी । संप्रदानस्याधिकरणत्वविवक्षया सप्तमी । योददत्स इत्याद्यन्वयः । दाहेति तत्सिद्ध्यर्थं दाहादिरूपं प्रयत्नैरुपकुर्वतां तत्र विद्यते इत्यर्थः । तत्रापि शेषमाह **तच्चेति** । औषधदानरोगनिदानयोर्यो निपुणः स तद्विषयमित्यर्थः । **दर्शित इति** । व्यवहाराध्याये ३०

इति भावः । अन्यदप्याह । **यत्रेति** । **तुरुक्तवैलक्षण्ये** । मन्योर्निमित्तभूतमाक्रोशनादिकमित्यर्थः । दोषिपुरुषस्य तथा करणे बीजमाहो**न्मेति** । **अकारणमिति** क्रियाविशेषणम् । अन्यदप्याह । **तथेति** । **आक्रोशकेति** बहुव्रीहिः । **प्रहृत्येति** दैवात्तदानीं मरणाभावेन स्थित इति शेषः । **मरणादिति** । कालांतरमरणादित्यर्थः । अत्र मत्कृतप्रहारे उद्दिश्येति आक्रोशकादिक-
५ मुद्दिश्य कोपपूर्वकप्रहारवान्तेन धनं दत्वा तोषितः सन् पश्चात् जनान् श्रावयेत्तदा तस्मिन्कालांतरे मृते तस्य न दोष इत्यर्थः । 'हत्वेति' पाठे कुपित आत्मानं खड्गादिना प्रहृत्य स्थितो धनं तत्त्वेति शेषेण तोषित इत्याद्यर्थः । तद्वत्तेनापि श्रावणं कर्तव्यमित्याह । 'तयोरिति' कर्तुः शेषत्व-
मि. पृ. २४० विवक्षया षष्टी । ताभ्यां आत्मघातकाक्रोशकाभ्यां तस्मिन्कृते सति तस्य न दोष इत्यर्थः । 'द्वयोरुच्चारणे कृते' इति पाठेऽप्येवं बोध्यम् ।

१० नन्वेतेषामुत्तरोत्तरं दोषाल्पत्वं यथोक्तं तथा प्रायश्चित्तमपि वाच्यं मूलानुक्तत्वा**दत आहैतेषां चेति** । तत्प्रसंगस्य तत्रैव सत्वादिति भावः । **विशेषमिति** जातावेकवचनम् । ॥ २२७ ॥

## याज्ञवल्कीये २२८ श्लोकः ।

एवं महापातकान्युक्त्वा तत्सदृशान्यनुपातकानि वक्तुमुद्देशक्रमेणादौ तदाह । **ब्रह्मेति** । **गुरूणामिति** । पित्रादीनां सर्वेषामित्यर्थः । बहुवचनबलादिति भावः । अधेरर्थमाहा**धीति** ।
१५ निंदार्थकाधिक्षेपपादार्थमाहा**नृतेति** । ज्ञाताज्ञातमिथ्यापतनीयपापाभिशंसनमित्यर्थः । तत्र मानमाह । **गुरोरिति** । अत्र जातावेकवचने क्षेपशब्द एवोक्तार्थकः । **अध्यधीति** उपर्युपरीत्यर्थकमिति तु **मदनः** । विशेषमाहै**तच्चेति** । **लोकेत्य**नेन स्वनिरासः । **दोषमिति** । परेषां दोषं बुध्द्वा समाख्याता पूर्वो न स्यादित्यन्वयः । तथा च दोषबाहुल्येन निमित्ते तत्रापि महत्वं कल्प्यमिति प्रथमत एव दोषकथनं निषिद्धमिति तत्रैव तत्समप्रायश्चित्तमिति भावः । नास्ति एवं पर-
२० लोकाभावादिब्राह्मणविषये महापतकस्यैवोक्तत्वादाह । **बाह्मेति** । **असच्छास्त्रेति** । **चार्वाकादि**शास्त्रेत्यर्थः । चार्थसमुच्चये तत्ववारणायाह । **प्रत्येकमिति** । चस्य त्वन्यथाऽप्युपपत्तेरिति भावः । अविरोधमाह । **यत्पुनरिति** । **कथंचित्वं** भरणान्वायि ॥ २२८ ॥

## याज्ञवल्कीये २२९ श्लोकः ।

**विड्वराहो** ग्रामसूकरः । **शेषेषु** प्रागुक्तषडन्येषु । **तेनैव मनुनैव** । 'जैह्ममिति' पाठे
२५ उद्गात्रादित्वादञ् । जेह्ममिति पाठे ब्राह्मणादित्वात् ष्यञ् । अस्यादृष्टचरत्वानिरासायाऽऽह । **अस्ति चेति** । **निमित्तेति** । उद्देश्येत्यर्थः । **हविरिति** । "यस्योभयंहविरार्तिमार्छेदैंद्रं पंचशरावमोदनं निर्वपेदि" त्यत्र तथा सत्येकहविर्नाशेऽपि तत्सिद्धिरिति भावः । **द्वयेति** । द्वयस्य निष्पादकेत्यर्थः । **समुत्कर्षे** इति निमित्तसप्तमीत्याह । **समुदिति** । आत्मन इत्यादिः । **अचतुर्वेदे** एव स्वस्मिन्सेवनं तन्मुखचुम्बनं ॥ २२९ ॥

३०

## याज्ञवल्कीये २३० श्लोकः ।

**स्त्र्यादिद्वंद्वं** कृत्वा पुनरश्वादिद्वंद्वः । तस्य च हरणमित्यत्रानुषंगः । उक्तयुक्त्यैवाऽऽह ।
मि, पृ. २४१. **ब्राह्मेति** । **एतादिति** । सर्वं प्रत्येकमित्यर्थः ।

## याज्ञवल्कीये २३१ श्लोकः ।

**सखीति**बहुवचनांतानां द्वंद्वः । गमनमित्याध्याहारः । विशेषपरत्वे बीजमाह । **सत्वेति** । व्यवहारे मूलोक्तिरेवेयम् । **तत्रैव** उत्तमजातीयायामेव तस्यां । **स्वयोनिरिति** बहुव्रीहिः । एकोदर-प्रसूतेत्यर्थस्तदाह । **भगिनीति** । **चांडालीति** । न तु रजक्याद्यास्तत्र प्रायश्चित्तस्य स्वल्पत्वात् । इदमप्युपलक्षणं । तथा **चांगिराः** ५

"चंडालः श्वपचः क्षत्ता सूतो वैदेहकस्तथा । मागधायोगवौ चैव सप्तेतेऽत्यावसायिनः"॥ इति ।

प्राग्वदाह । **प्रत्येकमिति** । विशेषमाह**तच्चेति** । प्रायश्चित्तस्य गुरुत्वादिति भावः । स्त्री-ग्रहणेन जायाभिन्नास्वपि निषेध इत्याहुः । गुरूपभुक्तसाधारणास्त्रीगमने न गुरुतल्पगत्वदोषः । तथा च **व्याघ्रपादः**

"जात्युक्तं पारदार्यं च कन्यादूषणमेव च । साधारणास्त्रियो नास्ति गुरुतल्पत्वमेव चेति ॥" १०
पौनरुक्त्यं परिहरति । **सगोत्रेति** । तथा च **हारीतः** "मातृदुहितृस्नुषागमनमित्यतिपातकानि" ।

"अतिपातकिनस्त्वेते प्रविशेयुर्हुताशनम् । न ह्यन्या निष्कृतिस्तेषां विद्यते हि कथंचन" ॥

इति प्रागुक्तसर्वतात्पर्यमाहात्र **चेति** । तन्निमित्तपरिगणनप्रकरणेत्यर्थः । **उपेति** अतीत्यर्थः । एवमग्रेऽपि ।

सर्वत्र शंकते । **नन्विति** । हेत्वसिद्धिमाह । **न चेति** । एवमात्रशब्दौ मिथो व्यावर्तकौ । **न** १५ **मेति** । येन तत् बलाद्दोषगौरवं कल्पेतेति भावः । **किंत्विति** । एवं च न तत्प्रायश्चित्तं किं त्वदितिनोक्तदोष इति भावः । तथा सत्येतेषामपि महत्वेन महापातकत्वांतर्गतत्वेन भेदोक्ति-रनुपपन्नेत्याह । **यत इति** । ननु तर्हि किंतदेव प्रायश्चित्तमत्रानुष्ठेयमित्यत आह । **तच्चेति** । **किंचिदिति** । इदमग्रे स्फुटीभविष्यति । **आदिना** ऋषिसमो ब्राह्मण इत्यादि । ननु सति तात्पर्येऽतस्तथैवास्तामत आह । **महत इति** । अविरोधमाह । **एवं सतीति** । ततोऽन्यूनत्वे सति २० इत्यर्थः। **ब्रह्मोज्झता** अधीतवेदस्यानभ्यासेन विस्मरणं नित्यस्वाध्यायविधेस्त्यागो वेति **मेधातिथिः**। कौटसाक्ष्यं समुत्कर्षादन्यत्रापीति सः । गर्हितानद्ययोरिति पाठे **गर्हितं** पलांड्वादि । **अनद्यममेध्यादीति स्मृतिमंजर्यां**। गर्हितं शास्त्रानिषिद्धमपि लोके निंदितम् । अनद्यं लशुनादीति **तु कल्पतरुः**। गर्हिता-नाद्ययोरिति पाठे गर्हितं शास्त्रप्रतिसिद्धं लशुनादि । अनाद्यम् अमनस्तुष्टिकरं न भोज्यमेतन्मयेति संकल्प्य यद्भुज्यते तदपि अत्तुमनर्हत्वात् इति **मेधातिथिः** । **एवमिति** विकल्पविषये इति २५ भावः । अत एवाह । **यस्त्विति** । **अलीकेति** । असत्याभिधानेन चित्तसंक्षोभे इत्यर्थः । कन्या ते गर्भिणीत्येवमादिना निष्प्रयोजनो द्वेषः । कृच्छ्रस्यानेकविधत्वादाह । **द्वादशेति** । **चः** समुच्चये, मतिपूर्वेऽभ्यासे च तदाधिक्यात् ॥ २३१ ॥

## याज्ञवल्कीये २३२,२३३ श्लोकौ ।

समपदाभावादाह । **गुरुतल्पातीति** । अन्यत्रान्यशब्द इति **न्यायादिति**भावः । **स्वसार-** ३० **मित्यस्य** मध्यमणिन्यायेनान्वयः । **तनयां** स्वसुताम् । तत्र विषये पुंसि वा कार्य इति शेषः । तस्येतिपाठांतरं तदाह । **तस्येति** । पुनस्तस्यासत्वादाह । **प्रायश्चितीति** । मिथः समुच्चयस्या-

मि. पृ. २४२, न्यथाऽपि सिद्धेराह । **चेति** । स्त्रीपदं त्रिभिः प्रत्येकमन्वयि । **तत्सखी** भगिनी-

सखी । **धात्री** उपमाता । **साध्वी** पतिव्रता । **उत्कर्तनात्** तत्पूर्वकवधात् । विशेषमाह । **राज्ञीति । उपदेशादिति** । इदमग्रे स्फुटीभविष्यति । योगार्थस्यातिप्रसक्तत्वाद्रूढिमप्याह । **मात्रिति** । नन्वत्र मातृपदमनुचितं तत्र तस्य मुख्यत्वादन्यथाऽन्यत्रातिदेशो न स्यादत आहात्र **चेति । नारदीये** इत्यर्थः । यथा तत्र तत्वं तथाऽत्रापीति वचनव्यक्तेरिति भावः । विशेषमा-
५ **पंचेति न जात्विति** । व्याख्यातम् । **वधस्यैवेति । अत्रेत्यादि** दंडरूपस्येत्यर्थः । नन्वेवं ब्राह्मणे किंप्रायश्चित्तमत आहा**स्य चेति** । विप्रस्य प्रायश्चित्तरूपविषयमित्यर्थः । प्राग्वदाह । **अत्र चेति** । अतिदेशमध्ये इत्यर्थः । इदमग्रे स्फुटीभविष्यति ।

तुर्यपादं व्याचष्टे । **यदा पुनरिति** । तत्र लिंगाभावादाह । **वध एवेति** । एतेषां संज्ञाया अनुक्ते- **राहैतानीति । यथाह यम इति** । गत्वेत्यस्य यास्तासामान्यतमामित्यादिः । **मातृपितृयोनि-**
१० **संबद्धांगेति** । अत्र **हरदत्तः** "मातृसंबंधा मातृपक्षेऽर्वाक् पंचमात् भवाः । पितृसंबद्धास्तत्पक्षेऽर्वाक् सप्तमाद्भवाः । योनिसंबन्धा भगिन्यादयः । य एता भार्यात्वेनाधिगच्छति स मातृपितृयोनिसंबंन्धगः।" **स्तेनो** ब्राह्मणसुवर्णापहारी । **नास्तिकः** प्रेत्यभावापवादी । निंदितं प्रतिषिद्धं तत् बुद्धिपूर्वकं सातत्येन योऽनुतिष्ठति स निंदितकर्माभ्यासी । पतितान् पुत्रादीन्स्नेहादिना यो न त्यजति स पतितात्यागी । यस्त्वपतितानपि द्वेषादिना त्यजति सोऽपतितत्यागी । एते सर्वे पतिताः । पातकैः
१५ कर्मभिः परान्ये संयोजयंति तेऽपि तथेति । एतेषां च गुर्वधिक्षेपादितनयागमनांतानां । **तुल्यानीति** । 'कल्पनीति' पाठांतरं । न केवलं संज्ञाकृतं वैलक्षण्यं किं तु फलकृतमपीत्याह । **तथा चेति । पात- केषु** । महापातकसमेषु प्रागुक्तेषु । **सहस्रं** वर्षसंख्यया नरकमित्याद्यन्वयः । द्विगुणं वर्षसहस्र- मेव तुरीयं वर्षसहस्रस्यैव । यत्तु **विष्ण्वादिभिः** कल्पमन्वंतरचतुर्युगादेर्नरकोपभोगकालत्वमुक्तं तत्पातकतारतम्येन व्यवस्थितं ज्ञेयमिति भावः ॥ २३२ ॥ २३३ ॥

२०
## याज्ञवल्कीये २३४-२४२ श्लोकाः ।

मि. पृ. २४३. उपपातकत्वमविशेषात्सर्वत्रेति सूचयन्नाह । **गोपिंडेति** । लक्षणेति भावः । 'व्रात्यः संस्कारहीनः स्यादिति' **कोशो** विशेषपर इति सूचयन्ननति- प्रसंगायाऽऽह । **काले इति** । षोडशद्वाविंशतिचतुर्विंशतिपंचदशैकविंशतित्रयोविंशतिकवर्ष- रूपब्रह्मक्षत्रविडुपनयनकाले तदभाववानित्यर्थः । अत एव सावित्रीपतिता व्रात्या इति संगच्छते ।
२५ **गृहीतस्येति** । आत्मपितृपितामहादिभिरुत्तमर्णादित्यादिः । अविनिगमकत्वादाह । **तथा देवेति** । यज्ञाध्ययनप्रजारूपस्येत्यर्थः । ब्रह्मचर्याद्यकरणमपि **दैवऋणं अनेति** । अग्न्याधानाभाव इत्यर्थः । काम्यत्वाभिप्रायेणाशंकते । नन्विस्वंयागः । अयं भावः । यदाहवनीये जुहोतीत्यादिनाऽग्नीनां तत्र विनियोगः । न चाधानेन विना तेषां निष्पत्तिरित्यग्निषु प्रयुक्ताधानमपि प्रयुक्तमिति न स्वर्गार्थे नाधिकारांतरसंपत्यर्थं वाऽग्नीनादधीतेत्याधानं किं त्वग्निनिष्पत्त्यर्थमेवेति न विहिताकरणप्रयुक्त-
३० दोषसुवर्णाद्यनार्जकस्येवेति तद्वत्फलसत्वे एवाग्न्यर्जनमिति नित्यत्वाशयेन समाधत्ते । **उच्यते इति अस्मात्** । मूलोक्तदोषादेव वेदस्य नित्यत्वस्य प्रागुक्तत्वादाह । **नित्येति** । सत्यधिकारेऽग्नीनाद- धीतेत्यादिश्रुतय इत्यर्थः । अधिकारः कामना । **आधेति** नित्यादिः । **अपेति** निषिद्ध- विक्रयस्येत्यर्थः ।

सहोदरेत्यनेन भिन्नोदरनिरासः । तथा च **गौतमः** 'भिन्नोदरे च पितृव्यतनये तथा दाराग्निहोत्रसंयोगे न दोषः' । **परिवेदन इति** भिन्नोदरे सापत्नभ्रातरि दत्ते जनककुले ज्येष्ठभ्रातृसत्त्वे तस्य विवाहादौ परिवेत्तृत्वं न । नापि ज्येष्ठस्य परिवित्तित्वं । इदमथ द्व्यामुष्यायणदत्तकपरं द्व्यामुष्यायणे त्वस्त्येव दोष इति **दानहीरावली** । पितृव्यतनये इति तु देवरेणोत्पादितस्य भ्रातुः क्षेत्रजाः । पुत्रस्य विवाहादौ देवरपुत्रादेर्न परिवेत्तृत्वादिदोषः । नापि देवरपुत्रविवाहौ ५ क्षेत्रजस्येत्याशयकं । न यथाश्रुतपितृव्यपुत्राभिप्रायं परिगृहीतस्य तस्य दत्तपदेनैव संग्रहादपरिगृहीतस्य प्रसक्त्यभावेन निषेधाप्रवृत्त्या प्रतिप्रसवासंभवादिति दिक् । इयं च "षष्ठी चानादरे" इति षष्ठी । तमनादृत्येत्यर्थः । अग्रिमविशेषणद्वयफले तु स्फुटे एव । तथा च स परिवेत्ता परिविविदान इति चोच्यते । एवं ज्येष्ठायामनूढायां या कनिष्ठा विवाहिता साऽग्रेदिधिषू ज्येष्ठा तु दिधिषूः । एवमनाहिताग्नौ ज्येष्ठे कनीयानादधीतेत्यर्थः । धाता कनिष्ठः । ज्येष्ठः पर्या- १० हित इति बोध्यम् ।

भृतादित्यस्यार्थमाह । **पणेति** । पणपूर्वकमेव योऽध्यापयति तस्मादित्यर्थः । द्वितीयस्यार्थमाह । **पणेति** । तत्समेत्युपलक्षणं तदातिदेशिकस्यापि । कनीयसि भ्रातरि । तद्वान् परिवित्तिः । **निषिद्धेति** । धान्यवृद्धिजीवनमपि तादिति **मदनः** । लवणक्रियेत्यस्यार्थमाह । **लवणेति** । एतच्च वानप्रस्थभिन्नस्य । तस्य तु 'लवणं च स्वयंकृतमिति' **मनु**नोपदेशात् । स्त्रीशूद्रेति खंडेण १५ व्याचष्टे । **स्त्रिया इति** । अपिना अब्राह्मणीसमुच्चयः । आत्रेयी रजस्वला गर्भिणी अत्रिगोत्रोत्पन्ना चेति त्रिविधाऽऽत्रेयीत्यर्थः । इदमुपलक्षणम् । अग्निहोत्रिणी सवनस्था च या तद्भिन्नाऽपीति **मदनः** । तत्रानुपातकत्वात् । अत एवाहादीक्षितेति । अन्यायेति शास्त्रोक्तान्येत्यर्थः । **ब्रह्मेति** द्विविधस्येत्यर्थः । **आदिना** वेदनिंदनकृतजीवन अनिषिद्धविक्रयस्यापि पण्यस्याराजस्थापिताद्योपजीवनमिति **मदनः** । ग्रहणं स्यापि । **अयेति** सामान्यग्रहणं । स च दास्यार्थमिति बोध्यं । एवमात्मभार्या- २० विक्रययोरपि बोध्यम् । **असारेति** स्वर्णरूप्याभ्यामन्यादित्यर्थ । **नित्यार्थमिति** । अत्र विहितप्रायश्चित्तावश्यकत्वार्थमित्यर्थः । प्रायश्चित्तगौरवार्थमिति यावत् । तत्फलितमाहात इति । **जातीति** यथासंख्यमन्वयः । **आदिना** पतितादिगृहादिति । अरक्षणमपि तथेति **मदनः** । आरामपदार्थ-

मि. पृ. २४४. **माहोद्येति** । **विदेति** मिथ्यांतदोषख्यापनमपि तादिति बोध्यम् । तद्ध्वनयन्नाह । **न त्विति** । तस्य च तस्यैव च । परिविंदकस्यैव च शेषे षष्ठी । तु हि यतः । **अशिष्टे- २५ ष्विति** । अविहितेष्वनिषिद्धेष्वित्यर्थः । शास्त्राविरुद्धेषु शिष्टाहृतेष्विति यावत् । इदं च 'सम्यक्संकल्पजः कामः' ( आचारे ७ ) इत्यनेन प्रतिपादितं । **अपिना** देवताराधनाद्यर्थं गृहीतब्रह्मलोपस्य प्रायश्चित्तार्थं प्रक्रांतकृच्छ्रादिव्रतच्युतेः संकल्पात्मकव्रतस्य त्यागमित्याकरणान्यतररूपस्य तस्य च समुच्चयः शिष्टाप्रति पाठांतरं । **एवंरूपेष्वित्यनेन** मया भोजनव्यतिरेकेण जलं न पातव्यमित्यादिपरिग्रहः । **प्राप्त्यर्थमिति** । उपपातकत्वप्राप्त्यर्थमित्यर्थः । अतिप्रसंगभंगमाह । **न** ३० **त्विति** । तत्र स्नातकव्रतलोपे । अग्रेऽन्वयः । **स्नातके**ति "वेदोदितानां नित्यानां कर्मणां समतिक्रम" इत्यस्य पूर्वार्धं । सामान्यस्य विशेषपरत्वे मानमाहाद्यमिति । **तस्यैव** पाकस्यैव । ननु वैपरीत्यं कुतो नात आह । **क्रियेति** । **मात्रं** कार्त्स्न्ये । अद्यमित्यत्रान्येषामपि कल्पनापत्त्या मूलाभूतनानाश्रुतिकल्पनापत्त्या च गौरवं स्यादित्यर्थः । **प्रतीत्युभयान्वयि** । निषादस्थपत्यधिकरणन्यायेनाऽऽह ।

**मद्यपाया इति ।** अन्यत्र सामान्येन दोषस्योक्तत्वादाह । **जायेति ।** **अपिना** अन्यस्या अपि । अत एव स्त्रीयुक्तिः । प्राग्वदाह । **श्रौतेति ।** **संस्कारेति ।** जातकर्मादित्यर्थः । **सतीति** संभाषणाद्यकरणमपि तथेति बोध्यं । **तत्र** तेषां मध्ये । **स्त्रीधनं** व्यवहारे निरूपितं । अत्रोदाहरणमाह । **यथा हि कर्मेति ।** उक्तमिति शेषः । सामान्यग्रहणादाह । **भार्येति ।** जामिरपतिका । प्रवर्तनं ५ प्रेरणं । इदमुपलक्षणं जालबडिशादिविधानरूपं तृणादिमहायंत्रप्रकर्तनरूपं चापि बोध्यम् । शूद्रप्रेष्यमित्यस्यार्थमाह । **शूद्रेति ।** **हीनेष्विति ।** जातितो गुणतश्चेत्यर्थः । **साधेति** वेश्यादीत्यर्थः । **चार्वाकादीति ।** वेदविरोधिन इत्यर्थः । सर्वग्रहणेन ग्रामादिनियोगव्यवहारदर्शनदंडग्रहणनियोगादेरपि परिग्रहः । **विक्रय इति ।** प्राग्वदयं बोध्यं **आदिना**ऽसत्प्रतिग्रहादि । तथा च **मनुः**

"गोवधोऽयाज्यसंयाज्यं पारदार्यात्मविक्रयं । गुरुमातृपितृत्यागः स्वाध्यायाग्न्योः सुतस्य च ॥
१० "परिवित्तिताऽनुजेनूढे परिवेदनमेव च । तयोर्दानं च कन्यायास्तयोरेव च याजनं ॥
"कन्याया दूषणं चैव वार्द्धुष्यं व्रतलोपनं । तडागारामदाराणामपत्यस्य च विक्रयः ॥
"व्रात्यता बांधवत्यागो भृत्याध्यापनमेव च । भृताच्चाध्ययनादानमपण्यानां च विक्रयः ॥
"सर्वाकरेष्वधीकारो महायंत्रप्रवर्तनम् । हिंसौषधीनां स्त्र्याजीवोऽभिचारो मूलकर्म च ॥
"इंधनार्थमशुष्काणां द्रुमाणामवपातनं । आत्मार्थं च क्रियारंभो निंदितान्नादनं तथा ॥
१५ "अनाहिताग्निता स्तेयमृणानां चानपक्रिया । असच्छास्त्राधिगमनं कौशीलं व्यसनक्रिया॥
"धान्यकुप्यपशुस्तेयं मद्यपस्त्रीनिषेवणं । स्त्रीशूद्रविट्क्षत्रवधो नास्तिक्यं चोपपातकम् ॥" इति।

संयोज्ये भावे पदार्थपारदार्ये मत्वर्थेनंनाद्भावे ष्यञ् । त्यागस्याग्रेऽध्याहारः । भृत्या मूल्येन ओषधीनामशुष्काणां हिंसा छेदः । स्त्र्याजीवः स्त्रिया जीवनमुक्तमेव । अभिचारः श्येनादिना मारणं । मूलकर्म मंत्रौषधादिना वशीकरणं । निंदितान्नस्य लशुनादेः सकृदनिच्छया भक्षणं । २० बुद्धिपूर्वाभ्यासे तु सुरापानसमत्वमुक्तं । कौशीलं कुवृत्तं । चारणत्वं नर्तकत्वं गायकत्वं च वादकत्वं ।

चरमतुर्यपादार्थमाह **हैषामिति ।** **अन्यानि** उपपातकतः । तान्येव क्रमेणाह । **ब्राह्मणेति ।** **रुजःकृत्यं** दंडहस्तादिना शरीरपीडाकरणं । शास्त्रे भक्षणप्रतिषेधवत् घ्राणाप्रतिषेधस्याभावेऽपि यदभक्ष्यं तदघ्रेयमित्यस्य यागार्थमुपात्तस्य घृतादेरभक्ष्यत्वेऽप्याघ्रेयत्वसत्वेनाभावेऽपि तीक्ष्ण- २५ दुर्गंधविशिष्टं घ्राणविकारजनकं मद्यसाहचर्यादभक्ष्यं लशुनपुरीषादि **अघ्रेयं ।** **मृगाः** आरण्याः रुरुपृषतादयः । अजश्चाविश्च । स्वार्थे कः । वध इत्यस्य पूर्वत्राप्यध्याहारः । **निंदिताः** जातिकर्मदुष्टाः प्रागुक्ताः । तेभ्यो धनग्रहणं प्रतिग्रहतो न । तथा च दत्तस्य ग्रहणमस्त्येव । असभ्यस्य अरुचिकरस्य । असत्यस्येति प्रचुरः पाठः । **वयसां** पक्षिणां । हत्या हिंसा । **मद्येति** मद्येन सहैकस्मिन्पीठकादावानीतस्य मूलफलादेर्भोजनमिति बहवः । मद्यानुगतस्य मद्यसंसृष्टस्य तदिति तु **मेधा-** ३० **तिथिः ।** **एधः** काष्ठं । **अधैर्यं** स्वल्पेऽपि निमित्तेऽतिवैकल्यं । अनुक्रमा**हात इति ।** उक्तादित्यर्थः । **जातं** समूहः । अत्र मानं दर्शयितुं संज्ञांतरमपि प्रदर्शयितुं चाह । **बृहदिति ।**
मि॰ पृ॰ २४५ स्वार्थे इयसुन् । **तत्संयोगश्चेति** महापातकमिति वचनविपरिणामेनान्वयः । अतिपातकान्याह । **मात्रिति ।** **माता** सपत्नमाता । अनुपपातकान्याह । **यागस्थेत्यादि ।**

**यागस्थेति** दीक्षितेत्यर्थः। वैश्येऽप्येवं बोध्यं। **अविज्ञातेति** स्त्रीत्वादिनेत्यर्थः। पत्न्याश्चतुर्भिः संबंधः। एवमग्रेऽपि। पूर्वनिपातप्रकरणानित्यत्वादत्र प्रयोगसाधुता सर्वत्र बोध्या। इत्येतान्यनुपातकानीति पाठः।

उपपातकान्याहानृतेति। **राजगामि** राज्ञा श्रूयमाणं। **अभोज्येति**। भोजने निषिद्धानामित्यर्थः। जलचरा जलकुक्कुटादयः। **जलजा** मीनादयः। **प्रासंगिकं** जातिभ्रंशकरादि। **आदिना** जातिभ्रंशादिपरिग्रहः। ननु पतनहेतुत्वेनाऽऽह। **पतनेति**। उक्तमेव व्यतिरेकमुखेन द्रढयति। **यदीति**। **परीति**। **गौतमाभ्यामिति** भावः। **अर्वाति** तस्यानेकत्वात्तदेवाह। **द्विरिति**। ननु सर्वस्यापि ग्रहणमस्तु। अत आह। **तत्रेति**। विशेषशून्येऽभ्यासमात्रेऽङ्गीक्रियमाणो इत्यर्थः। **यत्रेति**। कर्मविषये इत्यर्थः। तस्यासार्वत्रिकत्वादाह। **प्रायश्चित्तेति**। अन्यतरत्तु सार्वत्रिकमिति भावः। अतिप्रसंगदत्तं वारयति। **द्विवेति**। **पातित्यं** तद्धेतुत्वं। उपसंहरति। **अत इति**। ॥ २३४ ॥ ॥ २३५ ॥ ॥ २३६ ॥ ॥ २३७ ॥ ॥ २३८ ॥ ॥ २३९ ॥ ॥ २४० ॥ २४१ ॥ ॥ २४२ ॥

## याज्ञवल्कीये २४३ श्लोकः।

अनतिप्रसंगायाह। **कृत्वेति**।

"ब्रह्महा द्वादशसमा कुटीं कृत्वा वने वसेत्। भैक्षाश्यात्मविशुद्ध्यर्थमिति" तदादिः इदं च कपालभेदसंभवे। तदसंभवे तु तदेकदेशाभ्यामुभयं कार्यं। **घातेति**। प्रार्थयंतीति वणिच्। **अन्यस्य** दैवान्मृतस्य। खट्वा चात्र शवनिर्हरणार्थं। तदंगमेव ध्वजशब्देन विवक्षितमित्यपरार्कोक्तिं खंडयति। **न पुनरिति**। रूढिर्योगमिति **न्यायव**ल्लोकप्रसिद्धितः शास्त्रप्रसिद्धेरत्र बलवत्वाच्चेति भावः। तस्य वासस्थानान्याह। **तथेति**। पक्षांतराण्याह। **ग्रामेति**। आदिग्राह्यमग्रे स्फुटमेव। **अंतशब्दः** समीपवाची। गोब्राह्मणहितेऽरत इति पाठांतरम्। **तेनैव मनुनैव**। वाशब्दो न प्रागुक्तवनापेक्षया विकल्पबोधकस्तस्य बहुव्यवहितत्वात् तं विनाऽपि वचनद्वयप्रामाण्याद्विकल्पस्य लाभाच्चात आह। **कृतेति**। तथा च स पूर्वान्वयी नोत्तरान्वयीति भावः। **बालेति**। चमरीलोमवस्त्र इत्यर्थः।

मि. पृ. २४६

अग्रिममूलार्थमाह। **तथेति**। ताच्छील्ये णिनिरिति भावः। अत एव वक्ष्यति। **नियम** इति। **आगाराणि** गृहाणि। एवेनाधिकनिरासः। **मृष्टं** श्लक्ष्णं। **वशिष्ठेति**। **यमोऽपि**

"सप्तागाराण्यपूर्वाणि यान्यसंकल्पितानि च। प्रविश्य तानि शनकैर्विधूमे भुक्तवज्जने॥
"ब्रह्मघ्ने देहि मे भिक्षामेनो विख्याप्य संचरेत्। एककालं चरेद्भैक्षं तदलब्धोदकं पिबेत्" ॥ इति।

**सेति** आहार्याभोज्या चेत्यर्थः। **तेनैव वसिष्ठेनैव**। **एवेन** संकरनिरासः। **चातुर्वर्ण्ये** स्वार्थे ष्यञ्। अभिसमीक्ष्येति शेषः। **संयतः** उपयोगादन्यत्र मौनी जितेंद्रियो वा। इदमपि पूर्वपूर्वासंभवे ज्ञेयं।

अग्रिममूलार्थमाह। **तथेति**। विशेषे बीजमाह। **वेश्मन इति**। अनुक्तमाह। **तथेति**। आदिग्राह्यमनुपदमेव स्फुटीभविष्यति। **संवत्सरानित्यादि** कालाध्वनोरिति द्वितीया। आर्यस्थ विप्रादेर्दर्शनात्पथो मार्गादपक्रामेत्। अत्र गच्छेत् इत्यर्थः। **स्थानासनाभ्यामित्यनेन**

"उत्थितस्तु दिवा तिष्ठेदुपविष्टस्तथा निशि । एतद्वीरासनं नाम सर्वपापप्रणाशनमिति ॥"

**स्मृत्यंतरोक्त**मर्थमभिप्रैति । उपलक्षणत्वेनाह । **ब्रह्मेति** । गौतममेवाह । **वर्जेति । इतीति** वर्जनरूपादिधर्मेत्यर्थः । अनतिप्रसंगायाहावीति । तेषामपि प्राप्त्यर्थमित्यर्थः । स्थानवीरासने यस्य स्तः सः । **मौनीति** व्याख्यातं । **कूष्मांडमंत्रैः** । "यद्देवा देव हेलनं देवासश्चकृमावयम्"

५ इत्यादिभिरग्निकार्यं कुर्यादित्यर्थ इति **मदनः** । तैः सदा जप - इत्यन्ये । **तैरुभयमित्यपरे** । जपेदिति पाठांतरं । मौंजीत्यादेरन्वयायाह । **तस्येति** । अत्र च । **गौतमीये च । सवनेषु** । कालत्रयेषु । अन्यदप्याह । **तथेति** । इदं स्नानसूचितमेवेति ध्वनयन्नाह । **स्नानवदिति** । अत्र सन्ध्या प्रातःसन्ध्यैवेति केचित् । संध्यात्रयमित्यपरे । वचनात् **गौतमवचनात्** । **चोऽप्यर्थे**। एवेनान्यनिरासः । उभयत्र **गौतमार्थमाह । द्विजेति** । सामान्यान्याहाभ्येति । विशेषा-

१० भूतान्याह । **ब्राह्मेति** । आदिनाऽन्यश्रौतस्मार्तकर्मपरिग्रहः । विहितानामिति शेषः ।

मि. पृ. २४७. हानिरिति । त्यागस्तेष्वनधिकारः पतनमित्यर्थः । एवव्यच्छेद्यमेवाह । **न सर्वेषामिति । तावन्मात्रेति** ब्रह्मचर्यानंगभूतद्विजातिकर्मेत्यर्थः । अन्यथा दक्षवाक्यस्थसर्वशब्द-संकोचापत्तेः । अत्र प्राधान्यात् द्विजातिग्रहणं न तु शूद्रादिव्यावृत्त्यर्थं तेषामपि तत्त्वस्य प्रागुक्त-त्वात् । एवमन्येऽपि स्मृत्यंतरोक्ता धर्मा द्रष्टव्यास्तेषां च यत्र विरोधस्तत्र विकल्पो यत्राविरोध-

१५ स्तत्र समुच्चय इति व्यवस्थाविशेषमाहे**यं चेति** । एवमग्रे सर्वत्र बोध्यम् । **तत्र** .आकांक्षायां सत्यां । अत इति शाखांतराधिकरणन्यायेनैकोनगुणोपसंहारन्यायेनाविरुद्धसर्वांगोपरादित्यर्थः । **अपिना** तथात्वे तदौचित्यं ध्वनितं । **अनीति** । अविचार्यैवेत्यर्थः । पदार्थानुक्त्वा वाक्यार्थमाहै**वमिति** । उक्तप्रकारेणेत्यर्थः । **अकामकृतेति** सकृत्कृतेत्यपि बोध्यं । **ब्रह्मेति** ब्राह्मणमात्रवधेत्यर्थः । **तथा च भविष्यत्पुराणे**

२० "तत्र सामान्यतो हत्वा ब्राह्मणं सुरसत्तमः । प्रायश्चित्तं तु वै कृत्वा विधिवत् द्वादशाब्दिकं ॥

"प्राप्नोति शुद्धिं जीवन्वै स्वर्गं च स्वजनैः सह" इति । **मनुरिति । गौतमीयं** व्याचक्षाणो "ब्रह्महत्यासुरापानं गुरुदारगमनान्यनिर्दिष्टव्यप्रायश्चित्तानीति" **मनुराहेति** वर्णयित्वा "मतिपूर्वमनि-र्दिश्यं प्राणांतिकमुपस्थितमिति" "कामतो ब्राह्मणवधे" इति च **मनुवचनं** । तत्र संवादार्थ-मुपन्यस्तवान् । **कलिनिषिद्धेषु तु**

२५ "प्रायश्चित्तविधानं च विप्राणां मरणांतिकमिति" स्तेयान्यमहापातकनिष्पत्तिरिति चोक्त-मिति बोध्यं । ब्रह्मवधादिषु प्रायश्चित्तानां भिन्नानामुपदेशात्तंत्रता नेव संभवतीत्यत आह । **द्वित्रीति**। द्वंद्वपूर्वककर्मधारयः । **एकस्मिन्निति** । आकृत्यधिकारणन्यायेन तस्य जातिपरत्वात् व्यक्ति-पक्षेऽपि वृत्तावुपसर्जनेषु संख्यासामान्याभावसत्वादिति भावः । **एकेति** अनेकमध्ये इत्यर्थः । तदेव विशदयति । **तत्रेति** । अनेकमध्ये इत्यर्थः । **एकेति** बहुव्रीहिः । इदं तन्निरासकं । **प्रयोगेति** तदंग-

३० भूतानामित्यर्थः । प्रत्येकमिति शेषः । एवेन प्रतिनिमित्तं नैमित्तिकमावर्तत इति **न्यायप्राप्तावृत्ति-**निरासः । दर्शे पूर्णमासे च यागत्रयमाग्नेयादिकं प्रधानं । **उपकारेति** अदृष्टजनकत्वरूपेत्यर्थः। गुरुत्वादि एकब्राह्मणवधपपतः । **गौतमबौधायनावाहैनसीति** । पापभेदाभावोऽपि भिन्न इत्याह । **बिलेति । इतीति** इत्येवंवचनवाच्यामित्यन्वयः । **समाप्ते । इति । इदं गौतमाद्युक्तं अथर्व**

खंडयति । **न चेति** । नापीत्यर्थः । प्रमाणमस्तीत्याह । **यच्चेति** । यदपीत्यर्थः । **अपिः** पूर्वसमुच्चये । एवमग्रेऽपि । **द्वित्रीति** प्राप्तेत्यादिः । तन्निमित्तकेत्यर्थः । आवृत्तावन्वयः । **तदभावेति** आवृत्त्यभावेत्यर्थः । एवं च द्वयोश्चतुर्विंशतिवार्षिकं तृतीये षट्त्रिंशद्वार्षिकं चतुर्थादौ नेति तात्पर्यं । **द्वितीयेति** । इदमुपलक्षणं तृतीयेऽप्येवं बोध्यं । अनुष्ठानेति तस्य यत्द्वैगुण्यं तद्विधीत्यर्थः । तथा च द्वयोः षट्त्रिंशद्वार्षिकं त्रिषु द्विसप्ततिवार्षिकमिति भावः । **अपिना** तुर्यपादविधिसमुच्चयः । **वाक्येति** । अनेकविधेरिति भाव : । केचिन्मतमुपसंहरति । **तस्मादिति** । **अप्येवौ** प्राग्वत् । दाढर्याय दृष्टांतांतरमाह । **यथा इत्यादिनेति** पाठः । यस्याहिताग्नेरग्निर्गृहान्दहेत्स इति पूर्वशेषाऽऽह । **गृहेति** । **अपि**रेकसमुच्चायकः । **एवेनावृत्तिनिरासः** । **तंत्रन्यायेन** तन्न्यायस्य बाधादिति भावः । **न हीति** । यतो वचनत्वादेव तद्विरोधे तंत्रन्यायः प्रबलो भवतीत्यर्थः । **चस्त्वर्थे** । **आवृत्तीति** द्वैगुण्यादीत्यर्थः । तथोक्तिफलं त्वनुपदमेव स्फुटीभविष्यति । पूर्वं वचनान्यथागतिं कृत्वा तंत्रन्यायेनावृत्तिन्यायस्य बाध उक्तः । सैव नेत्याह**ैवमिति** । तस्य तत्परत्वे सतीत्यर्थः । **प्रवृत्तिरिति** । प्रायश्चित्तानुष्ठानप्रवृत्तिविशेषप्रतिपादकत्वेन सफलतरमित्यर्थः । इतरथा तस्य तद्विधिपरत्वाभावे तर्हि किंपरत्वमतः प्रागुक्तमेवाह । **शास्त्रत इति** । प्रतिनिमित्तमिति । **न्यायत** इत्यर्थः ।

प्रागुक्तदोषं परिहरति । **न चेति** । नेक्षेतोद्यंतमित्यादिवन्नञः पर्युदासार्थत्वेन द्वैगुण्याद्यविवक्षया तात्पर्यतो लक्ष्यार्थमाह । **चतुर्थादीति** । तदप्युपलक्षणमिति भावः । तदत्र द्वयोस्त्रिषु च त्रीणि व्रत इत्यादिवदिति भावः । तस्य गुरुत्वमपि सप्रमाणमित्याहुः । **किंचेति** । अन्यथा तदादावपि तथैव निर्वाहे तदुक्तिरफलैव स्यादिति भावः । एवं ज्ञापकेन साधितेऽर्थे वचनमपि मानमस्तीत्याह । **तथेति** । न तद्वदित्यर्थः । ततः पूर्वतनमेवाह । **यत्स्यादिति** । अज्ञात्वेत्यर्थः । तथा सत्याह । **न चेति** । न हीत्यर्थः । उपसंहरति । **अत इति** । तंत्रायोग्यत्वादित्यर्थः । **अपि**र्वचनसमुच्चयः । आवृत्तिर्द्वैगुण्यादिरूपा । अत एव दृष्टांतवैषम्याह । **क्षामेति** । **आदिना** प्रयाजादेरपि परिग्रहः । अत एव “तरति ब्रह्महत्याम्” इत्याद्येकवचनसंगतिः । किंच तत्प्रत्यक्षे

मि. पृ. २४९. सास्थिप्राणिवधे यद्दानमुक्तं तदेव तत्सहस्रवधेऽपि स्यात् । न तु शूद्रहत्याव्रतं । एवमनस्थिवधे ये प्राणायामा उक्तास्ते शकटपरिमितमारणेऽपि स्युः । किं च सकृत्कृतादब्रह्मवधादनेकपापोत्पत्तिरपि स्यात् । अधिकरणद्वयविरोधोऽप्यन्यत्र स्पष्टस्तस्मादावृत्तिरेव युक्ता । तदाह**त्यलमिति** । एतेन तंत्रमेव युक्तं । विधेरिति तु यत्र पापविशेषे आवृत्तिविधायकं वचनमस्ति तद्विषयमिति वदन् शूलः प्रयुक्तः । अयुक्तेस्तस्यानर्थक्यस्य दुरुद्धरत्वाच्चेति दिक् । **प्रायश्चित्ताभावेति** । सर्वथा तत्र प्रायश्चितमेव नास्तीति केचित् । यथा ज्ञानेन द्वितीयादौ कृते तत् द्वैगुण्यादि तथा चतुर्थे न किंत्वधिके नेत्यन्ये । आद्येऽज्ञानकृते द्वादशाब्दं द्वितीये द्वे तृतीये त्रीणि चतुर्थे चत्वारीति द्वादशाब्दानि दश भवंति तेषामाचरणकालो विंशत्याधिकं शतं शरदो भवंति तावत् आयुषोभावादुष्करत्वेन तदभावो न तु स्वरूपत एव तदभाव इति **मदनः** । त्रासजननार्थं तदुक्तिः । यतो निष्कृतिरेव न । अतस्तन्न कार्यमिति च । **तदनुगुणमिति** क्रियाविशेषणं । गुणेति पाठांतरं । अत एव तत्र प्रायश्चित्तसत्वादेव पूर्णे मानसीति । **अनः शकटं** । अनस्थामिति शेषे षष्ठी । **अस्थिमतां तु सत्वानां सहस्रस्य** प्रसकृत्कृते यत्प्रोक्तं तत्त्रिभिर्दिनैस्त्रिगुणं मासात्पंचगुणं षण्मासाद्दशगुणं **अब्दात्पंचदशगुणं त्र्यब्दाद्विंशतिगुणं** ततोऽप्येवमग्रे प्रकल्प्यं । एवमुपपातकाभ्यासेऽनुक्तप्रकारविशेषे

सर्वत्रेति इदमग्रे स्फुटीभविष्यति । तस्यैवेति तथा व्युत्पत्तेः प्रागुक्तत्वात् साक्षाद्वधापेक्षया प्रयोजकादिवधो व्यवहित इति संनिहितस्य साक्षाद्वधस्यैव परमदुरितापूर्वोत्पादकत्वमिति तस्यैव संपूर्णमेतेन यथाऽन्यद्रव्यस्य द्रव्यस्वाम्याज्ञादिनान्येन दाने आज्ञादिकर्तुरेव पूर्वो न तु साक्षाद्दातुस्तथाऽन्याज्ञादिनाऽन्ये हते आज्ञादिकर्तुरेव वधफलं पूर्णं युक्तमित्यपास्तम् । स्वत्वत्यागपूर्वकपरस्वत्वा-
५ पादनस्य दानत्वेन स्वामित्यागादेव स्वत्वत्यागेन दृष्टांतवैषम्यात् । अत्राज्ञादिकारिणो ऋत्विगादितुल्यत्वात् ।

अत एवानुक्तमाहानुग्राहकेति । तत्तदिति । इदं च प्रागुक्तं तदेवाह । तत्रेति । एवं सामान्येनोक्त्वा प्रकृतं विशेषमाहात इति । उक्तसामान्यनियमादित्यर्थः । तस्य अनुग्राहकस्य अर्धापेक्षया किंचिन्न्यूनमर्धमध्ये पादोनं तदाह । सार्धेति । चरमे मानमाहात एवेति । तत्र
१० तत्सत्वादेवेत्यर्थः । मनुरिति । सुमंतुरप्येवं । निमित्तांतरमाह । गृहेति । प्रतीति । अधोगामिनीमित्यर्थ इति केचित् । प्रवाहतस्तथेत्यन्ये । निमित्ते एव भेदमाहात्यर्थमिति । अत्यंतमित्यर्थः । निर्निमीत्युत्तरान्वयि । वाशब्दः प्रागुक्तनिमित्तांतरसमुच्चायकः । वै इति पाठांतरं । इदं वपनं व्रतांगभूतं । तेनैव मन्वादिनैव । अनयैवेति । अनेनैव मार्गेणेत्यर्थः । तत्र मानमाहास्यां चेति । प्रयोजयितेत्यादिसामान्योक्तेः । अल्पेऽल्पफलसंबंधस्य सूचनाच्चेति भावः । भक्तमन्नं
१५ शक्तिमांश्चेदुपेक्षक इत्यर्थकं । एते सर्वेऽकार्यकारिणो बोध्या इत्यर्थः । ततः किमत आहैषामिति । आदिग्राह्यमग्रे स्फुटं । वर्षाणि पूर्णानीति शेषः । अंगिर इति । विष्णुपराशरबृहस्पतयोऽप्येवं । च्यवनोऽपि "बालवृद्धस्त्रीणामर्धं प्रायश्चित्तमाषोडशाद्बालः सप्तत्यूर्ध्वं स्थविर" इति । स्मृत्यंतरमाह । तथेति । तथा च बालत्वे वृद्धत्वांशे विकल्पः स्मृतिद्वयप्रामाण्यात् । "अर्धमेव भवेत्पुंसामिति" पाठः । तुरीयं पदं । एवं चार्धपादयोषित्सु विकल्पो बोध्यः । तत्प्रसंगाद्दा-
२० हानुपेति । अत एवापिः पादे । यतिपादप्रमाणमेवेत्यर्थः । एवेनार्धनिरासः । अन्यथा पौनरुक्त्यं स्पष्टमेव । इदानीं तदन्यस्यापि तादृशस्य परिग्रहः । सर्वेति । वर्णधर्मेषु पतनीयेष्वित्यर्थः ।

अतश्चेति । चेन "स्यात्कामचारभक्षोक्तिर्महांतः पातकादृते" इति स्मृत्यंतरसमुच्चयः । अत एव प्रागुपनयनात्कामचारेत्यादिप्रागुक्तगौतमीयं महापातकवर्जमिति स्मृत्यर्थसारे । अत एव वर्णधर्मान्वर्जयित्वेति व्याख्यातं व्याख्यात्रा । शंखेनेति । आंगिरसाऽपि कर्तुः प्रतिनिधिः
२५ शंखदुक्तः "ऊनैकादशवर्षस्य पंचवर्षात्परस्य वा । चरेद्गुरुः स्वकृत्याऽपि प्रायश्चित्तं विशुद्धये" इति । अत्र बालस्य यद्विहितं प्रायश्चित्तं तदेव गुर्वादिना कर्तव्यमिति तात्पर्यार्थ इति कल्पतरुः । यमेनापि

"अपूर्णैकादशाब्दस्य चतुर्वर्षाधिकस्य च । प्रायश्चित्तं चरेन्माता अन्यो वाऽप्यस्य बांधवाः॥" इति ।

अतः पंचवर्षान्न्यूनस्य तत्रैव प्रतिनिधिविधिर्वा । यमोऽप्येवं परामिति । अत एव बाल-
३० तरेषु पादादपि न्यूनं कल्प्यमिति माधवः । यद्यपि बालांशे "तृतीयांशो भवेत्पुंसामिति" तत्र पाठानुरोधेन द्वादशतः षोडशपर्यंतमर्द्धं ततः प्रागुपनयनपर्यंतं नवमवर्षांततृतीयांशस्ततः प्राक् षड्वर्षांतं पादं पंचवर्षपर्यंतं पापमेव नेति व्यवस्था संभवति तथाऽपि सा न युक्ता पंचमादिवर्षस्याप्युपनयनकालत्वेनोक्तव्यवस्थाया असंभवात् । विकल्पस्य दुर्वारत्वात् । वृद्धांशे मानाभावात् । अत

एव चतुर्वर्षाधिकस्येति **यमोक्तिः** । तस्माद्विकल्पस्याष्टदोषदुष्टस्यापत्योक्तव्यवस्थैव युक्ता उक्त-विकल्पस्तु दुरुद्धरस्तत्रापि यथाकथंचिद्व्यवस्था कार्या वा । एवं ऊनपंचवर्षस्य न प्रायश्चित्तं न पापमिति ग्रंथास्तु प्रायेणाल्पपापाशयेन योज्याः प्रागुक्त**गौतमा**दिति बोध्यं । तदेतत् ध्वनयन्हेतुं तत्राहा**श्रमेति** । अत एव वर्णधर्मान्वर्जयित्वेत्येव प्रागुक्तं तदानीं ब्राह्मणादेः सत्वाद्ब्रह्मचारित्वादे-

मि. पृ. २४४  रसत्वात् इति भावः । **मनु**माह । **तस्मादिति** । "सुरा वै मलमन्नानां पाप्मा च ५
मलमुच्यत" इत्यादिः । उपसंहरन् **शंखा**दितात्पर्यमाहा**त इति** । तत्रापि तत्सत्वादित्यर्थः । **तस्यैव** पितुरेव । अन्येषां तु तत्वं तत्स्थानापन्नत्वादिति भावः ॥

विशेषांतरमाह । **यत्र पुनरिति** । कर्तृत्वे सतीति शेषः । उक्ताशयानभिज्ञः शंकते । **च चैवमिति** । स्वाशयं प्रकाशयति । **अत्रेति** । **हि** यतः । पूर्वत्रेत्यर्थः । **न च** न हि । **कुतः** मूलस्यैवाभावात् । तत्रैव शंकते । **न चेति** । **मित्रेति** प्रयोजकतया कृतेत्यर्थः । उक्तमर्थं दृष्टांतेन १० द्रढयति । **अत इति** । उक्तहेतोरित्यर्थः । **नियोगो** विधिः ।

विरोधं परिहरति । **यदिति** । एवमग्रेऽपि । **ब्रह्महेति** । तथा सतीति शेषः । अस्योभयत्रान्वयः । सर्वेत्यनेनांतःपातिसकलपापनिरासः सूचितः । एवमन्यस्यापि लघोः । विप्रौ सर्वेत्यर्थकौ । हापि वीति पाठेऽपिरन्यमहापापसमुच्चायकः । प्रतीतिपाठांतरं । **सवनस्थेति** । यज्ञस्थगुणवद्ब्राह्मण-कर्मकहननविषयकमित्यर्थः । ननु नायमुक्तप्रतिनिधिरस्य ततो गुरुत्वादत आहे**तश्चेति** । वक्ष्यमाण- १५ मूलमाह । द्विगुणमिति । **हते सति** हंतुरिति शेषः । **अनावृत्तेति** । प्रागुक्तेत्यर्थः । तत्र हेतु-माह । **तत्र हीति** । यतो द्वादशवार्षिके इत्यर्थः । **इति** एवं ।

उक्तमेव द्रढयति । **यद्यपीति** । तत्र वन्याद्याहारस्य सर्वत्रत्वादिति भावः । **अत्र द्वादश-वार्षिके** । **आदिना**ऽन्यधर्मपरिग्रहः । अत एव तत्वाभावादाह । **तुल्यत्वमिति** । ननु किमेतावताऽत आह । **ततश्चेति** । तस्य तत्तुल्यत्वाच्चेत्यर्थः । **पराशरमाह** । **प्राजेति** । अत्र द्विविधस्यापि तस्य २० ग्रहणमिति भावः । अशक्ताविति छेदः । तस्मा अपि प्रतिनिधिमाह । **गवामिति** । तन्मूल्यं तासां मूल्यं शास्त्रपरिकल्पितं । **वाशब्दः** स्मृत्यंतरोक्तान्यपक्षसंग्राहकः । अनेनापीष्टासिद्धिरेव न संशय इत्यर्थः । **न्यायेन इति** रीत्या । **अत इति** । यत इत्थमत इत्यर्थः । तत्राशीत्यधिकशत-द्वयधेन्वाधिक्यं तु न । अत्राप्युक्तरीत्या क्लेशाधिक्यस्य सत्वात् विषयांतरासंभवाच्च । तदेतत् ध्वनय-न्नाह । **यथोक्त एवेति** । यथाक्रममाह । **गविति** । **तस्य** समुच्चयस्य । २५

तस्य सत्वे मानमाह । **तथा चेति** । उक्तवानित्यत्रान्वयः । तस्य तत्त्वविवक्षया सर्वत्र सप्तमी । **अब्राह्मणे** क्षत्रियादौ । अत्र समत्वं लौकिकं । लोके हि समलवणः सूप इत्युच्यते । तथा च य तत्रतात्युक्तं तदुच्यते । एवमत्रापि ब्रुवशब्दः कुत्सायां घरूपेति **सूत्रभाष्यादौ** प्रसिद्धः । जातिमात्रब्राह्मणोऽध्ययनादिगुणहीनस्तत्र द्वैगुण्यादि च संख्यास्तुतिमात्रं अर्थवादत्वादुत्तरोत्तरं पात्रतातिशयेन फलातिशये तात्पर्यं उपकारापेक्षमिदं सर्वं बोध्यं । **आचार्यं** उपनेता । "अनंते ३० वेदपारगे" इति **मानवे** तुर्यपाठः । तत्राध्ययनश्रवणाभ्यां तत्पारगानां समहारद्वंद्वः । दाने पात्र-भेदेन समादिरूपं फलतारतम्यं स्यादित्यर्थः । गतेत्यत्र संख्यायाः संवत्सरेत्युत्तरपदवृद्धिः । **साहस्रे**-

त्यत्र प्रकृतिरपि प्रकरणात् विशिष्टपरा । आनंत्ये स्वार्थे ष्यञ् । गवां सहस्रमितिवदस्यापि व्यवस्था-माह । तथेति । तद्वदित्यर्थः । द्वादशेति "विप्रहा अरण्ये कुटीं कृत्वा वाग्यतः शवशिरोध्वजः शाणीपक्षमधोनाभ्युपरिजान्वाछाद्ये"त्याद्युपक्रमादित्यर्थः । आ उत्तमादुच्छ्वासात् । आमरणात् । साणी पक्षः । क्षणा सूत्रवस्त्रैकदेशः । भविष्यत्पुराणेपि

५ "मातरं पितरं हत्वा सोदर्यं भ्रातरं तथा । गुरुं हत्वा श्रोत्रियं वे" त्युपक्रम्येदमेवोक्तं । तत्र तस्मिन् । अयं शंखोक्तः । तथा । च तत्रासमर्थस्य द्वादशवार्षिकगोसहस्रत्रि तत्राप्यशक्तस्य षड्वार्षिकगोसहत्रि तत्राप्यशक्तस्य षड्वार्षिकगोपंचत्यौ तत्राप्यशक्तस्य त्र्यब्दगोसार्धशतद्वये तत्राप्य-शक्तस्य सार्धाब्दगोसपादशते । इत्येवं सर्वेषां वर्णानां ब्राह्मणादीनां शक्तानुसारेणानुपूर्व्येण क्रमेण तयोः समुच्चयतदर्थः प्रायश्चित्तस्यातिगुरुत्वादस्य स एव विषयः । न च द्वादशाब्दादिव्रतचतुष्षष्ट-
१० गोसहस्रादिदानचतुष्टयसहितमुक्त्वा सर्वेषां वर्णानामित्युक्तेर्ब्राह्मणादितच्चतुष्टयविधिः कुतो नेति वाच्यं ।

"पर्षद्याब्राह्मणानां तु राज्ञां तद्द्विगुणा मता । वैश्यानां त्रिगुणा प्रोक्ता पर्षद्वच्च व्रतं स्मृतमिति ॥"
"शूद्रो वा ब्राह्मणं हत्वा प्रायश्चित्तचतुष्टयमिति" चांगिरोभविष्यत्पुराणाभ्यां विप्रापेक्षयाऽन्य-वर्णानावधिकप्रायश्चित्तविधानादिति भावः । अत्र चतुर्विंशतिमतविरोधपरिहारस्तु वक्ष्यते ।
१५ मि. पृ. २५० एवमन्यत्राप्याह। द्वादशेति। व्यवस्था सैव। अवसिता निश्चिता मानाभावात्। तत्र तेषु । व्यवस्थाया इति शेषः । विकल्पेति ऐच्छिकविकल्पेत्यर्थः । अपिः सिद्धांतसमुच्चये । अवकल्पते संभवति । अतुल्यत्वादैच्छिकविकल्पासंभवः । ननु स्वरूपतो वैषम्येऽपि फलतः साम्यात्तुल्यार्थास्त्विति न्यायेन स स्यादेवात आह । विकल्पेति । ऐच्छिकविकल्पेत्यर्थः । विषमेति। स्वरूपतः फलतश्च । सोऽप्यैच्छिकविकल्प इति भावः । व्यवस्थिताविकल्पस्तत्रेति समाधत्ते । ननु संभवे
२० सत्यपि क्लेशाधिक्यान्न तत्रात आह । यद्वेति । ननु मुख्यकारणसत्वे कालभेदे मानाभावोऽत आहातीति । अंगापूर्वसहितप्रधानापूर्वजपरमापूर्वभेदस्य न्यायविद्भिः प्रतिपादितत्वात् इति भावः । तत्रापि बीजामाहेतरथेति ।

उपेति यत इत्यादिः । रेणहीति पाठे तु नायं समुच्चयस्येति शेषः । अन्यथा आहोपेति । प्रकृते इति भावः । न च नापि । श्रुत्यादितिश्रुतिलिंगवाक्यप्रकरणस्थानसमाख्यानां
२५ षण्णां शेषत्वविनियोजकानामत्राभावादित्यर्थः । एवं तदुक्तं संखंड्य सिद्धांतमाहात उक्तान्यतमप्रकारासंभवादित्यर्थः । तथा च प्रागुक्तद्वितीयपक्षसमर्थनमिति भावः ।

ननु वचनांतराणि साक्षिभूतानि यत्र संति तत्रास्तु व्यवस्था। यत्र तु तदभावेऽपि व्यवस्था क्रियते सा कथं श्रद्धेयेति चेन्न स्मृतिकारैरेव कल्पत्वोक्तेः । तदाह । सा चेति । व्यवस्था चेत्यर्थः। जात्यादिसापेक्षतदीक्षपूर्वं प्रायश्चित्तं । तथा सकृत्कृतमन्यथा वा बुद्धिकृतमन्यथा वानुबंधादि
३० अनुबध्यते येनेत्यनुबंधो महापापं । आदिनाऽतिपातकादि । तच्च विज्ञाय प्रायश्चित्तमित्यर्थः प्रकल्पयेदित्यस्यानुक्ते तत्र तदूहयेदुक्तेषु तद्व्यवस्थापयेदित्यर्थः । अत एव

"देशं कालं वयः शक्तिः पापं चावेक्ष्य यत्नतः । प्रायश्चित्तं प्रकल्प्यं स्याद्यत्रोक्ता नैवनिष्कृतिः" इत्युक्तं ॥ २४३ ॥

## याज्ञवल्कीये २४४ श्लोकः।

वाशब्दतः प्रतीयमानस्वातंत्र्यनिरासायाऽऽह। **पूर्वोक्तेति**। द्वादशवार्षिकेत्यर्थः। उद्देश्यगतत्वादेकत्वमविवक्षितमित्याहापीति। वक्ष्यमाणरक्षणोपायतो भिन्नं रक्षणोपायमाहात्मेति। बहुवचनमपानाद्याशयं तदवच्छिन्नस्वशरीरमित्यर्थः। विशेषमाह। **यद्यपीति**। उक्तरीत्येति भावः। अकरणं च शक्त्यभावात्पूर्णशक्त्यभावाद्वा द्वेधा ज्ञेयं। **पृथगिति** तन्निमित्तमित्यर्थः। एवं च **मनु**रप्येतद्विषय एवेति न स्वतंत्रबोधक इति भावः। स्वकर्तृकाश्वमेधस्य वक्ष्यमाणत्वादाह। **परेति**। **स्नात्वा** तत्रेत्यादिः। विशेषमाह। **स्नानं चेति**। **राज्ञा** अभिषिक्तेन क्षत्रियेण। **समवाये** मिथः संगमे तत्समूहे। स्वमात्मीये इत्याह। **स्वीयमिति**। विशेषमाह। **यदीति**। **अनुज्ञात इति**। तैरिति शेषः। **तत्रे**त्यस्य **स्नात** इत्यनेनान्वयः। **दीनां** च तेषामपि। **अश्वेति**। तत्र स्नातः शुध्यति। अन्यस्मिन्नपि यज्ञे अवभृथस्नातः शुध्यति। स **यज्ञश्चेदग्निष्टुन्मध्य**स्तदंतो वेत्यर्थः। 'अंतःप्रांतेंतिके मध्ये' इति **कोशः**। प्रतिज्ञातं विशदयति। **अयं चेति**। **आदिना** मरणं। अत्र दृष्टांतमाह। **यथेति**। प्राप्येत्यस्याग्रेऽप्यन्वयः। पक्षांतरमाह। **ऋषेति**। तृतीयपक्षमाहाभावे **इति**। तुर्यपक्षमाह। **गृहेति**। **द्वादशे इति**। स **एवमिति** तदादिस्तत्र 'पूर्णे सतीति' शेषः। **मनुसंमतमपीदमित्याहात एवेति**। स्वातंत्र्याभावादेवेत्यर्थः। पंचदशमि. पृ. २५१. प्रायश्चित्तकथनानंतरं सिंहावलोकनन्यायेनेति शेषः। **आदिना**
"गोप्ता गोब्राह्मणस्य च।
"त्र्यवरं प्रतिरोद्धा वा सर्वस्वमवजित्य वा। विप्रस्य तन्निमित्ते वा प्राणालाभे विमुच्यते"॥(११।८०)

इत्यस्य संग्रहः।

शंखानभिज्ञः शंकते। **ननु चेति**। मुच्यते इति लडित्याशयेन तत्रत्यब्रह्महत्यस्य शिरःकपालीत्यत्राप्यन्वयादाह। **ब्रह्मेति**। **प्रधानेति**। द्वादशवार्षिकव्रतात्मकप्रधानानुपकारकत्वेन तत्वादित्यर्थः। तदेवाऽऽह। प्रधानेति। अननुग्राहकत्वमेवाह। **न चेति**। नापीत्यर्थः। तथा विशेषानुक्तेरिति भावः। किंचेत्युक्तमुपसंहरति। **अतोपीति**। मानवमेवाऽऽह। **यथाग्नीति**। **आदिना**ऽश्वमेधादीनां वेदस्य त्रिर्जपांतानां 'कृते' त्यतः प्रागुक्तानां परिग्रहः। दृष्टांतासंगतिमाशंकते उक्तरीत्या। **न चेति**। मध्यपठितत्वमात्रं नांगत्वनियामकं। किं तु स्थानप्रकरणान्यतरत्। न चेह तदस्ति कस्याकांक्षाभावादित्याशयेनाऽऽह। **यत इति**। निश्चितेति निर्ज्ञानफलकत्वेनेत्यर्थः। **सामिधेन्यो** ऋचः। **निविद्रिति**, तत्पदघटितानां ऋचामित्यर्थः। **एकेति**। तथा च तदाकांक्षाभाव इति भावः। अभ्युपेत्याप्याह। **न चेति**। मना(?)पीत्यर्थः। **मानवे** तथात्वेनाहै**कांतेति**। **वार्षिकमध्येति** वार्षिकोपक्रमोपसंहारमध्येत्यर्थः। **मनुसम्मतमपीदमित्याहेदमेव चेति**। आकांक्षाविरहरूपमित्यर्थः। तथा वाशब्दस्यात्रापि सत्वादाह। **तथेति**। उक्तरीत्योक्तोपसंहारानंतरं किंचिन्मध्ये उक्तानंतरमित्यर्थः। अत एवां पूर्वोक्तानां पंचदशानां मध्ये उपसंहारः। सर्वेषामिति **मेधातिथिरपि**। **व्यपोहति** अपहरति। आत्मज्ञानतया शास्त्रार्थकृताभिनिवेश आत्मवान् न शास्त्रार्थमन्यथा वर्त्तेतेत्यर्थः। **दृष्टांतं** उपसंहरति। **अत इति**। पूर्वपक्षमुपसंहरति। **अतश्चेति**। तेषां स्वातंत्र्यस्य मुक्तत्वाच्चेत्यर्थः। मध्यपठितत्वमात्रं तु न तत्र नियामकं अस्य तत्त्वस्य मानवादौ सत्वेऽपि न तादृशं किं

तूक्करीत्येति तस्य तत्त्वं दुर्वचमेव। तदेतत् ध्वनयन्नाहैकफलेति। साक्षादेकफलकत्वादित्यर्थः। नन्वेवं कथं तथैकफलकत्वमत आहांगस्यैवेति। नन्वेवमपि तदनुपकारकत्वात्प्रधानविरोधित्वं तदवस्थमेवात आह। न चेति। नापीत्यर्थः। कस्यैवेति तादृशव्रतानुष्ठानस्यैवेत्यर्थः। एवेन केवलव्यवच्छेदः। उपसंहरति इतीति॥ २४४॥

५

## याज्ञवल्कीये २४५ श्लोकः।

किंचेति। तस्यान्यं तादृशसमाप्त्यवधिमाहेत्यर्थः। एवमग्रेऽपि। आद्यो वा मिथो विकल्पे द्वितीयः पूर्वविकल्पे विशेष इति तथा चोपायभेदकृतो रक्षणभेदो न तु स्वत इति भावः। तद्वदाहामुनैवेति। तन्निमित्ते। औषधदानादिनिमित्तके॥ २४५॥

## याज्ञवल्कीये २४६ श्लोकः।

१० आनीयेति। विप्राय दत्वेति शेषः। तोवाविशुध्यतीत्यस्यानुषंगः। वेत्यस्याग्रेऽपि संबंधा-

मि. पृ. २५२. दाह। यदि देति। तद्वदाहात एवेति। त्र्यवरमिति क्रियाविशेषणं। प्रतिरोद्धुः तदर्थं प्रवृत्तः शस्त्रेण क्षता उत्तरार्धे हिंसायां आनीयेति समानार्थं। सर्वस्वमिति। अस्यापि स्वातंत्र्याभावमुक्तरीत्यैवाहैतस्येति॥ २४६॥

## याज्ञवल्कीये २४७ श्लोकः।

१५ लोमप्रभृतीति। सक्थं चक्षुरुपहंतुमितिवत्प्रयोगः। प्रकारेति लौकिकाग्न्युपसमाधानादि-रूपेत्यर्थः। तदेव ततश्चेति चतुर्थ्यां तदंतेन तेषां संख्यामाह। चेति। अत एव मज्जांतामित्येवोक्तं। भ्रूणहेति। "भ्रूणहननं वक्ष्यामो ब्राह्मणं हत्वा भ्रूणहा भवति अविज्ञातं च गर्भं अविज्ञाता हि गर्भाः पुमांसो भवंति तस्मात्पुंस्कृत्य जुहुते" इत्यादिमंत्रमाह। लोमादीनिति। मंत्रांतरमाह। लोमभिरिति। अत्र च मूले च! उपसंहरन्सविशेषमाहातश्चेति। तेषां देवतात्वाभावाच्चेत्यर्थः।

२० सामर्थ्यात्स्वसामर्थ्यात्। क्वचित्तथैव पाठः। स्वधितिना क्षुरिकया। अतः उक्तहेतोः। वाजसनेयके तु मंत्राः श्रुताः "लोमभ्यः स्वाहा त्वचे स्वाहा लोहिताय स्वाहा मांसाय स्वाहा स्नावभ्यः स्वाहा मेदसे स्वाहा अस्थिभ्यः स्वाहा मज्जभ्यः स्वाहेति"। अत्र च लोमादीनां मंत्रसामर्थ्या-द्देवतात्वं। तेषामेव च लोमप्रभृति तनुं जुहुयादिति वचनसामर्थ्याद्धविष्ट्वमपीति तु अपरार्के उक्तं तदित्थं विरोधपरिहारः। प्रायश्चित्तरूपलोमादिहोमे वाजसनेयेऽन्ये मंत्रा वशिष्ठेऽन्ये। अतो

२५ मंत्राणामेककार्ये विधानात् विकल्पः। तत्र वाजसनेयमंत्रग्रहणे मंत्रेषु चतुर्थ्यंतनिर्देशाल्लोमादीनामेव देवतात्वं। तदुक्तं भट्टैः

"ताद्धितेन चतुर्थ्या वा मंत्रवर्णेन वेष्यते। देवता संगतिस्तत्र दुर्बलं तु परं परमिति"। हविरपि उक्तहेतो लोमादीन्येव। न चैकस्योभयं कथमिति वाच्यं। लोमादीति द्रव्याणि हवींषि। देवता तु तत्तच्छब्दसमवायिनी। तयोर्भेदात्। यदा तु वासिष्ठमंत्रा गृह्यंते तदा तत्र ताद्धितचतुर्थ्योरभावा-न्मात्रवर्णिकीदेवतामन्या तत्र लोमादिहविषां मृत्युसंबंधावगमान्मंत्रप्रकाश्य मृत्योरेव देवतात्वमिति।

३० न शुद्धयेत। यदि तदेति शेषः। इच्छयेति भावः। शालाग्निं औपासनं। अन्यदप्याह। तथेति। युक्तः पितृप्रेरितः सावधानो वा। चस्त्वर्थे। नेति औद्धत्यादिति भावः। अस्येत् क्षिपेत्। परिच्छदः पात्रादि।

त्रिरवाग्गिति । उत्थायेति शेषः । विशेषांतरं ब्राह्मणंहंतुस्त्रिवारमग्नौ । शक्तिः संगः । प्रवेशः प्रायश्चित्तमित्यर्थः । अन्नघातस्येति पाठः । छोछेदने । पूर्वेद्युः कृतोपवासस्येत्यर्थः । इदं चेति ।

मि. पृ. २५३. हरदत्तस्तु नेदं मरणांतिकं त्रिरिति नियमात अत्थायोत्थाय हि त्रिः पतन् यदि जीवति तदाऽप्यसौ शुद्ध एवेतीत्याह तन्न । सर्वस्मृत्येकवाक्यतया तथैव लाभा-त्प्रागुक्तमेव समत्यंतरमाह । तथेति । कथंचनेत्युत्तरान्वयि । दाढर्याय पुनराहैतच्चेति ॥ २४७ ॥ ५

## याज्ञवल्कीये २४८ श्लोकः ।

प्रायश्चित्तांतरमाहेत्यर्थः । वार्थमाहाथवेति । लक्ष्यार्थमाह । युद्धेति । तत्रापि विशेषमा-होभयेति । बलं सैन्यं । तदर्थमाह । मृत इति । पक्षांतरमाह । प्रहारेति । मानवस्य विदुषामि-त्यस्यार्थद्वयमाह । प्रायश्चित्यथमिति । प्रायश्चित्तार्थं लक्ष्यभावमापन्न इति । जामतामित्यर्थः । स्वेच्छयेत्यनेन प्रमादादंतर्गतस्य वधेऽपि न शुद्धिरित्यपि सूचितं । इदं चेति चेन पूर्वस्यापि संग्रहः । १० अत एव तत्र सामर्थ्यादित्युक्तं । ब्राह्मणस्य कोमलहृदयत्वात्तदसंभवः । तथा च भविष्यत्पुराणे ।

"हत्वा तु क्षत्रियो विप्रं गुणाढ्यमिह कामतः । प्रायश्चित्तं चरेद्वीर विधिवत्कायशुद्धये ॥
"लक्ष्यं शस्त्रभृतां वा स्याद्विदुषामिच्छयात्मनः । प्रास्येदात्मानमग्नौ वा समिद्धे त्रिरवाक्शिराः ॥
"यजेत वाऽश्वमेधेन क्षत्रियो विप्रघातकः । प्रायश्चित्तत्रयं ह्येतं क्षत्रियस्य प्रकीर्तितमिति" ॥

तथा च भृगुपतनेन मरणांतिकं प्रायश्चित्तं क्षत्रियान्यस्यापि बोध्यं । तदशक्तस्य तु क्षत्रियस्यो- १५ क्तरीत्या द्विगुण बोध्यं । भविष्योत्तरेऽपि

"क्षत्रियो निर्गुणो वीरो ब्राह्मणं वेदपारगं । निहत्य कामतो वीर लक्ष्यं शस्त्रभृतां भवेत् ॥
"चतुर्वेदविदं वीर ब्राह्मणं चाग्निहोत्रिणं । निहत्य कामेनात्मानं क्षिपेदग्नाववाक्शिराः ॥
"निर्गुणं ब्राह्मणं हत्वा कामतो गुणवान्प्रभुः । यजेत वाऽश्वमेधेन क्षत्रियो यो महीपतिरिति॥"

'मृतकल्प' इत्यनेनैव जीवनलाभे पुनर्ज्जीवान्नित्युक्त्या जीवन्नपीत्यस्य लाभादाहापीति । २० तिवृत्तमग्निष्टुत् गुण इति तद्विशेषणं । तथा च षड्यागविशेषाः "मनुना कीर्तितानीह त्रयोदश यथाक्रमामिति" भविष्यं तु शस्त्रमिति यथोक्तमरणांतिकप्रायाश्चित्तद्वयभिन्नपरमिति न तत् विरोधः । एतेन 'गोसवेनेति' 'स्वर्जिते'त्यस्य विशेषणं । भविष्ये त्रयोदशत्वश्रुतेस्तथा च द्वादश-वार्षिकाग्यवभृथस्नानांतानि त्रयोदशप्रायश्चित्तानीति शूलोक्तमपास्तं । उक्तयुक्तेस्तावताप्याधिक्यस्य दुष्परिहरत्वात् । वैपरीत्यसंभवेऽपि तथादुर्व(?)त्वात् । "यजेद्वाऽश्वमेधेन स्वर्जितागोसवसर्वस्तोमाभ्यां २५ वेति" हारीतविरोधात् । तदाशयानवबोधाच्चेति दिक् । अस्यैव विशिष्टस्यैव । तत्र द्वितीये तावन्मानमाह । यजेतेति । आद्ये मानमाह । नासर्वेति । आपस्तंबीये । "राजा सार्वभौमोऽ-श्वमेधेन यजेत" तथा सार्वभौम इत्युक्तं । तत्र कपर्दी अनियमश्च सार्वभौमः । सार्वभौमा भौमिति-कत्वादेवाप्यसार्वभौमो यः क्षत्रियो बलवान् रक्षणसमर्थः यो वलोऽश्वमेधेन यजत इत्यनुवादात् । राजाप्रतिघ इति चेति । तथा च विकल्पस्तत्र बोध्यः । यद्वा आपस्तंबैकवाक्यतया निषेधे ३० व्याख्याने च सार्वभौमशब्दस्तदुभयभिन्नपर इति न दोषः । यागानां व्यवस्थामाहेदं चेति । सार्वेति पूर्वान्वयि । अत एवाह । मरोति । चत्वारः आद्याः । मतीति पूर्वान्वयि । स्थित्वेति सुमयोतिष्ठसुमीवेति प्रयोगः । यत्तु 'स्वर्जिता गोसवेनेति' समानाधिकरणे इति मेधातिथि-

स्तन्न । तयोर्भेदात् । अत एव प्रागुक्तहारीतादिसंगतिस्तत्ध्वनयन्नाह । **स्वर्जितादयश्चेति । प्रथमेति ।** ज्योतिष्टोमेत्यर्थः । **द्वादशेति ।** तथा च । कामकारविषयत्वं तेषां इति भावः । **वा** चार्थे । पातित्यावस्थायामिति भावः । **अनधीति** उक्तगौतमादिति भावः । आधानादेरिति उपकारकत्वेऽपीति शेषः । **उत्तरेति** नैमित्तिकेत्यर्थः । विनियोजकाभावादिति भावः । **नन्वेवं** प्रयोजकादौ
५ ते न स्युरत आह । **ते चेति** । स्वर्जिदादयोऽपीत्यर्थः । **न्यूनशब्दो** धर्मपरः ॥ २४८ ॥

## याज्ञवल्कीये २४९ श्लोकः ।

**किं चेति** । त्रैवर्णिकस्य प्रायश्चित्तांतरमाहेत्यर्थः । एवमग्रेऽपि ! **मनुनिर्वाहायाह** । **निर्जनेति** । जनसामान्यसंचाररहिते इत्यर्थः । **नियतः** संयतः आहारो येन सः । आहाररहित इति यावत् । **हार इति** । त्रि वै वेदस्य संहितामित्यग्रे शेषस्तत्र वेदसंबंधिसंहितां परसन्निकर्षमिति
१० शाब्दोऽर्थस्तत्फलितमाह । **मंत्रेति** । अत एवाह । **संहितेति** । वेत्यस्यार्थो यद्वेति । तस्याविछिन्नत्वादाह । **प्रतिस्रोत इति** ।

मि. पृ. २५४. हविष्यं च मुन्यन्नं नीवारादि । ग्राम्यमपि पयोघृतादि । व्यवस्थामाहार्यं **चेत्यादिना** । **तादृशे एव** अव्यवहितपूर्वोक्ते एव । तथा च **भविष्यत्पुराणे**

"हंता यदा वेदहीनो धनेन च भवेद्गुरुः । तदेतत्कल्पयेत्तस्य प्रायश्चित्तं निबोध मे ॥

१५ "हविष्यभुग्वाऽनुसरेत्प्रतिस्रोतः सरस्वतीमिति" न । ननु सरस्वतीगमनं निमित्तपरतयाऽपि कुतो न व्यवस्थाप्यत इत्यत आह । **निमित्तीति** । चस्त्वर्थे । **व्रजेदिति** । ब्रह्महत्यापनोदाय मिति मितभुक् नियतेंद्रिय' इत्युत्तरार्द्धं । मितभुक् न यावता तृप्यति । नियतेंद्रियो ब्रह्मचारी विषयालोलुपः । अशक्तस्येति छेदः । निर्जनदेशगमनाहाराभावात्त्रिवारजपैस्तस्येनोगुरुत्वादिति भावः । एतेन **मेधातिथ्युक्ता** सर्वेषामन्यथा व्यवस्था चिंत्येति ॥ २४९ ॥

२० 
## याज्ञवल्कीये २५० श्लोकः ।

ध्वनितं प्रायश्चित्तांतरमाह । **किंचेति** । 'पात्रे' इति सप्तमी । तस्य तत्त्वेन विवक्षया आदातुः प्रतिग्रहीतुः धनपदार्थमगविति । **मन्वनुरोधेनाह** । **जीवेति** । एतच्च दृष्टिरूपं च चरुरिति तस्य स्थालीपाकस्य सत्वादिति भावः । अत एवाह । **वपुवेति** । अत एव तदेवत्यत्वं लब्धं । युक्तिविशेषेणैव विकल्पालाभादाह । **वाशब्दादिति** । **उपेति** । दद्यादित्यर्थः । अस्याग्रेऽप्यनुषंगः ।
२५ **परिच्छदशब्देन** यावत् गृहोपकरणं सर्पिस्तैलधान्यादि कुंडकटाहादि कुप्यशयनासनादि तत्सर्वं गृह्यते ।

त्रयाणां व्यवस्थामाहेदं **चेति** । विषये इति । तत्राशक्तस्येति शेषः । अन्वयं संततिः **मेधाथितिस्तु** धनं हि जीवेति पाठं धृत्वा सर्वस्वं यावत्किंचिद्गोहिरण्यादिकं तत्सर्वं देयं । अत्रार्थवादो 'धनं हि जीवनायालमिति' यावता धनेन दत्तेनान्यस्मै जीवितं दत्तं भवतीत्येव साम्यमिति
३० व्याचख्यौ । **मदनस्तु** जीवनपर्याप्तधनदानाशक्तः सोपस्करं गृहं दद्यात् । तत्राशक्तः सर्वस्वं दद्यात् । सर्वस्वपरिमाणमाहांगिराः

"**साशीतिपणसाहस्राद्र्ध्वं सर्वस्वमुच्यते । निर्धनो ब्रह्महा शुध्येत्सुखाधिक्यान्नरेश्वरः" ॥ इतीति** व्यवस्थापितवान् । व्यवस्थामेवाविरोधायाह । **यदपीत्यादिना** । 'चतुर्विधोपपन्ने' त्विति पाठः ।

चातुर्विद्यपाठः । प्रथमांतपाठे सभ्याविशेषणं विधिवद्विनिर्दिशेदित्युक्तं विधिमेवाह । **सेतुबंधे** तु दुष्कृतेत्यस्यैव विवरणं **महेति** । **ततः** स्नानात् । एतदंगभूतमंते दानमाह । **दत्त्वा चेति** । सुपवित्राणि गवादीनि चतुरि तदधीतवते पक्षांतरो मेदं "विंध्यादुत्तरतो यस्य निवासः परिकीर्तितः" । **पराशरमतं** । तत्तस्य सेतुबंधस्य दर्शनमित्यत्रैव छेषातस्यैवेदं नान्यस्येति बोध्यं । अत्र **कल्पतरौ** । सर्वोन्यथा । **पराशरपाठः** । तत्वं तु **माधवतो** ज्ञेयं । **समानेति** तत्राशक्तस्येति भावः । अत ५ एव **भविष्यत्पुराणे**

"जातिमात्रं यदा हन्याद्ब्राह्मणं ब्राह्मणो गुह । वेदाभ्यासविहीनो वै धनवानग्निवर्जितः ॥
"प्रायश्चित्तं तदा कुर्यादिदं पापविशुद्धये । धनं वा जीवनायालं धनं वा सपरिच्छदं ॥

"यद्वा **पराशरोक्तेन** प्रायश्चित्तेन शुध्यतीति" । संवत्सरं अभिव्याप्य कृच्छ्रमिति जातावेकवचनं । त्रिषवणीति त्रिषु सवनमभिषको यस्य स । षुञ् अभिषवे । **त्रिवर्षणीति** तु **कल्पतरौ** १० पाठः । वृषु सेचने । द्वंद्वोपपत्तिः प्राग्वत् । आध्यवसायः संकल्पः । जिघांसा हंतुमिच्छा । तृतीयं पक्षमाह । **पराकेति** । **सप्रत्ययेति** ज्ञानपूर्वकेत्यर्थः । एवमग्रेऽपि । **अप्रत्येति छेदः** । **संगमे** प्रायागाख्यतीर्थराजे । उपसंहरति । **एवमिति** । विशेषमा**हैतानि चेति** । **तु** ह्यर्थे । द्विगुणा

मि. पृ. २५५, अष्टौ ब्राह्मणाः त्रिगुणा द्वादशेतेऽत्र **प्रजापतिरपि**

"द्विगुणं त्रिगुणं चैव चतुर्गुणमथापि वा । क्षत्रविट्शूद्रजातीनां ब्राह्मणस्य वधे स्मृतमिति" ॥ १५ विपर्ययनिरासमाह । **एवं चेति** । तस्य द्विगुणौदो चेत्यर्थः । यथासंख्यमग्रेऽन्वयः । न्यूनतां परिहरति । **अनयैवेति** । **हीनोत्कृष्टेति** । हीनेनोत्कृष्टवधे इत्यर्थः । हेत्वसिद्धिं परिहरति । **दोषेति** । कंठतोऽत्रापि दंडगौरवस्यानुक्तत्वाद्दृष्टांतं मौलमेवाह । **यथोक्तमिति** । व्याख्यातमिदं । **अपवादः** । "अपवादस्तु निंदायामाज्ञाविश्रंभयोरपीति" **विश्वः** ।

विरोधं परिहरति । **यात्विति** । आनुलोम्ये ह्रासोक्तेराह । **प्रातीं** । उपलक्षणोक्तानुरोधेनाह । २० **चतुर्विधेति** । चौर्यवाग्दंडपारुष्यस्त्रीसंग्रहणरूपेत्यर्थः । तत्र द्वैगुण्यादेस्तत्वादिति भावः । न्यूनतां निराचष्टे । **तथेति** । **दर्शितं चेति** । **मूलकृतैवेति** भावः । **दंडेति** व्याख्यातं । तथा सति दिक्प्रदर्शनमाह । **ततश्चेति** । तद्भूत्कल्पने चेत्यर्थः । अध्यर्थं अष्टादशवार्षिकं । एवमन्यत्रापि । स्वसंनिहितोत्तमापेक्षयाऽधिकं स्वसंनिहितनीचापेक्षया न्यूनमित्येवं बोध्यं । प्राग्वदाहा**नयैवेति** ।

तथैवाह । **तथेति** । **आश्रमिणं** गृहस्थभिन्नानां ब्रह्मचर्यादीनां । **अपिः** पूर्वसमुच्चये । २५ **ब्रह्मेति** । तत्साक्षात्काराद्र्वागित्यर्थः । शौचवदित्यनेन सूचितमाह । **शौचवदितीत्यादिना** । मान्त्वमा**द्वैतादिति** । **शोधनमित्यस्य** व्याख्या **प्रायश्चित्तेति** । वर्द्धने भवतीत्यर्थः ।

तत्र प्रागुक्तमेव विशेषमाह । **ब्रह्मेति** । **पुनस्त्वर्थे** । प्रागुक्तां**गिरसमध्यपादद्वयमाह** । **बाल इति** । वस्तुतस्तु तस्याब्रह्मचारिषु सफलतयाऽस्य षोडशवर्षोत्तरं सावकाशतया तन्मध्ये उभयप्राप्तौ किं केन बाध्यमित्यत्र विनिगमकाभावाद्विकल्पः । तत्रार्हतीत्याद्युक्त्याऽत्र कुर्युरिति विधेरुक्त्या प्राबल्ये- ३० नेदमेव वेति बोध्यं । पत्यंशे एवातिबहुकालत्वाच्छंकते । **न चेति** । **विपत्तिर्मरणं** । **प्रवृत्तिरिति** आदाविति भावः । **व्यवसिते** प्रारब्धेरेवासाविति । रेवस्यादिति पाठांतरं । तथा चोभयत्र **शुध्या** और्ध्वदेहिकादित्यस्य भवत्येवेति भावः । इदमन्यत्रापि बोध्यं । अविशेषात् । अत एव सामान्यमप्याह । **व्यासोऽपीति** । **न शक्नोति** विपत्त्यादिना परिसमापयितुं । **प्राप्ते** कर्त्तरि क्तः ॥२५०॥

## याज्ञवल्कीये २५१ श्लोकः।

अधुना मुख्यब्रह्महत्यायां प्रायश्चित्तकथनानंतरं प्रारंभात्पूर्वं परिसमाप्तेरुत्तरं च नेदं स्थग्रहणा-
दित्याह। **दीक्षेति**। इष्टिविशेषा एते। **वर्त्तेति**। प्रारब्धापरिसमापितसोमयागप्रयोगावित्यर्थः।
'यत्क्षत्रं निधाय स्वान्यायुधानि ब्रह्मण एवायुधैर्ब्रह्मणो रूपेण ब्रह्म भूत्वा, यज्ञमुपवर्तेत'' इति।
५ अन्वयाय शेषमाह। **यदित्यादि**। सवनगतावित्यत्र कर्तरि आदिकर्मणि क्तं। **सवनं** सोमाभि-
षवः। एवं च दर्शादिस्थे तत्र नायं दोष इति भावः। श्रुत्या सोमयागं प्रति क्षत्रियस्य सोम-
यागकर्तुं ब्राह्मणत्वोक्तेश्च। **द्वादशेति** सवनस्थक्षत्रादिवधे इत्यादिः। अतिदेशप्राप्तं सांकर्यादि-
मि. पृ. २५६ निरासायाहात्र **चेति**। आतिदेशिके चेत्यर्थः। **आदिनात्रेयीवधः**। बहुवचनं
तद्भेदात्। विशेषमाह। **मरेति**। व्रतशब्दस्य तत्रैव रूढेः। एवमन्यत्रापि बोध्यं। नन्वेवं काम-
१० कृतेऽत्र तदभावापत्ति तत्र तस्यैव हितत्वादत आहात **इति**। तदभावादित्यर्थः। प्रागुक्तस्मृतित इति
भावः। **समन्यायेन** अतिदिष्टत्वात्किंचित् न्यूनतां प्राप्तां निराचष्टे। **तच्चेति**। **द्वादशेति**। सवनस्थ-
क्षत्रादिवधे इत्यादिः। इत्थं हि क्षत्रादिवर्णानुवृत्तौ सः ( १।९।२४।६–२० ) "पूर्वयोर्वर्णयोर्वेदा-
ध्यायं हत्वा सवनगतं वाऽभिशस्तो ब्राह्मणमात्रं च। तस्याविज्ञातमात्रेयीं च स्त्रियं। तस्य निर्वेशे-
ऽरण्ये कुटीं कृत्वा वाग्यतः शवशिरध्वजोर्धशाणीपक्षमधोनाभ्युपरि जान्वाछाद्य। तस्य पंथा वांतरा
१५ वर्त्मनी। दृष्ट्वा चान्यमुत्क्रामेत। खंडेन लोहितकेन शरावेण ग्रामे प्रविशेदभिशस्ताय भिक्षामति-
सप्तागाराणि चरेत। सावृत्तिरब्धोपवासो गाश्च रक्षेतासां निष्क्रमणप्रवेशेन द्वितीयो ग्रामेर्थो द्वादश-
वर्षाणि चरित्वा शिष्टैः सद्भिः संप्रयोग" इति। पूर्वयोः क्षत्रियवैश्ययोः। वेदाध्यायो वेदाध्येता-
सवनगतो दीक्षणीयासंस्कृतः निर्वेशः प्रायश्चित्तं शणनिर्मितवस्त्रार्द्धपक्षं इत्याद्यर्थः।

उत्तरार्द्धं व्याचष्टे। **गर्भमिति**। यथावर्णमित्यनुरोधेनाह। **विन्नास्विति**। अन्यत्र
२० तत्वाभावादिति भावः। प्रागुक्तरीत्या गुरुणाऽल्पस्यापि निर्वाहादाह। **पुरुषेति**। अत एव पूर्वं
**वसिष्ठ** उक्तः। **अविज्ञातं** चेत्यादि। तत्र प्रकरणाद्गर्भो ब्राह्मणस्य। तत्वं च एवमेव।
अविज्ञाता हीत्यनेन तद्वर्णपुरुषवधप्रायश्चित्तं सूचितं। तस्यातींद्रियत्वादाह। **व्यंजनेति**।
बहुव्रीहिरयं।

विप्रगर्भेशिनास्योपभोग इति शंकते। **अत्र चेति**। एषां मध्ये चेत्यर्थः। संभवादिति।
२५ तद्वधे चेति शेषः। **अपीति**। तथा च विकल्पापत्तिरिति भावः। **अर्थवदिति** सामान्ये-
नोक्तं तत्रापीति भावः। **यथायथं** यथायोग्यं यथाशास्त्रमिति यावत्। स्त्रीत्वाद्यनुसारेणेति भावः।

नद्यादौ विशिष्टस्यैव पाठादाह। **निषूदक इति**। तथेत्यस्यानुषंगमाह। **व्रतमिति**।
तदर्थमाह। **हन्येति**। तद्वर्णपुरुषवधसंबंधीत्यर्थः। रोगादिजत्वानिरासायाह। **ऋत्विति**।
अत्र ऋतुस्नातायां एतत् आत्रेयाख्यं। एष्यदिति पाठे भावीच्छाविषयभूतामित्यर्थः। इदं च व्युत्पत्ति
० प्रदर्शनार्थं वंध्याव्युदासार्थं चेति केचित् व्युत्पत्तिप्रदर्शनमात्रपरमित्यपरे **इत्यपरार्के**।
प्रथमोपस्थितत्वादाह। **अत्रिगोत्रजा चेति**। तदुत्पन्नेत्यर्थः। चेन विवाहादत्रिगोत्रायाः संग्रहः।
अत एव साधारणे मानमाहात्रीति। "एतन्महाव्रतं ब्राह्मणं हत्वा द्वादशसंवत्सरान्कुर्यात्"
इत्यादि 'मित्रं वे'त्यंतश्च। अत्र मित्रग्रहणं गुणवद्विषयं। मूले ब्रह्महत्यासमेषु तदुक्तिरगुणवद्विषयेति
न विरोधः।

"जन्मप्रभृतिसंस्कारैः संस्कृता मंत्रवच्च या। गर्भिणी त्वथवा या स्यात्तामात्रेयीं विदुर्बुधाः॥"

इति **यमाच्च**। प्रागुक्तगर्भिण्यपि स्त्री वधं विना गर्भवध औषधादिना तत्पातनं। उभयतात्पर्यमा**हैतदिति**। अत्र बोध्या मंत्रवत् ब्रह्मवादिनी क्षत्रस्यैतद्गोत्राभावेनाक्षत्रियात्रेयी तद्भिन्ना ग्राह्या। एवमग्रेऽपि। न्यूनतां परिहरति। **चशब्दादिति**। आत्मावित्यपेत्यंतेन ब्रह्महत्याव्रतान्।

"मुक्त्वा गर्भमविज्ञातमज्ञेतदेव व्रतं चरेत्। राजन्यवैश्यौ चेज्जातावात्रेयीमेव च स्त्रियम्" (११।८७), इत्युक्त्वा चैवेति। एतदेवेत्येकवचनात् द्वादशवार्षिकस्यैवातिदेश इति केचित्। अन्ये तु शुद्धिकरणसामान्यापेक्षं तदतः सर्वप्रायश्चित्तातिदेश इत्याहुः। ईजाने कालाविवक्षा उक्तहेतोः। एतेषां व्यवस्थामाह। **यत्रेति**। तत्राद्ये मानमाह। **यथेति**। **अनिंदितां** पातिव्रत्यादियुतां। द्वितीये मानमाह। **सवनेति**। सर्वतात्पर्यमाह। **एवं चेति**। प्रत्येकं त्रितीयवधे इत्यर्थः।

**अनुपेति**। अनुवाद्येत्यर्थः। गृहैकत्ववदिति भावः। अविवक्षावश्यकत्वसूचनाय प्रकृतानुप्रयुक्तत्वेऽपि वचनोल्लेखः इत्यस्य पूर्णव्रतस्य। एवं **मानवेऽपि** शंका बोध्या। **जनेति**। आत्रेयीसवनस्थाग्निहोत्रिणीभिन्नाया इत्यर्थः। उक्तहेतोरत एव पूर्वविरोधो न णर्थमिति अतिदेशवचनमित्यस्यानुषंगः। प्रागुक्तमेवोपसंहरति। **अत इति**। विशेषमा**हातीति**। **त्यागेति**। तद्रूपकार्यतादृशक्षत्रादिहंतरि नेत्यर्थः। **आदिना** द्विजातिकर्मभ्यो हानिरित्यादिपरिग्रहः॥ २५१॥

## याज्ञवल्कीये २५२ श्लोकः।

अन्यत्र तदतिदेशमाह **किंचेति**। एवमग्रेपि। तद्विना तदसंभवादाह। **ब्राह्मेति**। घातार्थमित्याद्यक्षरस्वारस्यादाह। **तद्वापेत्यादिना**। सृष्ट इति प्रसक्त इत्यर्थः। अत एवायुक्तत्वादेव। **किंचेति**। सवनस्थे तु ब्राह्मणहते सति हंतुर्व्रतं द्विगुणमिति शाब्दोऽर्थस्तत्फलितमाह। **यस्त्विति**। सवनशब्दस्तत्संपाद्ये सोमयागे लाक्षणिक इत्याह। **सोमेति**। प्राग्वदा**हान्विति**। **तस्मिन्**ब्राह्मणादौ। **आदिना** क्षत्रादौ पर्षदित्यनेन प्राप्तद्विगुणादेर्मूर्द्धावसिक्तावष्टादशवार्षिकादेश्च परिग्रहः। एतेन क्षत्रादिपरतयैवेदं योजयन्**मदनः** परास्तः। प्राग्वदाह। **तेषां चेति**। नन्वातिदेशिकेषु पादोनं चेत्समेष्वपि तथैव स्यादत आह। **ब्रह्मेति**। **अर्द्धोनमिति**। अनेन प्रागुक्तं किंचिन्न्यूनमिति पदं व्याख्यातं। अयं भावः। अतिदेशो द्विविधः। तद्रूपातिदेशः सादृश्यातिदेशश्च। तत्राद्ये पूर्ववचनसत्वे पूर्णमन्यथापादोनं द्वितीये त्वर्द्धमिति। एतेन यत्र समत्वोक्तिरतिदेशो वा तत्र साक्षादनुपदेशोपादानं यत्र तु साक्षादुपदेशः यथा वैष्णवे आत्रेयीवधविषये यागस्य क्षत्रादिवधविषयस्तत्र संपूर्णमेव। एवं **न्यायेना**तिदेशेऽपि संपूर्णमेवातिदेशस्याखंडत्वादिति **मदना**द्युक्तमपास्तं। यतु **भविष्यत्पुराणे**

मि. पृ. २५७.

"ब्राह्मणं यजमानं च हत्वा निष्कृतिमाचरेत्। चरित्वा द्वादशाहानि सेतुबंधं च पश्यतीति"॥ तत् गुर्वाचार्यादिरूपसोमयागकर्तृविषयं। यतस्तत्रैव

"निहत्य सुरशार्दूल हंतुर्वै ब्राह्मणस्य तु" अथवा गुरुविषयं प्रायश्चित्तमिदं। "गुरुवचनादेव शार्दूल तत्वतस्ते ब्रवीम्यहमि" त्युपक्रम्य "ब्राह्मणं यजमानं चेति" पठितं। अत्र द्वादशाब्दा-

नीति बहुत्वं **कापिंजलाधिकरणन्यायेन** त्रित्वे पर्यवसितं । युगपत्कामतोऽकामतो वाऽनेकब्राह्मणवधे **तत्रैव** विशेषोऽभिहित ।

"एककालं यदा हन्याद्युगपत्सुर....नं । निमित्तमेकमाश्रित्य हंति नैकेन वा विभो ॥
"ब्राह्मणं ब्राह्मणो वीर ब्राह्मणान्सुबहूनपि । निहत्य युगपद्वीर एवं प्राणांतिकं चरेत् ॥
५ "किंत्वत्र सुरशार्दूल विशेषं गदतः शृणु । बुद्धिपूर्वाबुद्धिपूर्वं विकल्पं शृणु पुत्रक ॥
"अकामतो यदा हन्याद्ब्राह्मणान्मानवो गुह । चरेद्वने तदा घोरे यावत्प्राणपरिक्षयं ॥
"कामतश्च यदा हन्यात् ब्राह्मणान्सुरसत्तम । तदाऽऽत्मानं दहेदग्नौ विधिना येन तं शृणु ॥
"भूत्वा निष्कालको वीर वेष्टयित्वा तु वाससा । घृताक्तेन महाबाहो दत्वा सर्वस्वमेव हि ॥
"हित्वा पादौ करीषाग्नौ दहेदात्मानमात्मना । उत्तमांगाद्धि विधिवत्तदस्येत्सुरसत्तम ॥

१० "एवमत्र महाबाहो निर्दोषः परिकीर्तितः ।" इति । निष्कालकः कालांतरानपेक्ष इति **स्मृतिमंजर्यां** । निर्गतं कालं कृष्णवर्णात्मकं केशादि यस्मात्स निष्कालक इत्य**परार्कादौ** । अत्र सर्वसाम्ये विकल्पो वैषम्ये व्यवस्था कल्प्येति सर्वनिबंधसंमतोऽर्थः । जातिशक्तीति **देवलसम्मतश्च** । यद्यपि न्यूनत्वस्य देहस्य परतया मानसपरतया प्रयोजकानुमंत्रादिपरतया वा बहुधा संभवादेकरूपा कल्पना दुर्लभा तथा च स्मृतिकाराणा तात्पर्यनिर्णयो दुर्लभ इत्य**वसिष्ट**मेव तत्र च **माधवा-**
१५ **चार्यै**रित्थमेवाशंक्यत एव निबंधेषु दृश्यते नैकवाक्यतेत्यनेन निबंधकारवचसामपि सत्प्रतिपक्षग्रस्तता मुक्ता तथापि पर्य्या(?)पूर्वनिबंधेषूक्तं तथैव मया लिख्यते इतिवदद्भिरतीव गहनत्वमेव **धर्मस्थस्फुटी-**कृतमिति न तत्राभिनिवेष्टव्यमिति दिक् । एतेषु कपालध्वजधारणादिकं नास्तीति बोध्यं॥ २५२॥

**इति ब्रह्महत्याप्रायश्चित्तप्रकरणम् ।**

---

## याज्ञवल्कीये २५३ श्लोकः ।

२० **क्रमेति** । उद्देशक्रमेत्यर्थः । एवमग्रेऽपि । सादृश्यं न वर्णकृतं किंतु स्पर्शकृतमित्याह । **क्वार्थेति** । क्वथेन स्पर्शमात्रान्मरणक्षममिति यावत् । अनतिप्रसंगाय रामार्जुनगतिस्त**र्योरिति-**वन्मिथः साहचर्याश्रयणमित्याह । स्पष्टार्थमाह । **धोन्विति** । विशेष**माहतत्रेत्यादिना** । **ताम्रेण** वेत्यत्र ताम्रवर्णामिति पाठस्तु पुनरुक्तिग्रस्तः । तथा च पात्रयोर्विकल्पः । **अंगिरसा** अन्यदप्युक्तं

२५ "भृगुप्रपाते पतनं ज्वलनं वा समाविशेत् । महाप्रस्थानमातिष्ठन्मुच्यते सर्वकिल्बिषादिति" ॥

एतच्च मरणांतिकं प्रायश्चित्तं कर्षदानादेष्टव्यं । अपि तु व्युत्पन्नश्चेत्स्वयमेव ज्ञात्वा कुर्यादव्युत्पन्नश्चेत्प्रायश्चित्तस्वरूपं विशिष्टेभ्यो ज्ञात्वा तदनुज्ञां विना स्वयमेव कुर्यात्तथा च **मनुः** ( ११।१४६ ) "मतिपूर्वमनिर्देश्यं प्राणांतिकमिति स्थितिरिति"। एवं **प्राणांतिकेषु सर्वत्र बोध्यं** । मात्रं कात्स्न्यें । अत **एवापिः** । सार्थकोऽग्रेहीति । तत्र पाठे तु अवधारणेयं तत्सुरेति **पेष्टीत्यर्थः** ।
३० **मुखे इति** पूर्वान्यपि । **अवाप्नुयादिति** ।

"गोमूत्रमग्निवर्णं वा पिबेत्सलिलमेव वा । **कुर्याद्वा**ऽनशनं तावद्यावत्प्राणैर्विमुच्यते ॥" **इति** ।

तच्छेषः । कुर्याद्वित्यनेन तत्पानेनाप्यमरणे यावत्प्राणवियोगं तदनंतरमनशनमित्यपि सूचितं । मरणांतप्रायश्चित्तानंतरं यत्र शवशरीरमस्ति तत्र मरणादेव पापस्य गतत्वाद्दाहादिसंस्कारः सद्य एव भवति । तथा च भविष्यत्पुराणं

"आयसे भाजने तप्तां ब्राह्मणो वारुणीं पिबेत् । अग्निवर्णां पापहरां ततः पापात्प्रमुच्यते ॥

"जीवितस्यांतकाले तु श्मशाने ... विधिरिति ॥"

विधिर्दाहादिः । कर्तव्य इति शेषः । शरीराभावेऽस्थ्नां पालाशविधिना वा संस्कारः कार्य इति बोध्यं । पिबेदिति "तयाऽस्य कार्ये निर्दग्धे मुच्यते किल्बिषात्तत" इति तच्छेषः । शास्त्रार्थेति । न तु स्वरूपापरिज्ञातेत्यर्थः । ५

मात्रं कात्स्न्र्ये । एवमग्रेऽपि । एवेनान्यनिरासः । तत्र तेषां मध्ये वा । वासिष्ठे प्रागुक्ते सुरात्वं सर्वो(?)डोपाधिरित्याह । मदेति । पानसं पनससंबंधि । द्राक्षासंबंधि मधूकसंबंधि खर्जूर- १० संबंधि तालसंबंधि इक्षुसंबंधि माक्षिकोत्थं क्षीरसंबंधि अरिष्टसंबंधि मिरिचसंबंधि नालिकेरजन्यं ।

मि. पृ. २५८. वासिष्ठादिगत्यर्थमाहातश्चेति । दृश्यते स्मृतिषु मधुमाक्षिकं । अन्यायश्चानेकार्थत्वामिति न्यायविरोधमाशंकते । न चेति । मदेति । तज्जननेत्यर्थः । तथा च शक्त्यवच्छेदकैक्यान्न स दोषः । तद्भेदे एव तत्वांगीकारादिति भावः । शुद्धयौगिकत्वाभिप्रायेण शंकते । न चेति । यं केति । पूर्वमतेपीदं बोध्यं । अतश्च तिसृषु मुख्यत्वाच्च प्रागुक्तमनूत्तरार्धमाह । १५ यथैवेति । एका मुख्या पैष्टी । सर्वा गौडी माध्वी च । असुरयोः सुराभिन्नयोः येन तत्र प्रायश्चित्तार्द्धं भवेदिति भावः ।

नन्वेवं तस्मादिति मनुना त्रयाणां मुख्यमात्रनिषेधबोधनात् द्विजोत्तमैरित्यनेन विप्रस्यैव तन्निषेधान्मिथस्तयोर्विरोधोऽत आह । द्विजोत्तमेति । पुरुषोत्तम इतिवत्प्रयोग इति भावः । हेत्वंतरमाह । तथेति । एवमग्रेऽपि । अन्नानां मलं वै निश्चयेन सुरो मुच्यते मलं च पाप्मोच्यत २० इत्यन्वयः । पाप्मा पापं । तत्त्वेन तस्य व्याख्यानं निंदातिशयदर्शनार्थं । ननु अत्रान्नशब्दो नौदनपरो रूढः बहुवचनरसंगत्यापत्तेः । अदनीयमात्रपरत्वेति प्रसंगापत्तिरत आहान्नेति । आदिना गोधूमादिभक्तसक्तु अपूपादौ प्रसिद्धतरतस्तत्र प्रयोगः । अत एव तत्र भेदोपपत्तिरिति भावस्तदाह । गुडेति । तथा च पिष्टविकारत्वात्पैष्टीत्वं तत्र सिद्धं तदाह । पैष्टचैवेति । अत इत्यादिः । इतेति । गौडीमाध्व्योरपीत्यर्थः । तु इति पाठांतरं । औत्पत्तिकस्तु शब्देनार्थस्य संबंध २५ इति न्यायेनाहौत्पत्तीति । इदं मानवं । दार्ढ्यायोपसंहरति । अत इति । तस्य तद्परत्वादित्यर्थः । कार्यमेवाह । गुर्विति ।

अत्र लाघवमाहैवं चेति । तत्र तस्य गौणत्वे चेत्यर्थः । अस्योद्धृतत्वादाह । नापीति । न चेति नापीत्यर्थः । एवं सति मिथो विरोधाभावादिति भावः । तदेवाहातश्चेति । अनुपलक्षणत्वेन तदेकवाक्यतया चेत्यर्थः । तस्मात् पापरूपत्वात् । मद्यानां मद्यानां तु पक्षेति देवानां ३० हविश्चरुपुरोडाशादिदर्शाद्युदितं अश्नता ब्राह्मणेन पश्वादीनां निंद्यानां भक्ष्यविवेकशून्यानामन्नमदनीयमद्यं मासं सुराऽऽसवं च न भक्षणीयमित्यर्थः । तस्य तानि भक्षितुं ये योग्याप्यानि न तानीति भावः । सुरासवमित्यत्र सुरैवाऽऽसवस्तमिति केचित्सुरा चासवश्च जातिरित्येकवद्भावस्तत् । आसवो मद्यविशेष एव । ब्राह्मणवसिष्ठन्यायेन पृथगुक्तिरिति मेधातिथिः । खार्जूरेति पूर्ववत् ।

अपिरकामसमुच्चये कथंचन शास्त्रार्थज्ञानेन तदज्ञानेन च एवार्थमेवाहासुरामिति। तयोः क्षत्रियवैश्ययोः। **क्षीबाविति**। उभौ चंदनचर्चितौ। एकपर्यंके शयिनौ इति मध्यः। संजयस्य धृतराष्ट्रं प्रत्युक्तिः। (?) मेवमनयोरपि ब्रह्मचारिणोरस्त्येव निषेधः। सामान्येन तदवस्थायां मध्वादिनिषेधकथनात् इति बोध्यं। **मानवं** योजयति। **एवमिति**। उक्तरीत्येत्यर्थः। **मात्रं** कार्त्स्न्ये।
५ **सत्येति**। तथा चाधमेव प्रायश्चित्तं तत्रेति भावः। परिहरति **अतश्चेति**। तथानिषेधाच्चेत्यर्थः। **वर्णेति**। उपनीता उपनीतेत्यर्थः। तत्र द्विजत्वमुपलक्षणं न तु विशेषणमिति भावः। वैपरीत्यनिरासायाह। **निमित्तेति**। अस्यादृष्टत्वनिरासायाह। **यथेति**। हविर्मात्रेति सकलहविर्निर्वापे सति तत्र चंद्रोदयस्येत्यर्थः। नन्वेवं तेषामपि मरणांतिकं स्यादत आहे**यांस्त्विति**। सर्वशब्दमि. पृ. २५१ ग्रहणादिति भावः। **आदिना** स्त्रीपरिग्रहः। एवं तत्र मुख्याविषये उक्त्वा-
१० न्यत्राप्याह। **तथेति**। तद्वदित्यर्थः। **नीतेन** तदादिना।

उभयत्र शंकते। **नन्विति**। अत्रैकं हेतुमाह। **प्रागित्याद्यवगतेरित्यंतेन**। नन्वयस्यान्यपरतयाऽपि सुयोजत्वादाह। **तथेति**। विशेषपरेत्यर्थः। आङभिविधौ। सुह्रादिति मध्यमपदलोपिसमासः। **वाक्ये** इति जातावेकवचनं। **स्थितिः** सिद्धांतः। कामकारे उक्तं प्रागकामकारे आह्वात **इति**। निषेधस्य तदाश्रयत्वादित्यर्थः। **इति** इत्यत्र। वचनात् वचनव्यक्तेः सर्वशब्द-
१५ बलादिति भावः। एतेन सुरापाने षट्कृच्छ्रः कल्प्या वक्ष्यमाणवचनादिति **मदना**द्युक्तमपास्तं। एवमुक्तमुख्यरीत्याऽन्यत्रापि तथाप्राप्तावकामकारे विशिष्याह। **तथेति**। किंचेत्यर्थः। बालः विप्रबालः। प्रकरणात्क्षत्रादेस्तदनिषेधाच्च। एवं चेदं विशेषपरमेव। **मोहात्** अज्ञानात्। अतः कामकृतेऽत्रापि द्वैगुण्यं द्रष्टव्यं। सूक्तं व्याख्यातं। अत एव तत्र भक्षपदस्वारस्यमपीति बोध्यं। **स्वल्पेति**। नञोऽल्पार्थत्वात्। अत एव दोषस्याल्पत्वादेव। गर्भैः गर्भाधाने क्रियमाणैः।
२० **होमैरित्यस्याग्रेऽप्यनुषंगः**। अत्र द्विजानामित्युक्तिस्वारस्येन येन तत्वसंपत्तिस्तेनैव तत्कृतदोषस्यापि निवृत्तिरन्यथा तत एव तदपि न स्यादिति भावः। तात्पर्यार्थ अन्यो मोहायाद्दा**र्यमिति**। **चस्त्वर्थे**। **कदाचिदपि** ब्रह्मचार्यन्यत्र निषेधः। **इतीति** शेषः॥ २५३॥

## याज्ञवल्कीये २५४ श्लोकः

**बालेत्यस्यार्थमाह**। **गविति**। अविनिगमकत्वात्सर्वग्रहणमिति भावः। **तयोः** तयोरपि
२५ तत्र सहनिर्देशादत्रापि तथोक्तं क्षीरस्यापीति **तु** तत्वं तत्र यथासंख्यसत्त्वात् जटीति वाशब्दस्तु पूर्वेण वक्ष्यमाणेन च व्यवस्थितविकल्पार्थ इत्यग्रे स्फुटीभविष्यति। एतेन वाशब्दान्मुंडो वेत्यपास्तं। **आदिना** जाटी वेत्यस्य परिग्रहः। यदत्रैव **मनुना** ध्वजीत्युक्तं तत्पानपात्रे ध्वजित्वमिति **मेधातिथिमदनादयः**। **इति** इत्यनेनास्यैवेति व्रतशब्दोक्तेरिति भावः। अत्र च अकामविषये च हेतुः कुर्यादित्यत्रान्वेति। तथाऽन्यप्रागवदत्रापि वचनसत्वे पूर्णमन्यत्र पादोनमिति व्यवस्था
३० बोध्या। पिंडानं तिलकल्कपिंडीकृतमिति पाठांतरं। कपिंजलाधिकरणन्यायेना। **वर्षत्रयेति**। **त्याग इति**। यथा च सकृदपि प्राणयात्रामात्रमेव कार्यं। न न्यूनमधिकं वेति भावः। **पतञ्च** पिण्याकादिभक्षणं च। **उदकेति** अकामत इति शेषः। कामतस्तु तत्पाने **छर्दनेतरं** व्यासेन

द्वादशवार्षिकाभिधानात् इति भावः। तदाहैतदेवेति। ब्रह्महत्याव्रतमेवेत्यर्थः। मधवच्छर्दने कृते इतिमद्यपः कृतच्छर्दन इति कल्पतरौ पाठः। एतेन द्वादशवार्षिकादि सर्वं मूलोक्तं जलबुद्ध्या सकृत्सुरापानच्छर्दनविषयं व्यासोक्तेः। पिण्याकादिभक्षणेन संव्यवहार्यत्वमेव नरकनिवृत्तिरिति कल्प्यं प्रायश्चित्तस्याल्पत्वात्। यद्वा द्वादशवार्षिकाशक्तं प्रत्युपदेशः स तु लोकद्वयेऽपि शुद्ध इति मदनाद्युक्तमपास्तं। व्यासवाक्ये तदतिदेशादेव मद्यशब्दो मुख्यसुरापर इति बोध्यं। ५

मतांतरं खंडयति। न चेति। तत्संसृष्टं ईषदुपलभ्य मानतद्गंधरसं च यदुदकं तत्पानेत्यर्थः।
मि. पृ. २९० इदं पिण्याकादिभक्षणं। संसर्गे मिश्रणेऽपि। तत्र दृष्टांतमाह। यथेति। दधिमिश्राज्यं पृषदाज्यं। तत्रैव किं मानमत आह्यत एवेति। तदनपायादेवेत्यर्थः। न्यायविद्भिर्जैमिनीयैः।

अविरोधमाह। यत्पुनरिति। 'गुरुदारान् च गत्वा ब्रह्महत्यामकृत्वेति' ब्रह्महत्यां चेत्यपाठः। त्रयाणां प्रत्येकं कृत्वेत्यर्थः। ब्रह्महत्यामकृत्वेति विशेषकथनं संसर्गप्राप्त्यर्थं। अत एव गुरुदारं चेति चसफलः। अग्रेऽर्थतोऽनुवादो न शब्दतः। अप इति त्रिषु सवनेषु प्रातरादिषु भूमिगतासु उद्धृतासु च स्नानमाचरेदित्यर्थः। एकेति। तथा च विकल्पः। सः पुनः पश्चात्तैः साम्यं प्रमुयादित्यर्थः। च यदि पुनः पश्चादपि तां न पिबेत्तु तदा तां स सकृत्पीत्वा यो भूमिदानं प्रकर्षेण कुर्यात्स संस्कृतः पुनरुपनयनाख्येन संस्कारेण तादृशः सन्विशेषेण शुध्यतीत्यर्थः। १५ स्वल्पत्वादाह। पूर्वेणेति। पिण्याकं वेत्यादिनेत्यर्थः। यागदानयोरुत्तमत्वादाह। यद्वेति। अत्रापि पिण्याकं वेत्याद्युक्तत्रैवार्षिकविषयेऽपि। आदिना रोगिणः स्त्रियश्च ग्रहणं। ऊढानूढाभेदेन विवाहस्योपनयनस्थानत्वात्। अपनुतिस्तज्जन्यदोषनिरासः। अग्रे व्युत्क्रमेऽप्यन्वयः। एतेनेदं गौडीमाध्वीपरमिति ज्ञानतः प्राणात्ययादिपरमिति च मेधातिथ्याद्युक्तमपास्तं सुसुराशब्दश्रवणात्।

अत्रैव शंकते। ननु चेति। तदंगेति। आन्यानयने चोदिते यात्रानयनवत् दोषस्य २० स्वल्पस्य प्रायश्चित्तस्याल्पत्वाद्दोषस्याप्यल्पस्यैव कल्प्यत्वात्। अस्यादृष्टचरत्वनिरासायाह। चरेदिति। इति इत्यादिना प्रायश्चित्तविधानेऽन्वयः। अत एवाग्रे आदिपदं। अत्र यथायथमन्वय ऊह्यः। तथा च तत्र पानशब्दस्तत्पर इति भावः। कृच्छ्रेति त्रैमासिकमित्यर्थः। विधिरिति पुनरुपनयनसंस्कार्यो भवेदित्यर्थः। रुक्मं हेम द्विजेत्यव्यवहितपूर्वान्वयि। पाने इति। पानविषयकसंकल्पमात्रविषयकमिति माधवादयः। याम्यमात्रं तद्विषयमिति सूचितं। २५ शुष्कसुरेति। सरससुराभांडोदकपाने तु साक्षतदवयवानां सत्वात्पादोनं सुरापानप्रायश्चित्तं कल्प्यं। तत्राप्यवयवाधिक्ये तु संपूर्णमेव अव्यवहितविषये एवाहाकामत इति। पुनस्त्वर्थे। मनूक्तमिति पाठः। यमोऽप्येवं। पयः क्षीरं। एवमग्रेपि। शृतं पक्वं। पाने सकृत्पाने।
मि. पृ. २९१. अत एवाह। ज्ञानत इति। क्षीरेणेति। पक्वामित्यर्थः। सुरापेति। सीमयाजिन इत्यादिः। तत्सोमेति सोमप इत्युक्तेरल्पत्वाच्चेति भावः। प्रागुक्तहेतोराह। मतीति। कल्प्य- ३० मिति। सांतपनं कृच्छ्रप्राजापत्यं वेत्यर्थः। तदेव ध्वनयन्नाह। साक्षादिति॥ २५४॥

## याज्ञवल्कीये २५५ श्लोकः।

रेत इति समाहारद्वंद्वः। पृथगुक्तिस्वारस्येनाविरोधाय भेदेनाह। ब्राह्मण इति। गौतमोक्ते-

राह । तत्रेति । ... व्याख्याने बीजमुक्तमेवाह्यात्रेति । मूले इत्यर्थः । दर्शितत्वादिति । ब्राह्मणं प्रत्येव मद्यपानस्य निषिद्धत्वादिति भावः । वस्तुतस्तु "नराश्वमेधौ मद्यं च कलौ वर्ज्यं द्विजातिभिः" इति माधवोदाहृतब्राह्मेण कलौ सर्वान्प्रति तन्निषेधान्न वाक्यभेद इति यथाश्रुतमेव समंजसमिति बोध्यं । मद्येति । त्रिविधान्येत्यर्थः । ननु तत्सत्वान्मुख्यपर एव कुतो नात आहाज्ञा-
५ नेति । अत्र अस्मिन् विषये । ततस्तदनंतरं । कुणपं शवशरीरं । अज्ञानादिति "मतिपूर्वमनिर्देश्यं प्राणांतिकमिति स्थितिः" इत्युत्तरार्धं ।

"यदि प्रमादेन पिबेत्सवर्णामनुगच्छति । सशिखं वपनं कृत्वा पुनः संस्कारमर्हतीति ॥" अङ्गिरा अप्येवं । पिबेदित्यत्र मद्यमिति शेषः । जननं चेति पूर्वान्वयि । अनीत्यग्रिमान्वायि । तस्य च न भवतीत्यर्थः । परिदानं "कस्य ब्रह्म" इत्यादेर्ददामीत्यंतमंत्रस्योच्चारणं । अथोपे-
१० तेति व्याख्यातं प्राक् ।

"पीत्वा प्रमादतो मद्यमिति कृच्छ्रं चरेत् द्विजः । कारयेत्तस्य संस्कारं शक्त्या विप्रांस्तु भोजयेत् ॥"

इति । बृहस्पतिरपि

"वपनं मेखला दंडो भैक्षाचर्या व्रतानि च । निवर्तंते द्विजातीनां पुनःसंस्कारकर्मणि ॥"

इति मनुः ( ११।१५१ ) । असुराया इत्यस्य साकांक्षत्वादेकदेशेन मद्येनान्वयः ।
१५ त्रिविधभिन्नस्येत्यर्थः । एवमग्रेऽपि । कृछ्रातिकृछ्र इति पाठः । एतेषामिति इदमकामतः । कामतस्त्विदमेव द्विगुणं अभ्यासे आवृत्तिः । अत्यभ्यासे तु मरणमेव । अज्ञानतोत्यंताभ्यासे द्वादशवार्षिकं इति बोध्यं । कामतः सकृदपि ताळादिमद्यपाने विप्रस्य मरणांतमेवेति तु प्राच्याः ।

एतच्चेति । अमुख्यमद्यपानविषये प्रागुक्तं सर्वं चेत्यर्थः । तत्र सुराशब्द उभयपर इति
२० तद्विषयमनुक्तमाह । सुरायाश्चेति । एतेन द्रव्यांतरसंस्पृष्टसुराया बलात्पाने । तत्राप्यशक्तविषयमिति मदनाद्युक्तमपास्तं । पानेषु सकृत्पाने । एवमग्रेऽपि । अत्रैवाभ्यासे "विधेः प्राथमिकात्" इति न्यायेनास्य द्वैगुण्यं हि कल्पनीयं दर्शितत्वादिति । तथा च भविष्यपुराणं "गौडीमाध्व्योस्तथाभ्यासे प्राणांतिकमुदाहृतम्" इति । तथाऽज्ञानतः अमत्याऽत्यंताभ्यासेऽपीदं । तथा च माधवीये व्यासः

२५ "मत्या मद्यममत्या वा पुनः पीत्वा द्विजोत्तमः। ततोऽग्निवर्णां तां पीत्वा मृतः शुध्येत्स किल्बिषात्॥"इति

मि. पृ. २६२. प्राग्वत् । मुख्यभिन्नस्थले उभयत्राह । मद्येति । एकद्विविधेत्यर्थः । पाने सकृत्पाने । वर्तयेत् जीवेत् । अत्रेत्रिरात्रत्वाविशेषेऽपि द्रव्यकृतगौरवज्ञेयं । अत्यंतेति । उभयथापीति भावः । पयसा पक्वं । प्राग्वदाहैतेषु चेति । अत्रत्त्वमप्युक्तं प्राक् । तदेवाभीष्टमाहेदं चेति । कल्प्यामिति छर्दनं घृतप्राशनमहोरात्रोपवासश्चेति प्रागुक्तमेवेत्यर्थः ॥ २५५ ॥

३० ## याज्ञवल्कीये २५६ श्लोका ।

शूद्रविषये वक्ष्यमाणत्वादाह । द्विजातीति । ब्राह्मणीत्यस्यार्थमाह । द्विजातीति । लिङ्गार्थोऽविवक्षित इत्याह । पिबतीति । तत्प्राप्तौ हेतुमाह । कृतेति । 'इहैवे' त्यस्यार्थो

**लोके** इति। नरकभोगानंतरमिति भावः। यौगपद्यासंभवादाह। **क्रमेणेति**। ननु विशेषपरस्य कथं सामान्यपरत्वमत आह। **ब्राह्मणीति**। अत्र न त्वन्यत्र भार्या इति शूद्रापर्यंता इति शेषः। तथा च ताभिः सर्वाभिः सुरा न पेया। पाने त्वथं प्रायश्चित्तं। तदेव ध्वनयन्नुपलक्षणत्वे मानमाहातं **एवेति**। तस्योपलक्षणात्वादेवेत्यर्थः। **मन्वर्थमाह**। **धर्मेति**। वस्तुतस्तत्वाभावादाह। **त्वमिति**। **वेति**। साकांक्षत्वाच्छेषमाह। ५ **तस्येति**। 'पतितेति' कर्मधारयो न बहुव्रीहिरित्याह। **पतितस्य चेति**। एवं शब्दार्थमुक्त्वा तात्पर्यार्थमाह। **तस्मादिति**। **भार्यया** स्वसवर्णया। नन्वेवं व्यर्थमिदमत आह। **तस्मादिति**। **लिंगेति**। उद्देश्यगतत्वादिति भावः। वचनं **मानवं** परमतात्पर्यार्थमाहात **इति**। तस्या अपि निषेधप्राप्तेरित्यर्थः। **भार्याभिः** सर्वाभिः शूद्रांताभिः। अयं श्लोको व्याख्यात्रा सुरापदस्योत्तरार्धस्य चानुरोधेनेत्थं व्याख्यातः। अत्र द्विजभार्येत्येव वाच्ये। ब्राह्मणी- १० त्युक्त्याऽन्यदपि सूचितं। तत्र चार्षत्वात्पुंयोगे ङीष् न ङीन्। तथा च ब्राह्मणाभार्यया शूद्रया- ऽपि मद्यमात्रं न पेयं। ब्राह्मणस्य निषिद्धत्वात्। यदि सा पिबति तदा पातित्यं नास्ति निषेधस्य शूद्रवर्णविषयत्वात्। तत्संसर्गात्पत्युर्ब्राह्मणस्यापि न पातित्यं किं त्वेनस्वित्वं गर्भे च दोषः। तावच्छूद्रावेदनमेव न सर्वसंमतं तत्रापि पीतमद्यया सह संसर्ग इति स्वल्पदोषोऽस्त्येव। अत एवोपपातकमध्ये "मद्यपस्त्रीनिषेवणम्" इति। पठितं तदेत- १५ त्सर्वमभिप्रेत्योक्तं **शंखेन** "सुरालशुनपलांडुगृंजनमांसादीन्यभक्ष्याणि वर्जयेदाहारमयं हि शरीरं तन्मयत्वात् ब्राह्मणः संकीर्येत मातुराशितपीतादिभिर्गर्भः संभवतीति"। क्षत्र- विट्भार्ययोर्मद्यविषये प्राग्वद्बोध्यं। तदेव ध्वयन्नाह शूद्रेति। अन्यत्र यथायथं दोषसत्वादाह। **शूद्राया इति**। सर्वस्येति भावः। अत्रापि प्राग्वत्ताद्रूप्यातिदेशे वचनसत्वे पूर्णमन्यत्र पादोनं साम्यातिदेशे तु अर्द्धं इति बोध्यम्। तदाह **सुरेति**। सुरापानशब्दे वा भावकरणयोरिति णत्व- २० विकल्पः। एतेन समातिदेशयोः पादोनकल्पनं ब्रह्महत्यायामेव महापातकमध्ये तस्यागुरुतरत्वा- दादिपाठाच्च। अत्र तु साम्येऽर्धं तदतिदेशे द्वितीयकक्षायां प्रायश्चित्तप्राप्तेः। साक्षाद्वर्णातातिदेशे तु प्रथमकक्षायामेव तत्प्राप्तिरिति पादोनं येषां कौटसाक्ष्यादीनामुभयसाम्यं तत्राधिकपक्षाश्रयणेन पादोनमेव यद्वा शक्तिमतः पादोनं अशक्तस्यार्धं **न्यायेना**तिदेशे तु संपूर्णमेवातिदेशस्यासंकोचत्वा- दिति **मनुनाद्युक्तमपास्तं** ॥॥ २५६ ॥ २५

**इति सुरापानप्रायश्चित्तप्रकरणम् ॥**

---

## याज्ञवल्कीये २५७ श्लोकः।

संबंधांतरनिरासायाह। **स्वामीति**। स्वर्णशब्दोऽत्र परिमाणपर एवेत्याह। **सुवर्णमिति**। अस्य तात्पर्यार्थं संभवतीति न्यायेनाह। **मुसलेति**। तेनेत्यादेरर्थमाह। **तेन राज्ञेति**। अभिषेकादि- गुणयुक्तजनपदपरिपालकक्षत्रियेणेत्यर्थः। तस्यैव शासने शास्त्रेणाधिकृतत्वात्। मि. पृ. २६३ **मुक्त इति**। मरणादिः ग्रहणं परस्वस्योपादानमिति यावत्। **स्कंधेनेति** (मनुः ११।९८–१०२) ३०

"अत ऊर्ध्वं प्रवक्ष्यामि सुवर्णस्तेयनिष्कृतिं।

"सुवर्णस्तेयकृद्विप्रो राजानमभिगम्य तु। स्वकर्म ख्यापयन् ब्रूयान्मां भवाननुशास्त्विति॥

"गृहीत्वा मुसलं राजा सकृद्धन्यात्तु तं स्वयं। वधेन शुध्यति स्तेनो ब्राह्मणस्तपसैव वा॥
"तपसाऽपननुत्सुस्तु सुवर्णस्तेयजं मलं। चीरवासा द्विजोऽरण्ये चरेत् ब्रह्महणो व्रतं॥
"एतैर्व्रतैरपोहेत पापं स्तेयकृतं द्विजः।
"राजा स्तेनेन गंतव्यो मुक्तकेशेन धावता। आचक्षाणेन तत्स्तेयमेवं कर्मास्मि शाधि माम्॥"

५ इत्यादि। (८।३१५)

"शासनाद्वा विमोक्षाद्वा स्तेनः स्तेयाद्विमुच्यते। अशासित्वा तु तं राजा स्तेनस्याप्नोति किल्बिषम्॥"

इत्यंतश्च। शाधि जहि लकुटं षष्टिकां असिखड्गं अग्निं वोभयतस्तीक्ष्णम् इति। पाठांतरं " आग्निः स्त्री काष्ठकुद्दालः शक्तिं वोभेति " पाठांतरं। तुर्यतात्पर्यार्थमाहैवमिति। उक्तप्रकारेणेत्यर्थः। अर्थांतरस्य खंडयिष्यमाणत्वादाह। **मरणादिति**।

१० अस्य तात्पर्यार्थमाह। **जीवन्निति। ततः** तस्मात्ततः। तथापि। अत्र दृष्टांतमाह। **यथोक्तमिति**।

अर्थांतरमाह। **नन्विति**। पुनः शंकते। भवत्विति। अत्र क्रमे हेतुमाह। स्नेहेति। **ज्यायसीति**। **माधवस्तु** एकस्य तस्य मरणे बहूनां पोष्याणां तदीयमित्रपुत्रकलत्रादीनामनाथतया मरणं संभाव्य यदि राजा दयया धनदंडादिपुरःसरं स्तेनं मुंचति तथाऽपि शुद्ध एवेत्याह। **प्रायश्चित्तीति**।

१५ "अकुर्वन् विहितं कर्म विहितं च समाचरन्प्रसज्जश्चेंद्रियार्थेष्विति। अस्यादिः। उपसंहरति **तादीति**। **अत** इत्यादिः। प्रागुक्तमत्रापि दृष्टांतमाह। **यथेति**। राज्ञ इति कर्तरि षष्ठी। नन्वेवं विप्रस्येहं नैवं स्यादत आह। **यदीति**। कथंचित् **गौतमानु**रोधान्मनुमाह। **वधेनेति**। प्रागवत्। ब्राह्मणग्रहणमुपलक्षणमित्याह। **ब्राह्मणस्यापीति**। वधनिषेध इति। तथा च वधस्तदन्यपरः। वाऽन्याशयक इति भावः। **केवले** त्यनेन समुच्चये निरासः। **अपि**ना वधसमुच्चयः। इदमेव द्रढयति। **यदीति**। तत्रैवाविनिगमकत्वा-

२० दिति भावः। अन्याशयमाह। **न च दंडेति**। नन्वत्रानिर्दिष्टत्वेऽपि दंडप्रकरणे तत्वमस्त्येवात आह। **किंचेति**। अर्थशब्दः फलपरः। **जैमिनीयमिदं**। **न च** न हि। चस्त्वर्थे। तस्माद्विकल्पानुरोधेन तस्य न वधनिषेधपरत्वमपि तु तत्परत्वमिति तस्य वैकल्पिकतत्सिद्धिरिति प्रागुक्तं सिद्धं। नन्वेवमपि नन्विकल्पो युक्तो **मानवः** सामान्ययोर्विशेषयोर्वा तत्संभवेऽपि सामान्यविशेषयोर्बाध्यबाधकभावस्यैव दृष्टत्वादित्याशयेनाह। **न चेति**। नापीतीत्यर्थः। हि यतः। **वेतीति**। अपि

२५ तु तेन तस्य बाध इति। तद्रहित एव प्रयोग इति भावः। उक्तरीत्या विकल्पोपपत्त्यर्थमुपसंहरति। **तस्मादिति**। ब्राह्मणग्रहस्योपलक्षणत्वादिति भावः। इदं च निषेधमभिप्रेत्योक्तं। वस्तुतस्तु एवं न तस्य दंडप्रकरणस्थत्वादित्याह। **यद्वेति**। **न जात्विति**। निषेधो नेत्यर्थः। अत एव

मि. पृ. २६५. प्रकृतप्रकरणस्थमाह। **मनुनेति**। **ब्राह्मणेति**। तदादीत्यर्थः। तस्य तत्वमाह। **न जात्विति**। अत्र च मूलादौ च जालेति मूलं व्याख्यातं प्राक्। अतः परिभाषासत्वात् संभवतीति **न्यायेनाह**। **नहीति**। ननु तत्वेऽप्यन्यार्थत्वमेवास्त्वित्यत आह। **नापीति**।

३० **अतदिति**। तत्तात्पर्यकत्वाभावादित्यर्थः। एतेन व्यवहारः संगृहीतः। अत एव उभयार्थत्वाभावादेव वैयाकरणैरित्यर्थः। **जैमिनीय**संमतिमप्याह। **तथेति**। तद्वदित्यर्थः। **न चेति**। तत्प्रकरणात्पूर्वं पाठादिति भावः। तावदिति प्रकरणभेदादिति भावः।

अभ्युपेत्याप्याह । **किंचेति** । अपिस्तत्समुच्चये । अत एवाह । **नातीवेति** । **शब्दैकेति** । ब्राह्मणसुवर्णापहरणमित्यादीत्यर्थः । **एकांततः** नियमेन । ततश्छन्दस्य साकांक्षत्वात् । उपसंहरति । **अत इति** । तत्रात्यंतानुपयोगादत्र वैपरीत्यादित्यर्थः । युक्तमित्यत्रान्वयः । युक्तांतरमप्याह । **किंचेति** । **बालो** गवादिलोम । तथाऽपन्हते अस्याग्रेप्यनुषंगः । प्रमाणे सर्वत्र मात्रचप्रत्ययः । चस्त्वर्थे । न केवलं तावदेवेत्याह । **गायेति** । गायत्र्या अष्टाधिकसहस्रमयीत्यर्थः । **दिनं** । सूर्योदयात्तदस्तपर्यंतं दिनद्वयं । तथा स गायत्रीजपं दिनद्वयं । **यावकी यावका**हारी । अविरोधमाहेदं **चेति** । तच्छेषमेवाह । **बलादिति** । ऊर्ध्वमुक्तत्वेनाह । पौनरुक्त्यायाह । **सुवर्णेति** । विशेषमाहेदं **चेति** । **ब्रह्मेति** । ब्रह्मस्वत्वं प्राप्तस्य । **सुवर्णादेः** स्तेयकृते सति । **पुनः** पश्चादेकादशगुणं अपहृतं तेन तस्मै देयमित्यर्थः । तया तद्वत् तदिति अपहृतं दत्वेत्यर्थः । **उक्तमिति योगिनेति** भावः । तथा च हृतादेकादशगुणं द्रव्यस्वामिने दत्वैव तत्कार्यं । तथा च **लघुविष्णुः**

"स्तेये ब्रह्मस्वभूते तु सुवर्णहरणे कृते । पश्चात्तेन दातव्यं तस्मै ह्येकादशाधिकं ॥
"ऋणं संशुद्धिभावाय ततश्चांद्रायणत्रयं । संवत्सरेण कर्तव्यं निपुणा शुद्धिमिच्छता ॥"इति।

एकादशगुणदानं सर्वस्तेयप्रायश्चित्तविशेषः । तस्य ऋणसंशुद्धिरूपत्वात् । चांद्रायणत्रयं यवमध्यपिपीलिकामध्ययतिचांद्रायणात्मकं संवत्सरेण कार्यं । चांद्रायणत्रयाभ्यामेन संवत्सरं यावत्प्रायश्चित्तं कार्यं । एतच्च संवत्सरयावकव्रतेन विकल्पते । एकादशगुणदानासमर्थं प्रति स एवाह

"अभावे कांचनस्य स्याद्व्रतमेतच्चतुर्गुणं । चरेद्यतात्मा निःसंगः पूर्णं वर्षचतुष्टयं ॥
"समाप्ते कांचनं गाश्च राजतं वाऽपि शक्तितः । देयमन्नं द्विजाग्रेभ्यः शुभं पापोपशांतये"॥

इति । एतद्व्रतं चांद्रायणत्रयं वत्सरेण कार्यमित्येतन्मरणांतिकप्रायश्चित्तादर्वाचीनेषु स्तेयप्रायश्चित्तेषु एकादशगुणदानसमर्थस्य चातुर्गुण्याचरणमनेन **न्यायेन** प्राप्तं । तत्र जातिशक्त्याद्यपेक्षया द्वैगुण्यादि कल्प्यं । **हंतुमिति** मुशलादिना ।[१] अप्यर्थमेवाह । **द्वितीयमिति** । **तेन वसिष्ठेन** ।

[१] मि. पृ. २६५.

**द्रव्येति** सुवर्णेत्यर्थः । अविनिगमकत्वादाह । **क्षत्रीति** । क्षत्रादिभिर्ब्राह्मणसुवर्णापहारविषयमपीत्यर्थः । वा चार्थे । **तत्र वासिष्ठे** । मरणांते ते । अत्र पक्षांतरमाह । **तथेति** ब्रह्महत्यावदित्यर्थः । **आदिना** विप्रः । आद्यस्य नियतत्वेऽपि गोसवस्य साधारणत्वात् ॥ २२७ ॥

## याज्ञवल्कीये २५८ श्लोकः ।

**नृपे** इति सप्तमी । तस्य तत्त्वविवक्षया । **वार्षिकं** संपूर्णं । आत्मतुल्यसुवर्णदानादिगुरुतरप्रायश्चित्तसमपाठात् । **एतच्चेति** । एतेन रजतादिबुध्या कामतोपहारे इदं । अकामतस्तद्बुध्यापहारे तु षड्वार्षिकमिति शूलोक्तमपास्तं वक्ष्यमाणदोषात् । बुद्ध्या वा अपहरति । **पुनः** पश्चात् । **न च** नापि । **मात्रपदेन** जातेरिव तत्कार्यकरणसमर्थत्वस्यापि निरासः । तेन न बर्बुरादौ दोषः । **नेदमिति** अपहारकृतदोषे न तज्ज्ञानं हेतुः किंतु तत्सतेतिभावः । इदमेव द्रढयति । **न चेति** । अनभिज्ञस्य शंकेयं । **यच्चेदमिति** । यदपि प्रायश्चित्तमित्यर्थः । **सम्यगर्थौति** स्वरूपसन्नित्यर्थः । उपसंहरति । **अत इति** ।

उत्तरार्धं व्याचष्टे । **अस्मिन्नेवेति** । अत्यंतधनिकश्रोत्रियविषयमिदं । तीर्थयात्रासहितं षड्वार्षिकं निर्धनश्रोत्रियविषयमिति **माधवः** । प्रागुक्तद्वादशवार्षिकनिरासायाह । **तप इति** । विशेष-

माह। **यदा त्वित्यादिना**। द्रव्यं सुवर्णं। ईदृशं निर्गुणास्वामिकं। **अत्रिमेवाह**। **षडब्दमिति**। **प्रत्यर्पयाति** स्वामिने। **त्यजति** मार्गादौ। इदमुभयमपि प्रागुक्तं। **नन्विति**। एवं चोभयतः

मि. पृ. २६६. स्पाशा रज्जुरिति भावः। **चस्त्वर्थे**। **पुष्कलेति** तल्लक्ष्यस्येत्यर्थः। एवं तत्र तस्याल्पत्वे सति। **तस्य** चोरस्य। अत्रैव विशेषमाह। **यस्त्विति**। इदं त्रार्षिकादि।

५ अत्र संसृष्टत्वमवयवत एव अन्यथा शंकाया एवासंभवात्तद्वाथेति। प्रागुक्तैवाक्यतया आह। **तत्सुवर्णेति**। **प्रत्यहमिति** पूर्वान्वयि। प्राग्वदाह। **तदिति**। एवमन्यान्यपि व्यवस्थाप्यानि। तथा च **भविष्यत्पुराणे**

"माहापातकनिर्देशे तृतीयं स्तेयमुच्यते। न चाप्यबुद्धिपूर्वं तु क्रियते केनाचित्कचित्॥
"महत्यपकृते पुत्र तथा चान्यकृते गुह। जात्येकत्वं वा विशिष्टमुशंति ऋषयो गृह॥
१० "हेतुर्विशेषो देवेश ह्रियमाणविशेषतः। अर्थस्याप्रमाणाय विशेषो निष्कृतेर्भवेत्॥
"ब्राह्मणद्रव्यविशेषात्प्रयोजनविशेषतः। अनुबंधविशेषाच्च प्रायश्चित्तं विधीयते॥
"हृत्वा तु कांचनं विप्रो गुणिनो ब्राह्मणस्य तु। स्वयं च निर्गुणो वा स्याच्चरेद्ब्रह्महणो व्रतम्॥
"यदा च निर्गुणः स्वामी क्षत्रियो वैश्य एव वा। हर्ता च ब्राह्मणो वा स्यात्तदापस्तंबभाषितं॥
"क्षत्रियस्य सुरश्रेष्ठ गुणैर्हीनस्य कृत्स्नशः। हृत्वा कांचनं विप्रः प्रायश्चितमिदं चरेत्॥
१५ "चतुर्थकाले भुंजानास्त्रिकालं स्नानमाचरेत्। स्थानासनाभ्यां विहरंस्त्रिभिर्वर्षैर्विमुच्यते॥
"क्षत्रादीनां गुणवतामल्पेऽह्यपहते गुह। अल्पानुबंधे च तथा एतदेव भवेद्विभो॥
"श्रेष्ठविप्रसुवर्णं तु प्रभूतमपहृत्य च। स विशिष्टानुवधं च ब्राह्मणो द्यूतवल्लभः॥
"प्रायश्चित्तमिदं कुर्याद्वदतो मे निबोधय। लोभहीनो घृताक्तश्च आत्मानं पावके क्षिपेत्॥
"हृत्वा तु कांचनं वीर क्षत्रियो ब्राह्मणस्य तु। सानुबंधो ह्यनाढ्यस्य दुरोदरपरो गुह॥
२० "आत्मानं स हनेद्वीर शस्त्रेणौडुंबरेण तु। ततः शुद्धिमवाप्नोति दिष्टांते प्राणवर्जितः॥"
दिष्टांते आयुर्दैवभाग्यविच्छेदे।
"हृत्वा तु कांचने वैश्यो गुणिनो ब्राह्मणस्य तु। व्यसनी गुणहीनश्च सानुबंधः सुराधिप॥
"कृत्वा पाशं केशदाम्ना तदात्मानं सुराधिप। तद्वच्च त्यजाति प्राणांस्ततः शुद्धिमवाप्नुयात्॥
"चरेत्सांतपनं कृच्छ्रं तन्निर्यात्यात्मशुद्धये। गृहीतं स्वामिने दत्वा"
२५ आत्मशुद्धये मरणांतिकप्रायश्चित्तकरणयोग्यतायै अमुमेवार्थमाह

"तन्निर्यात्येति तु वाक्यं प्रवहंति मनीषिणः। तत्पूर्वं चैव योग्यस्य सूचकं नात्र संशयः।"

तन्निर्यात्येति तु वाक्यमिति चरेत्सांतपनमिति पूर्ववाक्यं। तत्पूर्वं मरणांतिकप्रायश्चित्तात्पूर्वं योग्यस्येति भावपरं योग्यत्वसूचकं। अपहृतद्रव्यं दत्वा सांतपनाचरणांतिकप्रायश्चित्तं कुर्यादित्यर्थः।

"क्षत्रियस्य तु बालस्य ब्राह्मणो हरते यदि। पंचनिष्कप्रमाणं तु सुवर्णं कैतवं प्रति।
३० "कृष्णाजिनी जटी दंडी मिताशी विजने वने। जपमानोर्कसूक्तं च चरेद्ब्रह्महणो व्रतं॥
"क्षत्रियस्य गुणाढ्यस्य हृत्वा विप्रस्तु निर्गुणः। चतुर्थकाले भुंजानास्त्रिभिर्वर्षैर्विशुध्यति॥
"क्षत्राद्योऽपि गुणिनोऽल्पमूल्यानुबंधि वै। कृत्वा चौर्यमनेनैव शुद्ध्येयुर्नात्र संशयः॥
"विप्रस्य गुणवान् विप्रो निर्गुणस्यापहृत्य तु। चतुर्थकाले भुंजानस्त्रिभिर्वर्षैर्व्यपोहति॥

"ब्राह्मणस्य गुणाढ्यस्य हत्वा विप्रस्य निर्गुणः। प्रभूतं सानुबंधं च स शुध्येत्तु कटाग्निना ॥
"गुणवान्ब्राह्मणो हत्वा क्षत्रियस्यागुणस्य च। चरेत्सांतपनं कृच्छ्रं तन्निर्यात्य आत्मशुद्धये ॥
"एवमन्यान्यपि विभो प्रायश्चित्तानि भागशः। सुवर्णस्तेयविषये स्थापनीयानि पंडितैरिति ॥"

**अत्रापि**। स्तेयविषयेऽपि। **यानि च** यान्यपि। **रूप्यं** कर्षमितं। **गद्याणेति**। किंचिदधिक-शास्त्रीयमाषत्रयेत्यर्थः। टंकपरिमितेत्यर्थ इति केचित्। तत्वं तु **मत्कृतमूलाध्याय**विवृत्तौ द्रष्टव्यं शतादिकमपि गद्याणस्यैव। **समेति**। तदर्धेत्यर्थः। **तदिति** उपपानकत्वनिवृत्त्यर्थ-मित्यर्थः। हेमविधिरित्यनेन साम्यातिदेशो न स्वरूपातिदेश इति भावः। **हीनेति** क्षत्रियादि-रत्नापहारविषयं च उत्तमरत्नापहारस्य सुवर्णस्तेयसमत्वादित्यपि बोध्यम्। गद्याणसहस्राधिक-मूल्यविप्रस्वामिकवस्तुमात्रहरणमेतत्तुल्यमित्यपरे। युगपदनेकस्वर्णापहरणेऽप्येकमेव प्रायश्चित्तं हरण-क्रियाया एकत्वादिति दिक् ॥ २५८॥

इति सुवर्णस्तेयप्रायश्चित्तप्रकरणम्।

---

## याज्ञवल्कीये २५९ श्लोकः।

**उद्देशेति**। नाम्ना वस्तुसंकीर्तनमुद्देशः। कर्त्राकांक्षायामाह। **समा वेति**। विशेषमाह। **कार्ष्णेति** योषितेत्यस्यार्थः। स्त्रीप्रतीति प्रत्यासत्तेः स्मृत्यंतराच्चाह। **तदात्मयेति**। नैतावदेव किं तु वक्ष्यमाणास्यात्रापि संबंध इत्याह**ैवमिति**। अथ विशेषानाह। **शयनं चेत्यादिना**। **मानवे** गुरुतल्पेऽर्श आद्यच्। गुरुतल्पीति पाठांतरं "तप्ते स्वप्यादयोमये" इति तच्छेषः। **तथेति**। न तु कंठे स्वापमात्रमिति भावः। अनेन मृन्मय्यपि पाक्षिकी तत्प्रतिकृति-रुक्ता। **ताम्रीमिति** ताम्रवर्णामित्यर्थः। अग्निवर्णामिति यावत्। **सूर्मिं** सूर्मामिति पाठांतरं। सूर्मी "स्थूणाऽयः प्रतिमा" **इत्यमरः** ( २।२१।७८१ )। एवमग्रे **मानवेऽपि**।

मि. पृ. २६७.

**मानवे**ऽविकल्पस्य स्पष्टत्वादाह। **न चेति**। **द्वयमिति**। **प्रकृते योगीश्वरीये** इति भावः। अत एवाह**ायस्येति**। यत इत्यादिः। **मानव**विकल्पविषयस्तु अनुपदमेव स्फुटीभविष्यति।

अथोत्तरार्द्धं व्याचष्टेऽथ **वेति**। **मन्वाद्यनुरोधेन** व्याचष्टे। **सलिंगावित्यादि**। **शिश्नेति**। शिश्नसहितवृषणावित्यर्थः। **आतिष्ठेत्** गच्छेत्। **आनिपातात्** आदेहपातात्। विशेषानाह। **गमनं** चेत्यादिना। **दक्षिणेति** तत्संबद्धनैर्ऋतीत्यर्थः। अत्र द्वितीये **अयमेव** तदुत्कर्तनादिरूपप्रायश्चित्तरूपप्रायश्चित्तरूप एव। **आसां** पूर्वोक्तानां तदुक्तं **तेनैव** (१२।७३-७४)

"माता मातृष्वसा श्वश्रूर्मातुलानी पितृष्वसा। पितृव्यसखिशिष्यस्त्री भगिनी तत्सखी स्नुषा ॥
"दुहिताऽचार्यभार्या च सगोत्रा शरणागता। राज्ञी प्रव्राजिता धात्री साध्वी वर्णोत्तमा तु या॥"
इति शिश्नस्य सवृषणस्य। उक्तवैपरीत्येन।

विनिगमकत्वादाह**ैवमिति**। उक्तवदित्यर्थः। राजकृतमिति भावः। तत्र मानमाह-**इमेवेति**। **धृतेति** धारितेत्यर्थः। अंतर्भावितणयर्थत्वात्। कृतेति पाठेऽप्येवं। **निर्मलाः** संत इत्यन्वयः। तत्रान्यतरार्थं कृतेनान्यस्यापि सिद्धिसत्वेऽप्यन्यत्र वैलक्षण्यमाह। **धनेति**। तस्मिन्नुक्त्वृते

सतीत्यर्थः। **तेनैव नारदेनैव**। उपसंहरति। **अनयोरिति**। मूलोक्तयोरित्यर्थः। **अत्र न सर्वत्र**। **मुख्यया** शक्त्या **संभावयति**। पालयति। **विप्रो** विप्रादिः। णचणापिक्रियाशब्द-स्तत्पर उपस्थितत्वादित्याह। **निषेकादीति**।

**अन्यत्रापि** पितृभिन्नेऽपि। तदेव शिष्यसमूलमाहोपेति। **स्वल्पमित्यादि** क्रियाविशेषणं।
५ यस्य श्रुतस्य गृहीतवेदस्य यस्य यत्संबंधि वेदस्य वा। इह शास्त्रे। **अपिनाऽन्यसमुच्चयः**। **इति अनेन**। एवमग्रेऽपि। **अन्यत्र** अन्यत्रापि प्रयोगो दर्शित इति पाठः। अत्र विशेषो दर्शित इति पाठेऽत्र गुरुविषये प्रवृत्तिनिमित्तभेदादाह। **न चानेकेति**। **भूतायाः** तत्वं प्राप्तायाः। तत्र मानमप्याह। **दर्शितं चेति**। तथोपक्रमोपसंहाराभ्यां तथा लाभ इति भावः। नेदं प्रवृत्ति-निमित्तं किंतु वाचनिकं प्रबलमितोऽन्यदेवेत्याह। **न चोपेति**। **वचनात्** प्रतिपादनात्स एव
१० मि. पृ. २६८ पितैव। अस्यातिप्रसक्तं तुल्यमाहा**चार्येऽपीति**। तदेवाहो**त्पेति**। एवं विशेषे उक्ते सामान्योक्तिमप्याह। **गौतेति**। नन्वेवं वचनद्वयप्रामाण्यादुभयत्रैव मुख्यत्वमस्तु। अत आह। **किंचेति**। मात्रपदेन पूजार्हत्वव्यवच्छेदः। **वचनात्**। 'उपाध्यायदशे'त्यग्रिमात्। तथा च तल्पशब्दानर्थक्य स्पष्टमेव। कर्मधारयसंभवेऽप्यातिप्रसंगानिवारकत्वात्**संवर्तादि**वचन-विरोधाच्च तदभिप्रेत्योपसंहरति पूर्वपक्षी। **तस्मादिति**। उक्तरीत्येति भावः। सावकाशानिरव-
१५ काशयोर्निरवकाशं प्रबलमिति **न्यायेनाह**। **निषेकादीति**। **विधीति**। एते मान्या इति **मौलेत्यर्थः**। उक्तं पोषयति। **अत एवेत्यादिना**। **तथा** तद्वदातिदेशिकं। **भार्यासु** गमने इति शेषः। उभयमुपपादयति। **आचार्यादेरिति**। सर्वसाधारणं परिष्कृतं दोषमाह। **किंचेति**। **वर्जमिति** णमुलंतं। "भगिनीं मातुराप्तां वा तप्तकृच्छ्रं समाचरेत्" इति तच्छेषः। उपसंहरति। **अत इति**। अपिरुक्तदोषसमुच्चये। **एवेनान्य**प्रागुक्तव्यवच्छेदः। गौणं तत्वं तु तत्रापीष्टमेवेत्याह।
२० **मुख्य इति**। अत एवाह। **तच्चेति**। **इति** इत्यन्न। तदादेरिति भावः। उपसंहरति। **अत इति**। तस्याविशेषादित्यर्थः। पितृपत्नीतत्वावच्छिन्नानमति**वसंवर्ता**दितस्तथैव लाभात्। **एवेना**चार्यादि-पत्नीगमनव्यवच्छेदः।

तत्र विशेषमाह। **गमनं चेति**। संपूर्णगमनत्वस्य तत्रैव सत्वादिति भावः। **तत्र च** चरम-धातुविसर्गपर्यंतगमने च। **तच्च उभयं च**। **वासिष्ठमिति**। अधिकदुःखोत्पादकत्वादिति भावः।
२५ एतदेव विशेषस्यानुक्तेः **संवर्ता**द्युक्तविषये शंकते। **ननु चेति**। न्यूनत्वादाह। **हीनेति**। अत एव तत्र सवर्णामित्युत्तमवर्णाया अप्युपलक्षणमित्युत्तमवर्णायां चेति प्रागुक्तं। **इदं च** मरणांतिका-दिकं च। **मुख्यस्यैव** औरसस्यैव। यत इति शेषः। एवं च सापत्नमातृगमने च यत्प्रायश्चित्तं तत्क्षेत्रजादीनां नेति भावः। अथ **व्यवस्थामाह**। **तत्रेति**। मौल्योर्मध्ये इत्यर्थः। **अनुबंधेति** साधनेत्यर्थः। अधिकदुःखोत्पादकत्वादिति भावः।
३० विरोधं परिहरति। **यत्त्वित्यादि**। **गते** समाप्ते। शुध्यतीति शेषः। इदं साधारणमित्याह। **रुक्मेति**। अत्रैव विषये ततोऽर्वाग्निवृत्तावबाहकमिति ॥ २५९ ॥

## याज्ञवल्कीये २६० श्लोकः

**प्रायश्चित्तांतरमिति**। हीनवर्णविषये एवेति भावः। अत **एवाहैतच्चेति**। **वेदेति** पदक्रम-
मि. पृ. २६९ रहितसांहितामात्रेत्यर्थः। **तत्रैव उक्ता व्यवहितविषयद्वये एव यथाक्रममिति**

भावः । **क्षत्रियेति** । ब्राह्मणीपुत्रस्येत्यस्यानुषंगः । उक्तं दृढयति । **इदं चेति** । **तत्रैव** व्यवहित-विषये एव । **पुनः** वारंवारं । **कश्यपेति** । **कण्वेति** पाठांतरं । **अत्रैव विषये** शंखायुक्त-द्वादशवार्षिकादिसर्वविषये । तस्यैवाह । **वैश्यायां त्विति** । प्रकरणाद्ब्रह्मशब्दो ब्राह्मणीपर इत्याह । **ब्राह्मणीति** । एवमन्येत्यस्यार्थमाह । **तस्यैवेति** । ब्राह्मणीपुत्रस्यैवेत्यर्थः । **तथाभूतायां** मातुः सपत्न्यां । **पादशब्दो** द्वादशाब्दपादपर एवेति भावः । प्रागुक्तक्षत्रियादीत्यादिसंग्राह्यमाहैव- ५
मिति । **एवमेव** नववार्षिकमेव । **ततः** मरणात् । ब्राह्मणीपुत्रस्येदं । तस्यैवाह । **शूद्रायां त्विति** । **पुनः** वारंवारं । तस्यैवाह । **क्षत्रियायां त्विति** । अत्रैव तस्य क्षत्रियायां । तथैव तस्यैवाह । **वैश्यायां त्विति** । हीनत्वादकामाच्चाहैतदेवेति । **तत्रैव** तस्य तथा वैश्यायामेव । **मरेति** आयुःसमाप्तिपर्यंतमित्यर्थः । **गुरोरिति** । गुरोर्भार्यायां वैश्यायां गमनमभ्यस्येर्थः । **षडंगवाक्-**पाण्युपस्थचक्षुःश्रोत्रमनोरूपषडंगं विशिष्टं तस्यैवाह । **गुर्विति** । **हार इति** स्वकर्माचक्षाण १०

मि. पृ. २७०. इत्यपि बोध्यं । अश्वमेधावभृथस्नाने वेति तच्छेषः । **अत्रैव** तस्यैव । तथा शूद्रायांतेंद्रिय इति "हविष्येण यवागवा वा गुरुतल्पापनुत्तये" इति तच्छेषः । तस्यैवाह । **क्षत्रि-यायामिति** । **गुरोरिति** दांपत्यरूपसंबंधः षष्ट्यर्थः । एवमग्रेऽपि । पुनस्त्वर्थे । तत्रैव तस्यैव । तस्यैव क्षत्रियायां पूर्वनिवृत्ताविति शेषः । तस्यां प्रवृत्तस्य । एवमग्रेऽपि । सर्वत्र अत्रैव तस्य तथा निवृत्तौ वैश्यायामेव । **सप्ताष्टाविति** दिनानीति शेषः । तस्यैवाह । **शूद्रायां त्विति** । **तत्रैव** शूद्राया- १५
मेव । तस्य तथा निवृत्तौ । **वासकमित्यत्र** चार्थे कः । नीपेति । ब्राह्मणीपुत्रस्य क्षत्रियागमने वैश्यागमने च यत्प्रायश्चित्तं तदेव क्षत्रियापुत्रस्य वैश्यागमने शूद्रागमने च । **अनंतरितत्वादेकां-**तरितत्वाच्च । ब्राह्मणीपुत्रस्य क्षत्रियागमने यत्प्रायश्चित्तं तदेव वैश्यापुत्रस्य शूद्रागमने इति द्रष्टव्यं । यत्र शृंगग्राहिकया विशेषोऽभिहितस्तत्र स एव ग्राह्यः । **अत** एवंविधपापेषु प्रवृत्तानां । **अत एव** अविशिष्टत्वादेव । **कार्यं** कारयितव्यं । कर्तुस्तत्वेन विवक्षया सप्तमी वा । एतदेवे- २०
त्यस्यार्थमाह । **द्वादशेति** । स्त्रीणामर्धस्य विहितत्वादाहार्द्धेति । अयं तु विशेषः । अरण्यादि-स्थितिर्नास्ति । किं तु गृहे एव वास इति । तथा **च योगियाज्ञवल्क्यः** (प्रां. २९७)

"पतितानामेष एव विधिः स्त्रीणां प्रकीर्तितः । वासो गृहांतिके देय अन्नं वासः सरक्षणम्" इति । रक्षणार्थमनुवाससः समीपे एव वासः कर्तव्यमित्यर्थः । एवमनुलोमगमने निष्कृतिरुक्ता स्त्रीणां प्रतिलोमगमने तु विशेषो व्यक्तीभाविष्यति पारदार्यप्रकरणे । **इति** इत्यादिना । एवमग्रेऽपि । एक- २५
रात्राभ्यासे विशेषस्य वक्ष्यमाणत्वादाहैकेति । **अभ्यस्तेषु** अत्यंताभ्यस्तेषु । अत्र न तु सर्वत्र । तथा

मि. पृ. २७१ **बृहद्यमवत्** अस्पष्टत्वादाह **तथा हीति** । एकरात्राभ्यासे विशेषं वक्तुमुक्त-मुपसंहरति । **एतच्चेति** । मरणांतिकं चेत्यर्थः । सेवनादिति पाठः । **सेवनं** संभोगस्ततः । **यत्करोति** यत्पापं जनयति तत्पापं **च जपन्** गायत्रींऋक्संहितां वा **व्यपोहति** विनाशयति । **अत्र मानवे** । यत इति महत्वादस्येति भावः । अत्र मानवे । दर्शनमत्यंतसंयोगे हेतुः । **च** सहार्थे । प्रसंगाच्चंडाल्यादि- ३०
गमने विशेषं भगिन्यादौ तथा वक्तुमाह । यदा पुनरिति ।

स्वयोनिशब्देन भगिनीत्याह । **स्वयोनिष्विति** । एकवाक्ये सहपाठादित्यर्थः । भृगुपतनादि-निरासायाह **मरणांतिकमिति** । अत्र गुरुभार्यागमनविषये । **कात्येति** । **हारीतोऽपि** । मातृदुहितृ-स्नुषागमनमित्यतिपातकान ।

"अतिपातकिनस्त्वेते प्रविशेयुर्हुताशनं। नह्यन्या निष्कृतिस्तेषां विद्यते हि कथंचन॥" इति। विरोधं परिहरति। **जनन्यामिति**। तत्रातिपातकशब्दस्तु **साधारणेति**। वेश्यास्वित्यर्थः। **जात्युक्तं** तत्तज्जातिप्रयुक्तं उपसंहरति। **एवमिति**। **प्रतिपत्तिः** प्रतिपादनं॥ २६०॥

**इति गुरुतल्पप्रकरणं।**

---

५

## याज्ञवल्कीये २६१ श्लोकः।

**तद्वदस्योद्देशा**भावात्तत्संगत्यभावादा**हैवमिति**। बंधकशिष्यजिज्ञासानिवृत्तौ सत्या-मि. पृ. २७२. मवश्यवक्तव्यत्वमवसरः। एकत्वविवक्षया आहै**कमिति**। वै इत्यस्यार्थो-**ऽत्यंतमिति**। तिङर्थाविवक्षयाह **संवेति**। उभयतात्पर्यार्थमाह। **सहाचेति**। एषां प्रत्येकं सहाचरणं विवक्षितं। तत्सम इत्युक्तेरित्याह **योनेति**। **तस्य** पातकित्वस्य।

१० नन्वेवं न्यूनप्रायश्चित्तापत्तिरत आहा**त्र चेति**। संसर्गविषये इत्यर्थः। **साक्षादिति**। उपदेशत इति भावः। **अपीति** हेतौ पंचमी। दर्शयतीत्यत्रान्वयः। **पातकी** अनुपातकी। **आदिना** जातिभ्रंशकरादिसंग्रहः। एकत्रैव वैकल्पिकानेकसंग्रहायाह **जातमिति**। अनेन पौनरुक्त्यं परिहृतं। **एषां** पूर्वोक्तानां चतुर्णां मध्ये **मनुनापि** सर्वोति इदमुक्तं तथाऽपि

"एवं पापकृतामुक्ता चतुर्णामपि निष्कृतिः। पतितैः संप्रयुक्तानामिमाः शृणुत निष्कृतीः॥

१५ "संवत्सरेण पतति पतितेन सहाचरन्। याजनाध्यापनाद्यौनान्न तु यानासनाशनादिति॥" अव्यवहितप्रागुक्ते पातकिसंसर्गविषयमेवेदमत एव पतितेनेत्यत्राप्युक्तमत आह **विष्णुनाऽपीति**। सामान्येनेत्यस्य दर्शितमित्यत्रान्वयः। **मात्रं** कार्त्स्न्ये। एवं वा पौनरुक्त्यं। एवमग्रेऽपि। मन्वंतरमाह। **तथेति**। तद्वदित्यर्थः। अकृते इति छेदः। **पाप्यत्र** कर्त्री। अविरोधाय व्यवस्थामाह। तच्चेति। उक्तवचनांति **दिष्टं** चेत्यर्थः। उषितेनेत्यस्य मिश्रित इत्यत्रान्वयः। य इति शेषः। संवत्सरं अभिव्याप्य। **चाप्यर्थे**।

२० अत एवाविरोधमाहा**ज्ञानत इति**। संवत्सरामित्यर्थः। पुनस्त्वर्थे। तृतीयांतयोः पूर्वान्वयः। ब्राह्मण-याजनाध्यापनरूपेण यौनेन विवाहरूपेण मात्रा उपलब्धाः संसर्गजफलधनं प्राप्तं अनशनं याव-त्संहितापरायणं। विशेषमाह। **तथोति**। मूलमेवाह। **ब्रह्महेति**। इति इत्यनेन वचनात्प्रतिपादनात्।

एवं सिद्धांते शंकते। **नन्विति**। **तस्योति**। विशेषसंसर्गस्य प्रत्येकं हेतुत्वे व्यभिचारा-दित्यर्थः। तैरित्यंतेन महापातकिपरामर्श एव न विशेषपरामर्श इत्याहात **इति**। युक्त्यंतर-

२५ माह। **न चेति**। नापीत्यर्थः। उक्तमूलेन तेषां चतुर्णां तत्साक्षात्संसर्गेण च वाक्यभेदेन महा-पातकित्वमुच्यते। न तु तत्संसर्गिणोऽपि बोधकाभावात्। नापि स्मृत्यंतरेण तदभावान्नापि प्रत्यक्षादिना असंभवादेवं च तैरित्यनेन महापातकिसंज्ञकचतुष्टयपूर्ववाक्योक्तपरामर्शः। समुदित-संसर्गस्तु न हेतुस्तत्संज्ञायाः प्रत्येकमेव करणात् यो येनेत्यनेन प्रायश्चित्तस्य प्रत्येकसंसर्गे एवं विधानाच्च व्यभिचारोऽपि न द्वितीयवाक्यत्वात्प्राक् तत्वस्यान्यत्राभावाच्चतुष्टयमात्रवृत्तित्वस्य तस्य

३० पूर्ववाक्यतो लाभात्तद्रूपकधर्मावच्छिन्नचतुष्टयसंसर्गस्य प्रत्येके हेतुत्वात् इत्याशयेन समाधत्ते। **स्यादेवमित्यादि**शब्दैकेति प्रकृतेत्यादि**नैवमिति**। एवं नेत्यर्थः। युक्त्यंतरं खंडयति। **एवं च सतीति**। शब्दतस्तदलाभे सतीत्यर्थः। नन्वेवं तस्याद्दुष्टत्वापत्तिरत **आहात इति**। ततो

हानिः पातित्यं तथोक्तत्वात् । अत एवाह । **पातित्याभावे इति । मानव**माहै**नस्वभि-
रिति** । उपसंहरति । **पातित्याभावेऽपीति** । तस्मादित्यादिः । मूलाद्यनुक्तत्वात्सप्रमाणं तत्स्वरूप-
माह । न **तच्चेत्यादि** । तत्समतां न तु तत्वं अतो न पूर्वविरोधः । अत एवाह । **पादहीनमिति** ।
मि. पृ. २७३ तत्र तु देवव्रतमित्यग्रेऽनुपदमेव स्फुटं । अनेनैव न्यायेनाग्रेऽप्याह । **एवमिति** ।
तत्संसर्गिसंसर्गिवदुक्तरीत्या प्रकारकल्पनेनेत्यर्थः । चतुर्थत्वादिब्रह्महाद्यपेक्षं षष्ठादौ तु नैवेति ५
तात्पर्यं । प्रकृतमुपसंहरति । **अत इति** । **प्रायश्चित्तेति** प्रकृतेत्यादिः । अत्रापि स्पष्टार्थं प्रागुक्त-
मेव । विशेषांतरमाह । **अत्र चेति** । मूलस्मृतौ चेत्यर्थः । **मानवा**द्याह । **स तस्यैवेति** ।
**मरणस्येति** लौकिकतांत्रिकप्रसिध्यभावात् । अत्र तत्संसर्गिणि प्रागुक्तरीत्यां आह । **अकामत
इति** । तत्र संवासः सहाचरणं । तच्च आचरणभेदभिन्नसंसर्गमात्रोपलक्षणमिति ध्वनयन् विशेषमाह ।
**संसर्गश्चेति** । निबन्धनकारणं न वधेत्यप्युपलक्षणमिति सूचयन्नाह । **अनेकधेति** । अत १०
एवाह । **देवलोऽपीति** । लघुगुरुक्रमेण संलापादिक्रमः **सहयानासनाशना**दित्यादिसमाहार-
द्वंद्वात् पंचमीक्रमेण वाक्यद्वयार्थमाह । **समुदिते** तदन्वय इत्याहै**कासनापेति** । अन्यत्राप्येकत्वं
बोध्यमित्याहै**कपंक्तीत्यादिः** । एकभांडेत्यस्यार्थोऽधमेति । यथाश्रुतासंगतेरिदमग्रिमं च व्याख्यानं
बोध्यं । निगमनाविरहादाह । **स्वस्य वेति** । **तस्मा इति** । एतेन "योनिः प्रजननंत युक्तेन
पतितेन पतितेन पत्नितया वा मैथुनयोग" इति **मदनशूलपाण्या**द्युक्तमपास्तं । एकपंक्तिभोजन- १५
स्योक्तत्वादाहै**कत्रामत्रे इति** । **देवलार्थमाह** । **संलाप इति** । **सह** स्व(य)मग्रेऽप्युभयत्र
बोध्यं । तैश्चोक्तमिति पुनर्नोक्तं ।

अविरोधायाहा**त्रेति** । **बृहद्विष्णुवाक्ये** इत्यर्थः । अविरोधाय तदर्थमेवाह । **स्रौवेत्यादि**
स्रुवसाधनककर्मकृतत्वादिति भावः । अविरोधाय मूलतात्पर्यं वक्तुं स्मृत्यंतरोक्तानां संसर्गभेदकानां
व्यवस्थामाह । स्रौवेत्यादिना । यद्यपि **उक्तदेवलादेव** तथा लभ्यते तथापि गामश्वमिति २०
तं विनापि समुच्चयस्य तत्र प्रतीतिसंभवात्तत्र साधकमित्याशयेनाह । **यः पतितैरिति** । **एतदेव**
द्वादशवार्षिकमेव । द्वंद्वनिर्देशतौल्येऽपि तद्वदत्र वचनाभावादाहै**केति** । अल्पत्वादाह । **प्रत्येकेति** ।
**देवलोक**संलापादौ विशेषमाह । **संलापेति** । येनेत्यस्य समुच्चितानामेवेत्यत्रान्वयः । तेषां
पार्थक्येनासंभवात्र तत्समकक्षत्वमित्याहा**नुषंगिकतयेति** । गौणतवत्यर्थः । सर्वतात्पर्यमा**हात
इति** । तेषां पार्थक्येनातत्वादित्यर्थः । स्वल्पत्वादेवाह । **पंचमेति** । प्राधान्यादाह । **सहपाना- २५
दीति** । एवेन पार्थक्येन संलापादित्रयव्यावृत्तिः । एवमग्रेऽपि । इदं दृढयति । **यत इति** ।
ननु **मानवे** त्रयाणामुक्तेः कथं चतुष्टयस्येत्यत आहा**त्रेति** । तस्यापीत्यर्थः । वचनांतरात् अवि-
रोधायाहात्र **चेति** । **तथा** तद्वत् । असमानविभक्तित्वाद्भेदेन तृतीयाया अभावात् । भेदेन च
तदसंभव इत्याह । **न चेति** । तदभावेऽपि हेतुपंचम्या समाधत्ते । **यानेति** । **इति** एवं । व्यव-
मि. पृ. २७४. हितान्वये दृष्टांतमाह । **यथेति** । मत्यंतरसंभवं क्लिष्टं हेतुपंचमी युक्ताऽत ३०
आह । **यद्वेति** । लक्षणहेत्वोरित्यनेन तृतीयपादार्थमाह । **याजनेति** । त्वर्थमाह । **किंत्विति** ।
उपसंहरति । **अत इति** । येन प्रत्येकं येन तु समुच्चितेन कार्येति तेन नैरंतर्यं सत्येवेदमिति **प्राच्यो-
क्तमपास्तं** । वत्सरोन्नसाव इत्याह । **यथेति** । षष्ट्यधिकं दिवसायां यत् इति त्रयतद्व्यापित्व-
**मित्यर्थः** । द्विषु विषये उक्तक्रमेण प्रायश्चित्तान्याह । **त्रिरात्रमित्यादि** । **चांद्रेति** । कृच्छ्रपूर्वक-

चांद्रायणमित्यर्थः । अधिसंज्ञायाहात्र **चेति** । विशेषं परिहरति । **यत्त्विति** । पातित्यवचनं तत्प्रतिपादकं क्रमेणाह । **पंचेत्यादि**प्रीयेतत्सदृशे । न्यूनतां परिहरति । **एतदिति** । **दिक्** रीतिः । अत्रोभयत्रान्वयः । प्राग्वदाह । **पुरुषवदिति** । तात्पर्यमाहात **इति** । तथैवाहै**वमिति** । उक्तरीत्येत्यर्थः । **माधवस्तु** संसर्गदोषः कलौ पातित्यापादको न तत्त्यागस्य **कलिवर्ज्येषु** गणनात् ।
५ तथा हि स्तेयान्याधिकपापशुद्धिरघसंकोचो गुणापेक्षयेति **दीपिका** । तथा चोक्तम्

"व्रतस्वाध्यायसापेक्षमघसंकोचनं तथा । प्रायश्चित्तविधानं च विप्राणां मरणांतिकं ॥
"संसर्गदोषस्तेयान्यमहापातकनिष्कृतिरिति" । किंतु पापमात्रापादकः । तथा च **पाराशरः**
आसनाच्छदनाद्यानात्संभाषात्सहभोजनात् । संक्रामंतीह पापानि तैलबिंदुरिवांभसीति ॥"

तस्मात् कलौ चत्वारि महापापानि । तत्संसर्गस्तु युगांतरे महापातकम् । कलौ तु प्रकीर्णकेषु
१० द्रष्टव्यमित्याह । वस्तुतो

"न्यसेद्देशं कृतयुगे त्रेतायां ग्राममुत्सृजेत् । द्वापरे कुलमेकं तु कर्तारं तु कलौ युगे ॥"

इति **पराशरस्मरणात्** । कृतयुगादौ दोषजनकत्वेनोक्तस्य देशादिसंसर्गस्यैव कलिवर्ज्येषु गणनम् । अयं चापरो विशेषः । यत्कृते संभाषमाभात्रादेव पातित्यं त्रेतायां स्पर्शमात्रात् द्वापरे तस्त्वामिकान्नप्रतिग्रहात्कलौ कृत्स्नेन समुदितेनैव कर्मणेति दिक् । तदाह **दिगिति** ।
१५

**( उत्तरार्धः । )**

कश्चित्कन्याग्रहणांशे अन्यत्रस्यैवाभावादाह । **पतितेति** । "अशुचिशुक्रोत्पन्नानां तेषां श्राद्धमिच्छतां प्रायश्चित्तं पतनीयानां तृतीयोंशः स्त्रीणामंशातृतीये" इति **बोधायनस्य** पतनीयानां पतितानां बाहुलकात्कर्तर्यनीयरूपत्तितोत्पन्नानां शुद्धिमिच्छतां पतितप्रायश्चित्तस्य तृतीयोंऽशः पुमपत्यस्य स्त्र्यपत्यस्य तु तृतीयस्यापि तृतीयोंऽश इत्यर्थकस्य पतितेन प्रायश्चित्ते कृते
२० तेषां तद्विषयता न तु प्रकृतविषयतेत्यभिप्रेत्याह । **कृतेति** । कृतस्तत्संसर्गो यत्र काले तद्योग्ये इत्यर्थः । अन्यदप्याह । **तथेति** । पतितोत्पेति पतिताश्च महापातकिनोनुपातकिनोनुपातकिनस्तत्संसर्गिणो नास्तिकः प्रमादादपि चिरं श्रौतसांतिकर्मत्यागी अतमुपपातकाभ्यासो समुद्रपानप्राप्ती कन्याभिन्नः पतितोत्पन्नः । अपितृपित्रादित्यागी पीते तु पुत्राद्यत्यागी पातकेषु च कर्तृणां प्रयोजका इत्येवमादयः । एते चाकृतप्रायश्चित्ता अव्यवहार्याः । मातुस्तु तादृश्या अपि न त्यागः । किंतु स्येवापोषणं च
२५ पृथक् कार्यं । पितुरांतमापि महापातकिन एव त्यागो नान्यथा । पतितस्य तुल्ययुक्त्या प्राप्तशंकां

मि. पृ. २७५ निराचष्टेऽन्य**त्रेति** । अत्र बीजमाह । **सेति** । **हि** यतः । ननु दातुरयोग्यत्वात्कथं तत्वमत आह । **तामिति** । तथा च पतितोत्पन्नत्वे सति तन्मात्रगोत्रत्वं पातित्यातिदेशनिमित्तं न तु केवलं तादिति तादृशसंसर्गविशेषे पुंस एव पातित्यं च कन्याया इति भावः । एतेन पुत्रस्येव कन्याया अपि पातित्यं प्रायश्चित्ते तु विशेषः । उक्त**बौधायनात्** । **वासिष्ठं** तु
३० यादृशं पातित्यं पुंसस्तादृशं न स्त्रिया इत्येवंपरमिति **मूलोक्त**मपास्तं । मिथो विरोधात् ॥ २६१ ॥

इति **संसर्गिप्रायश्चित्तप्रकरणम्** ।

## याज्ञवल्कीये २६२ श्लोकः ।

**निषिद्धे**त्यत्राऽद्ये कर्मधारयः । द्वितीये बहुव्रीहिः । प्रत्येकमित्यत्र संमतिमाह । **तथोक्तेति** । विनिगमनाविरहादाह । **यद्वेति** । **संप्रमापणे** वधे । व्यवस्थामाह । **तत्रेति** । एवं **मिश्रोऽपि** । विरोधं परिहरति । **यत्त्विति** । **अंतरप्रभवाः** प्रतिलोमोत्पन्नाः । कालपदलक्ष्यार्थमाह । **द्वादशेति** । **अनेने**त्यस्यार्थो **व्रतेनेति** । साधर्म्यान्न्यूनतां निराचष्टे । **शूद्रेति** । अन्नवैकल्पायाह । **यद्यपीति** । नमस्कारमंत्रस्वरूपमादावुक्तम् । अंगवैकल्पेऽपिवचनं तस्मात्परमापूर्वं तिष्यति इत्याह । **यद्वेति** ॥ तदेवाह । **तस्मादिति** । समासादः । पर्षदुपस्थानम् । **तथा** तद्वत्ते**नैव अंगिरसैव** । विरोधं परिहरति । **यत्त्विति** । अस्येत्यस्यार्थः **शूद्रस्येति** । प्रकृतत्वादाह । **व्रतो वेति** । अनुपसत्तिः

मि. पृ. २७६ पर्षदनुपस्थानं । **एतानि** प्रागुक्तानि । उपसंहरति । **अत इति** । प्रतिलोमांशे आह । **यत्त्विति** । ॥ २६२ ॥

### इति पंचमहापातकप्रायश्चित्तप्रकरणम्

## याज्ञवल्कीये २६३।२६४ श्लोकौ ।

संगतिमाह । **महेति** । **मासमिति** कालाध्वनोरिति द्वितीया । **गोष्ठ** इत्यत्र शयवासेति सप्तम्या अलुक् । अथ भावायाह । **मूलेति** । अत्र व्रतचतुष्टयमित्याहा**सावित्यादिना** । **संयम** इत्यस्यार्थः **समेति** । पंचगव्यानि यस्मिन्समूहः । सकुशोदकसहितस्तत्घटकानां तेषां स्वरूपाणि स्मृत्युक्तक्रमेण गृहपंचेति तानि तद्घटकानि च पंचगव्यानीत्यर्थः । तथा च नेदं व्युत्पत्तिप्रदर्शनामिति न स्मृत्यंतरविरोधः । अत एव न समाहारद्विगुरपि । अस्य फलं सूचयन्नाहाहोरात्रेति । प्रत्यासत्या आहाऽ**तश्चेति** । न्यूनतां परिहरति । **अन्विति** ते । एवमग्रेऽपि । **वचनादि**त्यस्य गम्यत इत्यत्रान्वयः।

पदार्थानुक्त्वा वाक्यार्थमाह । **एवमिति** । चेन संयत इत्यपि । तद्वक्ष्यति । **समेति** । द्वितीयार्थो **निरमिति** । ननु च द्वयास्तयोः समुच्चय एव कुतो नात आहाऽत **एवेति** । अस्य व्रतस्यापरत्वादेवेत्यर्थः । एतदामिवैवकार इति भावः । कार्योऽथ वेति । उपसंहरति **इतीति** । अथ व्यवस्थामाह । **तत्रेत्यादिना** । तत्र चतुर्णां मध्ये । मात्रपदेन तपःश्रुत्यादिनिरासः । अग्रे तेन गुणादिनिरासः । अत एवाह । **विशिष्टेति** । **तादृग्विधे** अकामकृते । एवमग्रेऽपि । इदमुपपादयति । **अत्रेति** । उक्तविषये इत्यर्थः । **ततश्चे**त्यस्य लघी**यस्त्व**मित्यत्रान्वयः । एवमग्रेऽपि कल्प तत्तुल्यत्वाच्चेत्यर्थः । **षड्भिरिति** । अत एव षड्एकासाः प्राचापत्यप्रत्याश्रीय इति **स्मृत्यर्थसारः** ।

अतिकृच्छ्रस्वरूपमाहाऽ**तीति** । तत्र च तदात्मकेण संप्राजापत्यव्रते च विनिगमनाविरहा-

मि. पृ. २७७. **दाहाऽथवेति** । विरोधं परिहरति । **यत्त्विति** । एवमग्रे सर्वत्र बोध्यम् । **यत्रेति** । तस्यैकं मासं पंचगव्येन वर्तनं स्यात् । तच्च प्रत्यहं पलत्रयपरिमितमित्यर्थः । मासस्य परान्हेऽपि संबंधः । विनिगमनाविरहादाह । **द्व्यादिति** । उभयत्राऽऽहाऽ**त्यंतेति** । उक्तनिरासायाह । **द्वितीयमिति** । द्रष्टव्यमित्यत्रान्वयः । मासमित्यस्यानुवृत्यर्थमाह । **मासमिति** । **षष्ठे काले** । तृतीयदिने रात्रौ **अतिप्लवं** । अतित्वरितेन मार्गेण । **यवागूमिति** । यवागूरुष्णिकाश्राणे-**त्यमरः** (२।९।६३६) । तंडुलैः शिथिलपक्का यवागूरिति **कर्कादयः** । मिश्रव्रतरूपा यवागूरित्यन्ये । यवागूपल्यतंडुलचूर्णद्रवरूपमन्नमिति**चंद्रिकाकारः** । छेयी यवागूरिति **धूर्तः** । **यावक** उक्तः । **शकृत्** गोमयम् । सप्तार्ता प्रावृत्तिः सक्तोः पुनरपि मासप्रेत तथा च **शूद्रस्वामिकगुरुहत्या-**

**विषयमिति** भावः। विनिगमनाविरहादाह। **मृतेति**। वर्णत्रयद्विजसेवं धान्यादिः। एवमग्रेऽपि विशेषं वक्तुमुक्तं व्यवस्थापयति। **तदिदमिति**। अत एव **जाबाल** अकामत इत्युक्तम्। तमेवाह। **परेत्यादि**। ईदृक्विधावित्यस्येष्टव्याख्या। **अवीति**। **हविष्यमन्यत्र** प्रतिपादितं। **चतुर्थकाले** द्वितीयादिने रात्रौ उत्पत्त्यनिवृत्तये यवागूः कालमिति क्रियाविशेषणम्।

५ "तिलमुद्गावृते शैब्यं सस्ये गोधूमकोद्रवौ। धान्यार्कं देवधान्यं च शमीधान्यं तथैक्षवम्॥

"स्विन्नधान्यं तथा पण्यं मूलं क्षारगणः स्मृतः"– इत्युक्तानि **क्षाराणि**। **लवणानि** प्रसिद्धानि सर्वाणि। **मासाविति** कालाध्वनोरिति द्वितीया। **तिष्ठन्निति** ऊर्ध्वंतिष्ठन् खुरोत्थितं

मि. पृ. २७८ रजः पिबेदित्यर्थः। भित्त्याद्यनाश्रित्योपवेशनं **वीरासनं**।

"अस्थितस्तु दिवा तिष्ठेदुपविष्टस्तथा निशि। एतद्वीरासनं नामे"त्यन्ये। **अभिशस्तां**

१० **संबद्धां** चौरादिभिरित्यर्थः। तत्कृतभयैः पालितामित्यर्थः। 'सर्वप्राणैरिति' अपानाद्याशयेनोक्तिः। **मारुते** भृशं वाति गच्छति सति। **शक्तितः** गोस्त्राणं अकृत्वा आत्मनस्त्राणं न कुर्वीत। **अविद्यमाने**। तद्दानापर्याप्तधने ऋषभैकादशगवीदानासामर्थ्ये इति यावत्। अत्राहारांतरानभिधानात्कंदमूलादिना वर्तनमर्थासिद्धम्। 'अनेकविधिने'त्यनेन पूर्वोक्तद्वैमासिकेतिकर्तव्यतातिदेशात्। 'चतुर्थकालमश्नीयादक्षारलवणं मितामि'त्युक्तरीत्या शरीरयात्रा कर्तव्येति केचित्।

१५ **गोमतीविद्या च यमेन** दर्शिता

"गोमतीं कीर्तयिष्यामि सर्वपापप्रणाशिनीं। तां च मे गदतो विप्राः शृणुध्वं सुसमाहिताः॥

"गावः सुरभयो नित्यं गावो गुग्गुलगंधिकाः। गावः प्रतिष्ठा भूतानां गावः स्वस्त्ययनं महत्॥

"अन्नमेव परं गावो देवानां हविरुत्तमम्। पावनं सर्वभूतानां रक्षंति च न हंति च॥

"हविषा मंत्रपूतेन तर्पयंत्यमरान् दिवि। ऋषीणामग्निहोत्रेषु गावो होमप्रयोजकाः॥

२० "सर्वेषामेव भूतानां गावः शरणमुत्तमम्। गावः परं पवित्रं च गावो मंगलमुत्तमम्॥

"गावः स्वर्गस्य सोपानं गावो धन्याः सनातनाः।

"नमो गोभ्यः श्रीमतीभ्यः सौरभयीभ्य एव च। नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमो नमः॥

"ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधा कृतम्। एकत्र मंत्रास्तिष्ठंति हविरेकत्र तिष्ठतीति"॥

अत्र स्नानांगभूतमंत्रपठनं संध्यावंदनं च कार्यम्।

२५ अत्र लिंगमाहाऽतीति। न्यूनतां परिहरति। **यदा त्विति**। अस्यान्यत्रोक्तत्वादाहेति **न्यायेनेति**। विरोधं परिहरति। **यत्त्विति**। एवमग्रे सर्वत्र। **वृषगत्रे हताविति**। वृषघाते वृषस्त्रीगवीघाते वेहतमिति **स्मृतिमंजर्याम्**। गर्भोपघातिन्नी गौर्वेहत्। पक्षांतरमाहाऽथवेति। अथवा प्राप्तसततं पुनः पुनरनुगच्छेदित्यर्थः। मुरितिपाठः। मौनीति पाठांतरम्। दिभिःउपलक्षितः। **उदक्या** रजस्वला।

३० **तत्र** तयोर्मध्ये। **कर्मांगेति** यत् दुग्धस्य कर्मण्येवोपयोगस्तामित्यर्थः। अत्र लिंगमाह। **गर्भिणीमिति**। कपिलालक्षण मूल्याध्यायविवृत्तौ स्पष्टम्। **सुव्रतां** पवित्राहाराम्। प्रकृतसाधकमप्याहाऽत **एवेति**। **ईदृग्विधमेव** उक्तसदृशमेव। अन्यथा प्रायश्चित्तस्य गुरुत्वात्तदंशेऽसंगतिः स्पष्टैव। अनुक्तत्वादाहाऽभीति। भ्रूणशब्देनाऽत्र ब्राह्मण इत्याऽऽह। **ब्रह्मेति**। वृषभ

मि. पृ. २७९. एको यासां तासां शतसंख्याकगवीनां दानेत्यर्थः। **प्राकृतं** प्रागुक्तं प्रागवदाहाऽभीति।

ननु तत्रापि कामस्यैव प्रक्रमान्नेदं युक्तमत आह । **यद्वेति** । एवं सति न्यूनतां परिहरति । **तादृगिति** । अशस्त्रे इति छेदः । तद्भिन्ने काष्ठादौ । **लोष्टं** मृद्गोलकम् । **ततः** सांतपनाद्यनंतरे प्रायश्चित्तं उक्तप्रायश्चित्तविशेषे कृते सति । अत एवाह । **पूर्वकल्पेति** । तत्क्षेत्रविपरीतं **मदनोक्त**मपास्तम् । **तथा** तद्व्रततदर्थमिति व्याचष्टे । **नीरोगादीति** । **द्विपादः** द्वित्वयुक्तः पादः । एवमग्रेऽपि । **पराशरमाधवे** तु ५

"गोवधस्यानुरूपेण प्राजापत्यं विनिर्दिशेत् । प्राजापत्यं ततः कृच्छ्रं विभजेत्तच्चतुर्विधमि"त्यत्र एकभक्तादिरूपं प्राजापत्यव्रतं गोवधस्य प्रायश्चित्तम् । तच्च व्रतं तत्प्रमाणप्रकारेण चतुर्विधम् । एकाहायनस्य गोवधे एकाहं एकभक्ताशीति व्यवस्था । द्व्यहायनस्य वधे दिनद्वयमिति कल्पः । त्रिहायनवधे त्रिदिनं चैकेति तृतीयः कल्पः । उपरितनवयस्कस्य वधे च चतुरहं त्वेकभक्ताशी चतुरहं नक्तभोजनः । चतुरहमयाची स्याच्चतुर्दिनमभोजनमिति चतुर्थः कल्प—इति—गोवधतारत- १० म्येन श्लोकचतुष्टयस्य व्यवस्था कृता । एवमग्रेऽपि । उत्पन्नमात्रे गर्भग्रहणमात्रे यद्व्रतमुद्दिष्टं तस्य तुर्यांशः पादः यत्र यदुपदिष्टं ततो द्विगुणं विशेषमाह । **बहुकेति** । अस्यार्थमाह । **यादृक्- विधेति** । न्यूनतां परिहरति । **एका चेदिति** । बह्वीनामितिङीप्यभावे प्रयोगः । यथासंख्यमाह । **पादद्वयमिति** । कृत्स्नव्रतेति । संपूर्णव्रते इत्यर्थः । तत्र दृष्टांतमाह । **सत्रिणामिवेति** । लिंगम् आह । **एकमिति** । विशेषांतरमाह । **यदा त्विति** । **बहव** इति प्राग्वत् । **व्यापन्नानामिति** शेषे १५ षष्ठी। **रोधने बंधनेऽपि** का । बह्वीषु मृतासु सतीत्यर्थः । रोधोऽत्र रात्रौ रक्षार्थं क्रियमाणरोधान्न्याहारप्रचारानिर्गमरोधः । बंधनं चादृढकुशकाशादिरज्जुभिन्नेनायथावंधनप्रकालबंधनम् । इदमेवोद्बंधनम् । योजनं हलशकटादावतिवाहादिना । अस्यार्थमाह । **बहुष्वपीति** । 'व्यापादितास्विति' पाठः । 'द्वितीयपादार्थमाह । **तथेति** । 'एकस्या अपीति' पाठः । अन्यथा पृथगुक्तिव्यर्थैव स्यादिति भावः अन्यदाह **भिषगिति** । **अतिरिक्तं** अधिकम् । विरोधं परिहरति । **यच्चेति** । **तेनैव आपस्तं**- २० मि. पृ. २८० **बेनैव** । इतरस्पष्टमुक्तार्थाप्रतीतेराह । **एतदिति** । एतत्सूचितमाह । **ये त्विति** । उपसंहरति । **तत्र चेति** । तयोर्भेदे च सतीत्यर्थः । अत्र समत्यंतरमाह । **योक्त्रं** नासिकाछेदः । बहुवचनात् रोधनमपि अकामकृतेति बहुव्रीहिः । **ततः** प्रायश्चित्तश्रवणानंतरं ।

अविरोधाय व्यवस्थामाह । **अयं चेति** । **योजने** रथादौ । **निपातने** नितरां पातने । मारणे इति यावत् । त्रैमासिकपादस्यैवार्थमाह । **किंचिदिति** । अन्यदप्याह । **आपस्तंबेना**- २५ प्राप्तिविशेषमाहाऽभक्षणेति । लक्ष्मी लक्षणं रोधेति.सायमित्यनेनाऽन्वयेति । अंकनलक्षणयोरन्यत्र अभेदस्य स्पष्टत्वादाह । **अंकनमिति** । सप्तेति सप्तस्यकाशकामित्यर्थः । अतिवाहने दोषादतिशास्त्रोक्तेति प्राणे संभवादिति भावः । **मौंजेन** मुंजविकारेण रज्जुना वध्रत्वधर्मरज्जुः । **विवर्जित इति** सप्तम्यंत तथा तद्वत्संघाते जनाद्याकीर्णे । **मृते** मरणे । अन्यदप्याह । **पालेति** । क्वचिदित्यस्यैवार्थोऽयम् । **तेनैव व्यासेनैव** । **जलौघेति** समाहारद्वंद्वः । **पल्वलं** अल्पसरः । ३० "जलौघयांकिले" इति पाठांतरं । **श्वभ्रं** गर्तः शुष्कः । **उद्बंधनं** दृढबंधनं । **शून्यागारे** मि. पृ. २८१ वृद्धाया इति शेषः । पूर्वोक्तमाह । **अपालेति** । **उपप्लवो** मरणम् । **तथा** तद्वत् । **विमोचने** इत्युभयान्वयी । **प्रवेशनं** गुदमध्ये । **तथा** तद्वत् । **स्नेहं** घृतादि । **ददत्** ददाति । **तथा** तद्वत् । समत्यंतरमप्याह । **अत्रेति शरौघेणेति** । पूर्वाश्वपाकपरवातकन्यागर्तः ।

व्यवस्थामाह । **इदं त्विति । इतरत्र** बद्धमरणे । विशेषांतरमाह । **तथेति** । विरोधं परिहरति । **यत्त्विति । आदिना** दधिघृते । **वर्तनं** पानं । सर्वत्र विशेषमाह । **इदं चेति** । प्रागुक्तं सर्वं चेत्यर्थः । **प्रमापणे** मारणे । राज्ञे तत्समद्रव्यदानदंडं दद्यादित्यर्थः । सर्वत्र विशेषांतरमाह । **एतच्चेति । जातं** समूहः । अत्र विरोधं परिहरति । **यत्त्विति । आदिना** महापातकमपि । ५ अत एव पूर्वविरोधो न । **तथा** तद्वत् । चेनानुग्राहकादीनां पादोनादिसमुच्चयः । **अंगुलद्वयं** अग्रे मूले वेत्यन्यत्र स्पष्टम् । तीर्थादावप्येवमित्याह । **सर्वत्रैवेति । हि** यतः । **उक्तः** वपनविषये । **पादे** इत्यादि विषयसप्तमी । तदभिप्रेतस्यार्थमाह । **पादेति । अपिना** तत्समुच्चयः । एवमग्रेऽपि । विधवायास्तु मुंडनमस्त्येव । उपसंहरति । **एवमिति** । ॥ २६३ ॥ २६४ ॥

**इति गोवधं प्रायश्चित्तप्रकरणम् ।**

---

१० 

## याज्ञवल्कीये २६५ श्लोकः ।

मि. पृ. २८२ **अधुना** तदनन्तरम् । **अन्येषाम्** । व्रात्यत्वादीनाम् । एवमग्रे ।

**उक्तेनेति आदिना** प्रागुक्तं त्रितयम् । पराकेऽपि माससविधो बोध्यः । उपदेशाकरण-फलमाह । **अत्रेति** । व्रात्यतादावित्यर्थः । तेषां व्यवस्थायाः प्रागुक्तत्वात्तदन्यतममादायैतद्व्यव-स्थामाह । **तच्च व्रतेति** । अत्रेत्यत्राक्षराधिक्यमार्षम् । एतदेवेत्तस्यार्थ**स्त्रैमासिकमिति** । १५ सामान्योक्तेराहाऽत **एवेति** । अस्मादेव **मनुवचनादि**त्यर्थः । **अवकीर्णी** स्खलितब्रह्मचर्यः । **बाधेति** । पक्षे इति भावः । **उक्तेति** बहुव्रीहिः । उपपातकविशेषाणां गणपाठः । तन्मध्यपाठः । परमतं खंडयति । **यदीति । परं** केवलम् । **अन्यत्र** स्मृत्यन्तरे । एवमग्रेऽपि । ऋचोशतम् । सिद्धांतमाहाऽत **इति** । अंतस्यान्वयः **सहेत्य**स्य । विकल्पादावन्वयः । यथासंख्येन साम्ये आह । **विकेति** । वैषम्ये आह । **विषेति** । उपनयनोचितकाले तदभाव वा चान्यः । उद्दालक-२० व्रतस्वरूपमेव दर्शयति । **द्वौ मासावित्यादिना** । १२३ दिनात्मके **मानवं** गोवधप्रकरणोक्तं । **तत्रैव** अनापद्येव उपयुक्तं तमाह । **यस्येत्यादि**नेतीत्यंतेन । इत्थं हि **सः** (१।२।२८-२।१०)"अति-क्रान्ते सावित्र्याः कालऋतुंत्रैविद्यकं ब्रह्मचर्यं चरेदथोपनयनं ततः संवत्सरमुदकोपस्पर्शनमथाध्यायः । अथ यस्य पिता पितामहश्च इत्यनुपनीतौ स्यातां ते ब्रह्महासंस्तुतास्तेषां गमनं भोजनं विवाह-मिति वर्जयेत् तेषामिच्छतामिदं प्रायश्चित्तं यथा प्रथमेतिक्रमः सश्चरेव संवत्सर अथोपनयनं तत २५ उदकोपस्पर्शनं । प्रतिपुरुषं संख्याय संवत्सरान्यावंतोऽनुपनीताः स्युः सप्तभिः पावमानाभि-र्यदंति यच्च दूरक इत्येताभिर्यजपवित्रेण सामपवित्रेणांगिरसेनेत्यपि वा व्याहृतिभिरेव वा सोऽध्याप्योऽथ यस्य प्रपितामहादीनां न स्मर्यत उपनयनं ते श्मशानसंस्तुतास्तेषामभ्या-गमनं भोजनं विवाहमिति वर्जयति । तेषामिच्छतां प्रायश्चित्तं द्वादशवर्षाणि त्रैविद्यकं ब्रह्मचर्यं ३० चरेदथो(प)नयनं तत उदकोपस्पर्शनं पावमान्यादिभिरथ गृहमेध्योपदेशनं नाध्यायनं ततो यो निवर्तेत तस्य संस्कारो यथा प्रथमेऽतिक्रमे तत उर्द्ध्वं प्रकृतिर्वदिति" । अयमर्थः । विप्रादीनां षोडश-द्वाविंशति-चतुर्विंशतिवर्षात्मके सावित्र्युपनयनस्य काले अतिक्रांता ऋतुमासद्वयं यावत्त्रैविद्यकब्रह्मचर्ये वेदत्रयं संबंधि भैक्ष्याशनगुरुशुश्रूषणादिकं चरेत् । वेदत्रयार्थमृतुत्रयं

ब्रह्मचर्यं चरेदित्यर्थः । अथ ऋतुत्रयं ब्रह्मचर्यानंतरमुपनयनं कार्यम् । तत्र उपनयनानंतरं संवत्सरं यावदुदकोपस्पर्शनं प्रत्यहं प्रायश्चित्तरूपस्नानं कुर्यात् । अथाध्यापनीयः । एतदुद्दालकव्रताशक्तस्य यस्य व्रात्यस्य पितापितामहावप्युपनयनरहितौ स्यातां ते त्रयोऽपि ब्रह्मसंस्तुतः । ब्रह्मशब्दवाच्याः । तेषां गमनं तान्प्रति स्वकार्यार्थं गमनं तत्संबंधि भोजनादि च वर्जयंते । तेषां शुद्धिमिच्छतामिदं वक्ष्यमाणप्रायश्चित्तं । अंतोः स्थाने संवत्सरः । ततश्च प्रतिपुरुषं वत्सरात्रितयं ब्रह्मचर्यं कार्यम् । ५ अथोपनयनम् । ततो यावंतोऽनुपनीताः पुरुषाः तावत्संख्यस्य यदि द्वावनुपनीतौ तर्हि द्वौ संवत्सरौ यदित्र्यनुपनीतंस्त्रीन् संवत्सरानिति प्रत्यहं स्नानं कुर्यात्केचन संवत्सरमुदकोपस्पर्शन-मिति व्याचक्षते । तत्र मंत्राः यदंति यच्च दूरके भयं विदंति मामिहेत्येताभिः सद्भिः पाव-मानीभिः ऋग्भिर्मार्जनमघमर्षणं च यथाशक्ति कुर्यात् । ये हविषाः पवित्रेणेति यज्ञपवित्रां कया नश्चित्रा आभुवदिति सामपवित्रा हंसः शुचिषदित्यंगिरसव्याहृतया वा स्नानमंत्राः । भवति प्राय- १० श्चित्तमिति मंत्रा अध्याप्याः । एवं कृतप्रायश्चित्तस्त्वध्याप्यः । यस्य प्रपितामहादेरुपनयनं नास्ति तथार्वाचामपि पुरुषाणामुपनयनाभावः ते सर्वे श्मशानशब्दवाच्या अशुचय इत्यर्थः । तेषां गतेष्वभ्युपस्थानं भोजनादि चापद्यपि न कुर्यात् । तेषां स्वयमेव शुद्धिमिच्छतां प्रायश्चित्तं द्वादश-वर्षाणीत्यादि स्पष्टार्थम् । उदकोपस्पर्शनमपि पुरुषसंख्यावत्सरानभिव्याप्य संवत्सरं चोदकस्पर्शनं । तत्र मंत्राः पूर्वोक्ता एव । ततोऽध्यापनं नास्ति किंतु गृहस्थाश्रमस्वीकारः । तत उपदिष्टगार्हस्था- १५ त्पुरुषात्संततिम् । तस्मादुत्पन्नस्योपनयनसंस्कारः प्रथमातिक्रमे यथा अतिक्रांते साविञ्याः कालो ऋतुत्रैविद्यकैब्रह्मचर्य अतितद्वद्भवंति तत्र ऊर्द्ध्वं प्रकृतिवत् तत उत्पन्नस्याऽनतिक्रांतसावित्रीकालो-पनयनवादिति । ब्रह्मचर्यम् भैक्षाशनगुरुशुश्रुषादिरूपम् । अत्र विप्रस्वामिकस्वर्णतत्समभिन्नमेवास्तेयं च

मि. पृ. २८३, तद्विषयम् । अनुक्तत्वादाह । क्षत्रीति । अपहर्तुस्तस्य यथाक्रमं पादोनमर्द्धं पादश्चे-तीत्यर्थः । तदेव तत्र हेतुमाहाऽष्टेति । व्याख्यातमिदं व्यवहारे । हेत्वंतरमाह । तथेति । २० तद्वादित्यर्थः । तदेव विशदयति । अत इति । एवमिति । वैश्यादावित्यर्थः । धान्ये इति । विषयसप्तमी । भाग इति ।

• "अष्टमुष्टि भवेत्किंचित्किंचिदष्टौ च पुष्कलम् । पुष्कलानि च चत्वारि आढकः परिकीर्तितः ॥ "आढकानि च चत्वारि द्रोण इत्यभिधीयते । षड्भिर्द्रोणैर्भवेत् वारी कुंभोऽपि द्रोणविंशतिरि"त्यन्ये पंचदशांशेतिपादोनसप्तदशपणेत्यर्थः । विशेषमाह । तथेति । क्षत्रेति समाहारद्वंद्वः । तेन २५ जलस्य च तंत्रत्वेदं जलादावतिप्रसंगाहि तत्र त्वन्यूनताऽत आद्यमभिप्रेत्याह । सार्धेति । ननु मूलत एवं चांद्रमास्येदं व्यर्थं अवमुत्यानुवादत्वं तु न चमुक्तपूर्वमंत आह । चांद्रेति । तत्र बीजमाह । तावदिति । सार्धशतसदाकृष्णेत्यर्थः । कृच्छ्रसहितमतिकृच्छ्रमिति मध्यमपदलोपे समासः । अथ तयापदतगस्यापि यद्वा लक्षणा तेन रुपव्यपीति जलविशेषणं दारादिजलनिरासायं तेन सजलवापीकूपापहारे प्रायश्चित्तद्वयमित्यपराकाल एकोक्रमण एतेत इत्यव्यपीति । अन्यदप्याह । ३० तथेति । तान्निर्वात्य अपादनद्रव्य एव च दत्वा । प्रागवदाह । अनेनेति । अल्पसारेत्यस्य व्याख्या अस्य प्रति ।

प्रागवदाह । इदं चेति । अर्द्धं तृतीयं यस्मिन्नित्यर्थः । तस्य सांतपनस्य । व्यवस्थामाह । एकवारेति । न्यूनतां परिहराति । यानादीति । उपसंहरति । सर्वत्रेति । प्रागवदाह । एवं

**चेति**। प्रागुवदाह। **अत्रापीति**। रज्वा चैवेति पाठः। प्राग्वदाह। **अत्रापीति**। प्राग्वदाह। **म्रियमाणोति**। विशेषमाह। **इदं चेति**। सति स्वामिनीति भावः। तथा विनिगमनाविरहादाह। **तथेति**। ऋणत्वेन संस्तुतं यज्ञादेरित्यर्थः। **अहोऽपिवेति** वार्तिक्रमे चांद्रमासातिक्रमे त्वहः श्रौतस्मार्ताग्न्याधानाभावे इदं गृहीतत्वनास्तिक्यादिना त्यागे **धर्मादिवृत्पादिषु** विशेष उक्तः।

५ तथा च **व्याघ्रपादः**

"मासद्वयं तु यो वह्निं त्यजेदेव समाचरेत्। नास्तिक्यात्कृच्छ्रमेकं तु होमद्रव्यं ददाति च॥"

तथा

"योऽग्निं त्यजति नास्तिक्यात्प्राजापत्यं चरेद्द्विजः। अन्यत्र पुनराधानमुपदिष्टं मनीषिभिः॥"

चतुर्मासत्यागे त्वतिकृच्छ्रः। तथा च **स** एव

१० "चतुष्टये तु संपूर्णे मासानां तु हुताशनम्। त्यक्तातिकृच्छ्रं कुर्वीत ततः पापात्स मुच्यते॥"

षण्मासपर्यंतं पराकः अत ऊर्ध्वमब्दपर्यंतं पयोव्रतम्। यथाह**ोशनाः**

"षण्मासांस्त्यजते यो वै पराकं स समाचरेत्। ऊर्ध्वं पयोव्रतं कुर्यान्मासमेकं समाहितः॥

"वर्षपर्यंतमेवाहुर्मुनयः शंसितव्रताः।" संवत्सरादूर्ध्वं तु **स्कंदपुराणे**

"ऊर्ध्वं संवत्सरादग्निं यस्त्यजेत्स पयोव्रतम्। द्वैमासिकं ततः कुर्यात्त्रैमासिकमथापि वेति॥"

१५ कालाल्पत्वमहत्वापेक्षया विकल्पः। प्रमादान्मासमग्निपरित्यागे **कूर्मपुराणे**

"षड्रात्रिं त्यजेदग्निं प्रमादाच्छृणु मे प्रभो। उपवासं तथा कुर्यात्प्राजापत्यमथापि वा॥"

तथेत्यनेन तत्र प्रकृतं त्रिरात्रं परामृश्यते। मासद्वयपरित्यागे त्रिरात्रम्। अत ऊर्ध्वं संवत्सरपर्यंतं प्राजापत्यम् अत ऊर्ध्वं कालबहुत्वे प्रायश्चित्तबहुत्वम्। तथा च **भारद्वाजगृह्यम्**। "प्राणायामशतमात्रिरात्रादुपवासः स्यादाविंशतिरात्रादत ऊर्ध्वं माषषष्टिरात्रात्तिस्रो रात्रीरूप-

२० वसेत्। अत ऊर्ध्वं मासं वत्सरात् प्राजापत्यं चरेत्। ऊर्ध्वं कालबहुत्वे दोषबहुत्वमिति"। उपवासश्च त्रिंशद्रात्रादित्यपि पाठः। आलस्येन परित्यागे **स्मृत्यंतरे**

"आलस्येन यदा वह्निं द्वादशाहं त्यजेत् प्रभो। त्रिरात्रमुपवासं च चरेत् पापविमुक्तये॥"

**भारद्वाजगृह्यम्** "द्वादशातिक्रमे त्र्यहमुपवसेत्। मासातिक्रमे द्वादशाहमुपवासः। संवत्सरातिक्रमे मासोपवासः पयो भक्षणं वा। कूष्मांडीभिर्होमः क्रमेणोभयं भवति उपवासासमर्थस्य मासं

२५ पयो भक्षणम् संवत्सरानंतरमधिककालातिक्रमे उभयं"। एतच्च गृह्याग्निविषयम्। **हारीतः** "संवत्सरोत्सन्ने अग्निहोत्रे चांद्रायणं कृत्वा पुनरादध्यात्। द्विवृषोत्सन्ने चांद्रायणं सोमायनं च कुर्यात्। त्रिवृषोत्सन्ने संवत्सरं कृच्छ्रमभ्यस्य पुनरादध्यादिति"। **शंखः** "अग्न्युत्साही संवत्सरं प्राजापत्यं चरेत् गां च दद्यादिति"। एतदकामतोश्रौताग्न्युत्सादे। कामतश्च **मनूक्तम्** (११।४१)

"अग्निहोत्र्यपविध्याग्नीन्ब्राह्मणः कामकारतः। चांद्रायणं चरेन्मासं वीरहत्यासमं हि तत्॥"

३० मासमग्नीनपविध्येत्यन्वयः। केचनालस्यादिना मासपरित्यागे प्रथममासे कृच्छ्रत्रयं। ततो माससंख्यया कृच्छ्रसंख्येति। एवमादयो गुरुलघुकल्पाः शक्त्याद्यपेक्षया व्यवस्थापनीयाः। एवं प्रायश्चित्तानंतरं प्राप्तकाले पुनराधानं कृत्वा नित्यकर्म कुर्यात् प्रायश्चित्तं च होमद्रव्यं दत्वा। तथा च **भारद्वाजगृह्ये**

"यावत् कालमहोमी स्यात् तावत् द्रव्यमशेषतः। तद्दानं चैव विप्रेभ्यो यथा होमस्तथैव चेति॥"

विशेषं वक्तुमाह। **अपेति**। सर्वथा तदसंभवे आह। **प्रायश्चीति**। क्लप्तानां विहितानां अत्रोधमर्णऋणादने कालविलंबादिप्रयुक्तमेतत्प्रायश्चित्तमुत्तमर्णाय तद्धनं दत्वैव कार्यं सति धने। अनतिप्रसंगायाह **अधीति**। **एतदेव** मूलोक्तमेव। विशेषमाह **अर्वागिति**। विशेषांतरमाह **अनेति**। तन्निष्क्रयाय त्विति पाठः। तन्निष्क्रयन्नितीति पाठांतरम्। अकरणे चेति। तथा चांद्रायणेषु च ५ तप्तकृच्छ्रः उदपानं कूपसमीपं जलाशयदशाधिकसहस्रं। ब्रह्मचर्याद्यकरणमपि देवऋणं बोध्यम्। **विक्रये चेति** उक्तं। **जपन्** गायत्रीमिति शेषः। **मानं** प्रस्थादि। **उन्मानं** तुलादि। **हीनं** चोभयत्र संकीर्णमयमिश्रितान्यवस्तुप्रायश्चित्तमित्यर्थः। उपसंहरति **एवमिति**। अत्र सर्वत्र दंडं पर्यालोच्य प्रायश्चित्ताधिक्यं कल्प्यम्। इदं च प्रायश्चित्तजातं तद्विक्रयार्जितधनोत्सर्गपूर्वं कार्यं। अनापदि दत्वा पूर्वगृहीता कन्या तत्संतोषार्थमिति भावः। **निर्विशेत**। तदनुज्ञया गृह्णीयात्। तदेवाह। १० **तां चैवेति**।

विरोधं परिहरति। **यत्त्विति**। **अभिविष्टे** अविवाहिते। विरोधांतरं परिहरति। **यदपीति**। मि. पृ. २८५ विशेषमाह। **यदेति**। विरोधं परिहरति। **पूर्वोक्ताविति**। **मनुनेति** भावः। **कृच्छ्राविति**। अत्र चिरक्षिप्रादिभेदेन व्यवस्था द्रष्टव्या। अतिदिशति। **एतच्चेति**। अनाहिताग्नौ ज्येष्ठे आधाता कनिष्ठः पर्याधाता ज्येष्ठः पर्यहितः। **अत एव** तत्तुल्यत्वादेव तमेवाहाग्रे **इति**। १५ एतेनान्यथा पाठो निरस्तः। **तत्र** तयोर्मध्ये **प्राजेति** तां परित्यज्येत्यादिः। तां चैवेत्यस्याग्रे पाठाभावः। **देहिन्यामिति** एतेनान्यथा व्याख्यानं **स्मृत्यर्थसारोक्तमपास्तम्**। पूर्ववदत्र निवेदनानुपयोगाच्च। इदमपि अकामतः। कामतस्तु **गौतमीयम्**। अत्रानुक्तस्थले प्रौढकन्याया अर्धप्रौढायाः पाद इति कल्प्यः। यत्र तु सोदरकनिष्ठभ्रात्रा सोदरज्येष्ठकन्यादावूढा ततो ज्येष्ठभ्रात्रा कनिष्ठा यद्वा ज्येष्ठभ्रात्रादौ कनिष्ठा ततः कनिष्ठेन ज्येष्ठा तत्र परित्याग एवं **परिवित्ति-** २० परिवेतृदातृयाजकानां द्वादशरात्रं सक्तुप्राशनं ब्राह्मणतर्पणं च तां पुनर्भुवमित्याचक्षते न भूयश्चै-नामभिगच्छेदिति **सुमंतोः**। नाभिगच्छेन्न प्राप्नुयात्परित्यजेदिति यावत्। यत्तु ज्येष्ठः स्वोढं कनि-ष्ठाय दद्यात् कानिष्ठोऽपि ज्येष्ठाय' एवमग्रेदिधिष्वादिष्वप्युत्क्रमविवाहेन तत्संस्कारस्याऽनिष्पन्नत्वा-दिति तन्न। अत्यंतलोकविद्विष्टत्वात्। दत्तकादौ तु नायं दोषः।

"भिन्नोदरे च दत्ते च पितृव्यतनये तथा। दाराग्निहोत्रसंयोगे न दोषः परिवेदना॥" इति २५ **गौतमात्**। भिन्नोदरः सापत्नः। जनककुले ज्येष्ठभ्रातृसत्वेऽपि न दत्तकस्य तत्र परिवेत्तृत्वेनापि तस्य परिवित्तित्वम्। पितृव्यतनयः देवरजन्यक्षेत्रजः। तथा च तद्विवाहे देवरपुत्रस्य तद्विवाहे तस्य च दोषः। यथाश्रुतं तु न युक्तम्। परिगृहीतस्य दत्तपदेनैव संग्रहादन्यस्य निषेधेन प्रतिप्रसवा-भावात्। इदमपि शुद्धदत्तके। द्व्यामुष्यायणे तु तत्रापि दोष एवेति बोध्यम्। एवं क्लीबकुब्ज-पतितविरक्तसंन्यस्तातिरोगिजडमूकगद्गदबधि। कथंवामनपादद्वयहीनातिवृद्धतस्कराविवाहानिच्छु- ३० शूद्रतुल्यमृतभार्याणां परिवेदने न दोषः। एवं वेश्याधनकृष्याऽऽसक्त्या विवाहानिच्छुपरिवेदनेऽपि। **तथा च कात्यायनः**

"**देशान्तरस्थक्लीबैकवृषणं च सहोदरान्। वैश्यानिष्ठांश्च पतितशूद्रतुल्या निरोगिणः॥**

"जडमूकांन्धबधिरकुब्जवामनषंढकान् । अतिवृद्धानभार्यांश्च कृषिसक्तान्नृपस्य च ॥
"धनवृद्धिप्रसक्तांश्च कामतोकारिणस्तथा । कुटिलोन्मत्तचौरांश्च परिविंदन्न दुष्यतीति ॥"
धनधर्मविद्यार्थं देशांतरस्थे द्वादशवर्षाणि प्रतीक्षां कुर्यात् । तीर्थे तत्स्थे दश । तथा तद्वत्भृतकेति पणपूर्वाध्यापकादध्ययनग्रहणं भृतकाध्ययनम् पणपूर्वाध्यापनं च भृतकाध्ययनं तृतीयपादार्थ-
५ माहोत्कर्षेति । अनुयागप्रदानांशे संमतिमाहाऽत्त एवेति । पातित्यं त्वभ्यासाविषयं बोध्यं । प्राग्वदाहाऽत्रापीति ।

**तथा** तद्वत् । एवमग्रेऽपि । **उक्तम्** । गुरुतल्पप्रकरणे । **अन्यत्रापि** गुरुदाराभिन्नेऽपि । **दारे** तद्विषये । अयमेव वचनांतोऽपि । **श्रोत्रियस्येतीति** । "द्रव्यलाभे चोत्सर्गो यथास्थानं वा गमयेदि"त्यस्य शेषः ( २२।३१।३२ )। ताभिर्यदि दत्तं द्रव्यं तदा त्वाज्यं यदीपद्रव्यं यथा-
१० प्रापनीयमित्यर्थः ।

**वक्ष्यमाणशंखानुरोधेनाह । यद्वेति** । न्यूनतां परिहरति । **एतादिति** । एवमग्रेऽपि । आति-देशलब्धमाह । **षण्मासीति । ब्रह्मचर्यं** द्वादशवार्षिकव्रतं । विरोधं परिहरति । **यत्विति** । एवमग्रेऽपि । सर्वं द्वादशवार्षिकं । **अनन्येति** । विशेषोक्तिफलमाहाऽ**नन्वेति । एकस्यां** नार्याम् । **अभ्यासे** द्वितीयवारादिगमने । नेदं अनन्यपूर्विकाभ्यास इव न प्रत्यभ्यासं पादपादाधिक्यरूपम् ।
१५ ब्राह्मण्याः अव्यभिचारिण्याः । एतच्च ब्राह्मणस्येति सूचयन्नाह । **क्षत्रियेति** । कामत इति
मि. पृ. २८६. भावः । मासस्य कामविषयत्वादाहा**कामेति** । क्षत्रादीनामपि शूद्रागमने उक्तमासार्द्धमेव । **अप्रेक्षा** अबुद्धिः । **निवृत्तेति** दुष्टाचारस्येत्यर्थः । संवर्त्तानुरोधेन पक्षांतरमाह । **द्विजातीति । व्यभीति** पूर्वान्वयि । **किंचित्** अष्टमुष्टि । पक्षांतरमाह । **दिवेति** । विशेषमाहेदं **चेति** । **वृषली** शूद्रा । तत्राभिजातो जनितापत्यः । **वध एवेति** । कामत इति भावः । सर्वत्रानुक्त-
२० त्वादाह । **एतासामिति** । इदमुभयत्र बोध्यं । **द्रष्टव्यम्** अकामतः । अथ स्त्रीणामाह । **स्त्रीणा-मपीति । तदेव** संपूर्णं । अत्र प्रायश्चित्तार्धमित्यस्याप्रवृत्तिः ।

"यत्पुंसः परदारेषु समानेषु व्रतं स्मृतं । व्यभिचाराच्च भर्तुस्त्री तदशेषं समाचरेदिति॥" **बृह-स्पतेः** । तथा च तत्स्त्रीपुंससाधारणव्रतोपदेशविषयम् । **समानेषु** सवर्णेषु । इदमुत्कृष्टस्याप्युपल-क्षणम् । बलात्सवर्णोत्कृष्टोपभुक्तायाः **संवर्तोक्तं**

२५ "बलात्प्रमथ्य भुक्त्वा चेदं स्वमानेन चेतसा । प्राजापत्येन शुद्धिः स्यात्तत्तस्याः पावनं परम्॥"
अत्राशक्तौ **ऋष्यशृंगोक्तं** "बलेन कामितासवर्णेन कथं च न प्रायश्चित्तं त्रिरात्रं स्यात्तस्याः शुद्ध्यर्थमादिशेदिति" । **परं** केवलम् । महापयपदार्थमाह । **एजेति** । योषिदिति पाठांतरम् । **पादूनेति** पादन्यूनमित्यर्थः । विशेषमाह । **यदा त्विति** । एवमग्रेऽपि । प्रायश्चित्ताभावः पाप-
मि. पृ. २८८. गुरुत्वात् । **आक्रम्य** बलात् । इच्छापूर्वं चेयत्र यदुक्तं तत्र तत् द्विगुणम् ।
३० **तत्रैव ऋष्यशृंगेणैव** । **वा** चार्थे । **गते** निर्गते । **विधि** यथाविधि । वधोऽत्र नासिकादिकर्त्तन-
मि. पृ. २८९. मित्यपरार्के । विशेषानुक्तेराह । **वार्धुष्येति** । ॥२६५॥

## याज्ञवल्कीये २६६।२६७ श्लोकौ ।

मूलसंगतिमाह । **लवणेति** । तदर्थमाहाऽ**चिरेति** । अष्टमासासार्धवर्षषोडशो नवमासाः पूर्व[illegible] सूचयन्नाह । **वृत्तस्थे इति** । ईषादित्यादिः । एवं स्मृतावपि सदाचार-

निरासमाह । वृत्तेति । अविरोधायाह । क्षत्रिये त्विति । शंखमाह पूर्ववदिति । अविरोधाया-
मि. पृ. २९० हेदं चेति । अत्र विकल्पमाह । स्त्रीशूद्रेति । यथाक्रममाह ।
मात्विति । विरोधं परिहरति । मान्विति । एवं प्रागग्रेऽपि । आदिना च साहसवन्महापातका-
नामपि संग्रहः ॥ २६६ ॥ २६७ ॥

## याज्ञवल्कीये २६८ श्लोकः । ५

प्रागनुक्तत्वादाह । स्त्रींवधे इति । तदर्थमाह । स्वैरीति । व्यवस्थामाहेदं चेति ।
प्रतीति । प्रतिलोमप्रसूतानां स्त्रीणां वधे चतुर्द्विषण्मासा । अंतरप्रभवानां सूतादीनां चतुर्थे-
वेत्यर्थः । तदभिप्रेत्याद्ये व्युत्क्रमेण व्यवस्थामाह । ब्राह्मण्या इति । सूतादिवधे व्यवस्था ।
आवृत्या सूतवैदेहकचंडालभेदेन षण्मासादय इति । विशेषमाह । यदा त्विति । एवमग्रेऽपि ।
मि. पृ. २९२. वैश्यकर्म हट्टव्यापार । अधाराष्टिनिरासायाह । तच्चेति । वैश्यां तत्कर्मणा १०
जीवंतीम् । अन्यथा पौनरुक्त्यं स्पष्टमेव ॥ २६८ ॥

## याज्ञवल्कीये २६९ श्लोकः ।

विशेष्यत्वादेवाह । यदा त्विति । प्रागुक्त्या पक्षांतरमाह । दश वेति । प्राग्वदाहेदं
चेति । सर्वत्र संमतिमाह । यथाहेति । विरोधं परिहरति । यत्विति । अपिना पूर्वसमुच्चयः ।

(उत्तरार्धः) १५

मूलसंगतिमाह । हिंसेति । मेवानुषंमृषभेणाहत्वेत्यादि । किंचिदष्टमुष्टि । अविरोधायाह ।
तथेति । मूले ॥ २६९ ॥

## याज्ञवल्कीये २७०।२७१ श्लोकौ ।

तत्रान्यत्राप्याह । किंचेति । एवमग्रेऽपि । जलपत्वेन समुच्चयासंभवेन विकल्पसिद्धेराह ।
मि. पृ. २९२ वेति । उपस्पर्शः स्नानं । चो द्वयोः समुच्चयः ॥ २७० ॥ २७१ ॥ २०

## याज्ञवल्कीये २७२ श्लोकः ।

गुंजापरिमितं सुवर्णम् ॥ २७२ ॥

## याज्ञवल्कीये २७३।२७४ श्लोकौ ।

समाहारद्वंद्वादाह । किंचेति । निहमुपह । कृच्छ्रशब्दस्य प्राजापत्ये रूढत्वादाह । कृच्छ्रेति ।
मि. पृ. २९३ लक्षणबीजमाह । क्लेशेति । मात्रं कार्त्स्न्ये । उक्तं व्यतिरेकमुखेन द्रढयति । २५
यदीति । न च । न हि । अन्यत्रापि गजशुकभिन्नेऽपि ॥ २७३ ॥ २७४ ॥

## याज्ञवल्कीये २७५ श्लोकः ।

कोटं द्वारं । सहसंबध्य उक्तत्वादाह । व्यवेति । अनियमादाह । स्वल्पमिति । तद्व्याचष्टे ।
मि. पृ. २९२ तत्रेति । षष्ठाः कार्षापणषोडशांशः । अविरोधायाऽऽह । एतच्चेति । किंचि-
त्सास्थातीत्यर्थः । तित्तिरेति पाठे । तित्तिरितोभिन्नोऽयम् । तितिरीतिपाठे पूर्वोक्तम् । कामतोभ्यास- ३०
विषयं । एवं गजापावपि बोध्यम् । विहंगाः उपात्तभिन्ने विज्ञाते पक्षिणः । कृसरं तिलमिश्रो-
दनम् । लोहकंडः तीक्ष्णमयाग्रः ॥ २७५ ॥

## याज्ञवल्कीये २७६ श्लोकः।

**गुल्मा** मालत्यादयः। **लता** द्राक्षादयः। **वीरुधो** गुडूच्यादयः। **ओषधयः** शाल्याद्याः। **शतमिति** इदमकामतो विरहादाह। **ग्राम्येति**। महाफलप्रदनालिकेरादिवृक्षाणां कामतस्यो-दनात्यंताभ्यासे संवत्सरव्रतसकलत्वात् गणे जपः। **चैत्यो** ग्राममध्यवृक्षः। विश्रुते प्रख्याते ५ इत्यस्मिन्वृक्षे च इदं चापरिगृहीतविषयं च्छित्वा। परिग्रहे तु दंडाधिक्यदर्शितात्प्रायश्चित्ता-

मि. पृ. २९५ धिक्यं बोध्यम्। कामतोऽत्यंताभ्यासचांद्रादिष्वेकप्रतिरोधायाह**योपेति**। **एतदिति** तत्वतुकदंशनिमित्तकमित्यर्थः॥ २७६॥

## याज्ञवल्कीये २७७।२७८ श्लोकौ।

अल्पत्वादाहे**षदति**। नाभेरधोभागे आह। **ब्रह्मेति**। गिति शक्तविषयमपीदं बोध्यम्। १० दानेनाह। **दानेन**। पक्षांतरमाह। **गाछेति दशेति**। अतिगाहशेत्यर्थः। द्विवादशेआहोदित-**मिति**। **तेनैव अंगिरसेन**। **अन्यत्रेति** व्याचष्टे। **अरजस्वेति**। **आदिना** जिह्वादि। **मनु**

मि. पृ. २९६ इति पाठः। तत्र तयोर्मध्ये। तेनेत्यस्यार्थोऽभी**ति**। **न च**। न हि। **तदुक्तं भट्टैः**। **विधे**त्यस्य यत इत्यादिः॥ २७७॥ २७८॥

## याज्ञवल्कीये २७९ श्लोकः।

१५ **किंचेति**। मंत्रजपरूपप्रायश्चित्तप्रसंगादान्यत्राप्यन्यमंत्रतपरूपप्रायश्चित्तमाहेत्यर्थः। **मनूक्त-** (५।१४६) द्वितीयाचमनं। **निंदितेति** शास्त्रीयायाशितादर्थांतरेण जीवनमित्यर्थः। विशेषा-भावादाह। **तत्र चेति**। **जीवनं** वृत्तिः। **चेन** परलोको नास्तीत्यंशसमुच्चये।

**अपिना च** नास्तिकवृत्तिर्वेदनिंदनं। जीवीव्यवस्थामाह। **एतद्धि** अविरोधायाह।

मि. पृ. २९७ **यत्वित्यादि**। **पंचेति** पूर्वान्वयि॥ २७९॥

२० 

## याज्ञवल्कीये २८० श्लोकः।

**व्रतेति**। स च ब्रह्मचारिणः स्त्रीसंगः। देवताराधनार्थं गृहीतव्रतत्यागः शिष्टाप्रतिषिद्धस्य भोजनव्यतिरेकेण न मया जलं पातव्यमित्यादिनियमत्यागः। प्रायश्चित्तार्थं प्रक्रांत-कृच्छ्रादिव्रतच्युतिः। **व्रतं** संकल्पः। स्नातकव्रतादित्यस्य मिथ्याकरणत्यागश्चापि स व्रत-लोपानां मध्ये।

२५ अविनिगमकत्वादाह**योपेति**। योगमप्याह। **चरमेति**। **कल्पः** प्रकारः। तदाह। **पशु-धर्मेति**। पशुयागे यथा वपादिहोमस्तथाऽत्रापीत्यर्थः। विशेषमाह**ैतच्चेत्यादिना**। **तेन** गर्दभेन। **पाकेति** आश्वलायनादिगृह्योक्तपशुकल्पतंत्रेण परिसमूहनपर्युक्षणादीतिकर्तव्यतयेत्यर्थः। तस्य तेन रात्रीश्चमायात्मा च तैत्तिरीयकयो ब्रह्मचार्यचक्रिरेदेसीवास्यायां रात्र्यामग्निपरिष्टीकस्या-

मि. पृ. २९८ दिति स्वगर्दभस्य **चीरं** वस्त्रखंडः। **यवसंवसम्**। **द्विजो** विप्रः। मंत्रमाह। **स्वप्ने इति**। रात्राविति भावः।

३० "अचितिभ्रष्टा तु या नारी माहादिचलिता ततः। प्राजापत्येन शुध्येत्तु तस्माद्वै पापकर्मणः॥"

इत्यापस्तंबः । भर्तुरनुगमने प्रत्योचितिभ्रष्टेत्यर्थः । कामत आह । कृच्छ्रेति । खंडने ब्रह्मचर्यखंडने । अवकीर्णिप्रसंगादाह । यदा त्विति । तमाह । संन्यस्येति । प्रत्यनंतरं अनवच्छिन्नं । प्रत्यवसितः सन्यस्तः । अनाशकोऽनशनम् । अत्र संवर्तादित्रयस्य तथा शुद्ध्या पुनर्गृहस्थो भवतीत्यत्र तात्पर्यं । किंतु तथा शुद्ध्या पुनः संन्यासेन व्यवहार्य इत्यन्यत्र स्पष्टम् । भिक्षादेरवरोहेण पुनर्गार्हस्थ्यकरणे प्रायश्चित्ताभाव एव । ५

"आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते पुनः । प्रायश्चित्तं न पश्यामि येन शुद्ध्येत्स आत्महेति॥" वचनादिति केचित् । उपपातकत्वात् प्रायश्चित्तं भवत्येवेत्यन्ये । सर्वथा त्वव्यवहार्यः बहिस्तूभयथापि स्मृतेराचाराच्चेति व्यासोक्तेः । 'नास्यास्मिंल्लोके प्रत्यापत्तिर्विद्यते कल्मषं तु निर्हण्यते' इत्यापस्तंबाच्च ( ध. सू. १।२४।२५।२६ ) ।

"नैष्ठिकानां वनस्थानां यतीनां चावकीर्णिनां । शुद्धानामपि लोकेऽस्मिन्प्रत्यापत्तिर्न विद्यते॥" इति । १० वचनांतराच्च । नास्येति । अत्रोज्वलः । अश्वमेधावभृथादिषु संभवत्स्वपि अस्य अस्मिन् जीविते प्रत्यापत्तिः शुद्धिर्नास्ति इत्यर्थः । मृतस्य तु कल्मषं निर्हण्यते तेन पुत्रादिभिः संस्कारादि कर्तव्यमिति भावः । अन्ये तु पूर्वसूत्रं तन्निवृत्त्यर्थं मन्यन्ते प्रत्यापत्तिः पुत्रादिभिः पुत्रादिभावेन संबंध इति ।

तत्र त्रयाणां मध्ये क्षत्रियादेः संन्यासाभावे आहाऽथवेति । मरणेति पामादानामित्यर्थः । १५ तथा च प्रजापतिः । तत्र परमहंसो नाम नदीपुलिने श्मशानदेशे तृणहरितशाद्वलेषु शयाने सुखं कुश्चीरकौपीनकषायवान्यस्तु प्राणान्परित्यजति स परमहंसो नामेति मरणान्निर्वृत्तानामिति भावः । प्रायो महाप्रस्थानम् । शस्त्रपदमुपलक्षणमित्याहाशास्त्रीयेति । द्रष्टव्यं इति । इदं च शस्त्रादिना आत्मव्यापादनेनमैवं पापक्षेजीवनस्तु (?) तेषामेव बोध्यः । एतच्च तत्तज्जात्युचितप्रायश्चित्तेन जातिशक्त्यापेक्षया समुच्चितं बोध्यम् । अविनिगमकत्त्वादाहाथवेति । विति । २०

"चितिभ्रष्टा तु या नारी मोहाद्विचलिती ततः । प्राजापत्येन शुध्येत्तु तस्माद्वै पापकर्मणः॥" इत्यापस्तम्बः । भर्तुर्गमने चितिभ्रष्टेत्यर्थः ।

एवं प्रासंगिकं परिसमाप्य प्रकृतमाह । इदं चेति । तत्र गुरुदारादौ विकल्पं निराचष्टे । न चेति । समुच्चये निरीचष्टे । न चात्रेति । आधिक्यं सत्त्वादाह । सममिति । कृच्छ्रेति शाकपार्थिवादिः । क्वचित्सत्वेऽप्याह । नियम इति । उक्तसिद्धांते शंकते तुमित्यादिना । २५

मि. पृ. २९९. पुत्रिका प्रागुक्तलक्षणलक्षिता । वृत्तिर्जीवनम् । शंकातात्पर्यमाहाऽत इति । समाधत्ते तदसदिति । उक्तं द्रढयति । न चेति । न हीत्यर्थः । पुरस्तात् आचारसिद्धांतमुपसंहरति । तस्मादिति ॥ २८० ॥

## याज्ञवल्कीये २८१ श्लोकः ।

अनुपपेति उपपातकभिन्ने इत्यर्थः । अन्ये त्वयुक्तप्रायश्चित्तापेक्षया ब्रह्मचारिण एवेति भावः । "एककालमेकाहो वा त्यागे" हारीतोक्ते "ब्रह्मचारी संध्यामनुष्योपस्थितसावित्र्याः सहस्रपुरोदित्यमुपतिष्ठेत । उपक्रम्याग्निकापव्राजपत्याहुत्वातीतं संपाद्योपस्थितं कुर्यादहन्यतीतो निर्पलव्रतपतीभ्यामिति" । उपस्थितः कृतस्त्यापस्थानो वा अग्ने व्रतपते इति व्रातपती अतीतव्यभिचार्यादिके उपस्थितः क्रमप्राप्तसूर्योपस्थाने वा अहन्यतीते एकदिनात्यजे "पुनर्मनः पुनरायुर्न" ३०

१ एवं मूले । व्यापादनमिति युज्यते पाठः ।

इति मंत्रादि न ब्रूयादित्यागे । एतदेव द्विगुणादि सप्तरात्रे पर्यंतं तदनंतरप्रकीर्णव्रतं मानससप्तेति-
पूर्वान्वयः । अनीति सुप्तोदिते सुप्तास्तमितेत्यर्थः । अग्न्यसमिति एककालयज्ञोपवीतादिनाशं
प्रायश्चित्तानि यथासंभवस्यादिरपि बोध्यानि । आचार्याय प्राणानीयम्य देशकालौ स्मृत्वा " मम
शौचाचमनसंध्यावंदनदर्भभिक्षाग्निकार्यदारित्यशूद्रादिस्पर्शनकौपीनकटिसूत्रयज्ञोपवीतमेखलादंडा-
५ जिनत्यागदिवास्वापछत्रधारणपुटकाभ्याशेहयाआत्माधारणोद्वर्त्तनांबुलेपनांजनजलक्रीडाद्यूतनृत्यगीत-
वाद्याद्यनिरतिपाखंडादिसंभाषणपर्युषितभोजनादिब्रह्मचारिव्रतलोपसकलदोषपरिहारार्थं श्रीपरमेश्वर-
प्रीत्यर्थं कृच्छ्रत्रयम् अहमाचरिष्ये " तेन श्रीपरमेश्वरः प्रीयताम् । अद्यपूर्वोच्चरित एवंगुण-
विशेषणविशिष्टायां पुण्यतिथौ मम शौचाचमनादिब्रह्मचर्यादिव्रतलोपंजपकलारिष्टनाशार्थं प्राय-
श्चित्तं करिष्ये । लौकिकाग्निं प्रतिष्ठाप्यान्वाधानं कुर्यात् । अत्र प्रधानं । अग्निं वायुं सूर्यं प्रजापतिं
१० अग्निं पृथिवीं महांतं वायुं पृथिवीं महांतं आदित्यं द्युमहांतं चंद्रमसं नक्षत्राणि दिशो महांतं
अग्रदानसं विश्ववेदसं मांविभावतुं प्राप्तं क्रतुं अग्निं अग्निं अग्निं वायुं सूर्यं प्रजापतिं एताः प्रधान-
देवता आज्येन शेषेण स्विष्टकृतमित्यादि आज्यभागांते कृत्वा व्यस्तसमस्तव्याहृतिभिर्हुत्वा 'ओं
भूरग्नये च भुवो वायवे चांतरिक्षाय च । सुवरादित्याय च । भूर्भुवस्सुवश्चंद्रमसे च । पाहिनो अग्न
एनसे । पाहि नो विश्ववेदसे । यज्ञं पाहि विभावसो । सर्वं पाहि शतक्रतो । पुनरूर्ज्जानिवर्त्तस्व ।
१५ सहरय्यानिवर्त्तस्व । पुनर्व्याहृतिभिर्हुत्वा स्विष्टकृतादिहोमशेषं समापयेत् । इति ब्रह्मचारिव्रतलोप-
प्रायश्चित्तं माहानाम्न्यादिव्रतचतुष्टयलोपजनितसर्वारिष्टनाशार्थं प्रत्येकं कृच्छ्रत्रयं तथा गौदानिकव्रत-
लोपजनितसकलारिष्टनाशार्थं प्रत्येकं कृच्छ्रत्रयं एवं अष्टादशप्राजापत्यात्मकं प्रायश्चित्तं यथाप्रत्या-
मि. पृ. ३००. म्नाज्यद्वारा आत्मकरिष्ये इति ।

## याज्ञवल्कीये २८२ श्लोकः ।

२० **किंचेति** । अन्यदपि ब्रह्मचारिणस्तदाहेत्यर्थः । मधु माक्षिकं । पौनरुक्त्यं परिहरति ।
**द्वादशेति** । एवमन्यास्वपि उक्तवक्ष्यमाणासु सर्वासु स्मृतिषु बोध्यम् । प्रागप्याह ! **सर्वेषु** ।
**मात्रं** कात्स्न्यें । **तदिति** लशुनादीत्यर्थः । **येन** "लशुनादि नाहं तथा भक्षयेदिति"
शेषः । **स** प्रोक्ता । **उपसौ कृतौ** । "उपनताविति" पाठांतरम् । ब्रह्मचारिण एवाहऽना-
दिति ॥ २८२ ॥

२५
## याज्ञवल्कीये २८३ श्लोकः ।

उत्तरार्धार्थमाह । **इतिश्चित्तांतरेति** । उपपातीह प्रायश्चित्तान्योक्तप्रायश्चित्तेत्यन्वयः । **पृथक्-
चेति** । कृच्छ्राणि चर्तावकुर्यात् । युक्त्यन्तरमप्याह । **यदाति** ॥ २८३ ॥

## याज्ञवल्कीये २८४ श्लोकः ।

तत्स्वरूपमाह । **अब्लोति** । **शुद्धवतीः** । शुद्धपदोपेताः ॥ २८४ ॥

३०
## याज्ञवल्कीये २८५ श्लोकः ।

मि. पृ. ३०१. **ततः** । उपपातकात्कचित्तथा पाठ एव ॥ २८५ ॥

## याज्ञवल्कीये २८६ श्लोकः ।

**ननु** कथं मनोरभिशस्तविषयत्वमा । **अपांक्त्यानामिति** ॥ २८६ ॥

## याज्ञवल्कीये २८७।२८८ श्लोकौ।

**किंचेति**। प्रसंगादन्यस्यापि तदाहेत्यर्थः। एवमग्रेऽपि। अविनिगमकत्वादाह। **ज्येष्ठेति**। अपिना तत्रैव रजस्वलायामेव क्षोणीसंगादाह। **रजस्वलाशीत्यादि**। तमाह। **रजस्वलेति**। मि. पृ. ३०३ दिनभेदेन तदेवाह। **प्रथम इति**। **तेनैव बौधायनेनैव**। क्षपेदतिका-नंदन इति मनायाः रजस्वलायाः रजस्वलयोः। **रजस्त्री** तद्युक्ता स्त्री कथंचित् स्पृशति। **स्नात्वेति**। मि. पृ. ३०४ मलमूत्रादेरित्यर्थः। संगत्यर्थमाह। **एवमिति**। तत्र प्रकृतानामुपपातकानाम्। **अवकीर्णिनं** व्रतलोपश्चेत्यनंतरप्रतिश्रयो महादिः उद्यानागामा ये ग्राम्यारण्ये च कुतो भेदः। **प्रपा** पानीयशाला। अनापद्यनेकपुत्रस्याह। **कामतस्त्विति**। अनापदि कामत इति भावः। कामतोऽनापद्यनेकपुत्रस्य तद्विक्रये चांद्रम्। आपद्येकपुत्रस्य कामतस्तद्विक्रये चांद्रद्वये सुतविक्रयश्च दारत्यार्थेन। एवमात्मभार्याविक्रयोऽपि ॥ २८७ ॥ २८८ ॥ १०

## याज्ञवल्कीये २८९ श्लोकः।

व्रात्यपदार्थमाह। **सावित्रीति**। प्राग्वदाह। **प्रभृतीति**। विशेषमाह। **एतच्चेति**। **षट्सु** अग्निहोत्रादिषु। **परोऽसपिंडः शूद्रो** वा। तत्राद्ये आहात्यंतेति। द्वितीय आह। **शूद्रेति**। सकृत्करणेऽपीति भावः। अन्यत्र तु
"यत्रोक्तं यत्र वा नोक्तं महापातकनाशनम्। प्राजापत्येन शुद्धिः स्यात्तथा चांद्रायणेन वेति" ॥ १५
द्विगुणादि बोध्यम्। यस्तु तेनैवाजीवति तस्य निंदितार्थोपजीवनप्रयुक्तमापत्प्रायश्चित्तं सति संभवे। असंभवे तु तस्य त्याग एव। एवं च यः पितृपितामहादिपरंपरया तथा जीवति स तु सुतरां संसर्गानर्ह इति बोध्यम्। लोकशिष्टत्वं गीतत्वमपि तत्राधिकं बोध्यम्। तेनापि निषेधकल्पनेन प्रायश्चित्तातिरेकस्य दर्शनादेवं च सर्वथा त्याज्य एवेति भावः। अभिचारोऽनभिचरणीयस्य तत्काम। तथा मौलमकामविषयव्यवस्थामेवाह। **तत्रेति**। तेषां मध्ये इत्यर्थः। **एते शूद्रयाजकादयः**। २० **पंचतपः** पंचाग्निः। स चेदन्यत्र प्रयोगः। **सहस्रवाक्**। सहस्रावृत्तिः। सहस्रशब्दो बह्वर्थस्त-त्फलितमाह। **बहुश इति**। प्रकृतत्वादाह। **प्राकृतमिति**। संवत्सरमित्यर्थः।

उत्तमपादार्थमाह। **यश्चेति**। **शरणेति**। पत्राणार्थप्रायश्चित्तार्थवति भावः। **सोऽपि** मि. पृ. ३०५. द्विविधोऽपि। पर्व संक्रात्यादि। प्राग्वदाहोत्कुर्वीते। शवश्रावणे तत्संनिधिपाठः। अत्र दक्षिणात्यागमधिकमाह। **दक्षिणेति**। सर्वत्र लब्धद्रव्यस्य जले त्यागपूर्वकमेव प्राय- २५ श्चित्तानुष्ठानम्।

विशेषमाह। **यद्वेति**। **त्रिरिति**। प्रतिदिनं स्नानत्रयं। पक्षांतरमाह। **ग्रामांतरमिति**। सर्वत्र तदानीमेवाध्ययनविरामेन प्रायश्चित्तमिति केचित्। अथाग्रिममाह। **पित्रिति**। त्यागश्चा-पतितानां। तेषां गृहात् निष्काशनम्। तत्राद्ये विशेषमाह। **तत्रेति**। परित्यक्तेति सृजंतमाहस्तु। एतैरपि दोषैरत्याज्यमेव सर्वथा लक्षणरूपमायासुतत्यागेऽप्येवम्। ३०

द्वितीये तमाह। **तडागेति**। **कौटिल्यमगुरौ**। पूर्वतो भेदमाह। **शिष्टेति**। देवताराधना-यर्थागृहीतव्रतलोपे अन्यस्मिन्व्रतलोपे चेत्यर्थः। क्रियापाक इत्याह। **पाकेति**। **मद्यपेति**।

१ एवं मूले।

मद्यपायाः स्वस्त्रियोऽप्युपभोगरूपे इत्यर्थः। **व्यसनेति** । नास्तिक्यादित्यापि बोध्यम् । **तेनैव**
मि. पृ. ३०६. **वसिष्ठेनैव**। प्राग्वदाह। **द्वादशेति। तत्रैव भारद्वाजेनैव** सर्वत्र "याव-
त्कालमहोमस्तावत् द्रव्यं देयं सुतेति" संस्काराद्यकरणरूपे चेत्यर्थः । **स्त्रीति** भार्याभावेऽस्यात्व-
**करणेन तद्धनोपजीवनं** स्त्रीजीवनम् । प्राणिवधेन जीवनं **हिंसा** जीवनं। वश्यार्थौषधिभि-
५ जीवनरूपं चापि तद्बोध्यम्। **व्यसनेषु** अष्टादशसु। आरोपके भावे णमुल्। **रंगोपजीवी वंदी**
**आत्मेति**। [illegible] परदास्यकरणरूपे इत्यर्थः। शूद्रप्रेष्यार्थमाह । **शूद्रेति** । **ब्राह्मेति**
मि. पृ. ३०७. उभयान्वयिनिर्देशः। प्रायश्चित्तं संख्यमैत्रीहीनयोनिनिषेवणं द्विविधमकृत-
सवर्णाविवाहस्य हीनवर्णाविवाहः साधारणस्त्रीरूपवेश्यादिभोगश्च । तत्राऽद्ये आहाऽपेति। **राजन्या-**
**पूर्वी** सवर्णास्त्रीपरिणयनं विना क्षत्रियकन्यापरिणेता। एवमग्रेऽपि। द्वितीये आह । **साधेति**।
१० विशेषमाह। **तत्र चेत्यादिना। अभ्यास इति** । अयमर्थः । मासपूर्तेः प्राक्त्रिंशद्दिनपर्यंत-
प्रतिसत्रिगमनस्य त्रिचतुराभ्यासेऽपि नाभ्याससंख्यया प्रायश्चित्तावृत्तिसंख्याऽपि तु पूर्वदिने
आवृत्तिसंख्यैव द्वितीयदिनमारभ्यैको‌नत्रिंशद्दिनपर्यंतगुणितसकृद्गमनप्रायश्चित्तावृत्तेः संख्या एक-
त्रिंशत्तमदिष्टं तु माससंख्ययैवाधिक्यवर्षपर्यंतम्। द्वितीयादिवर्षे तु वर्षसंख्याभिरेव प्रायश्चित्त-
संख्याभिरेव प्रायश्चित्तसंख्याभिवृद्धिरिति। तथा च योनियोगेन वर्षत्रयं नैरंतर्येण प्रत्यहं चतुरा-
१५ वृत्त्या व्यभिचारितां ब्राह्मणीं गच्छति तस्य प्रथमदिने प्राजापत्याष्टके द्वितीये प्राजापत्याष्टक-
तृतीये चैवमिति रीत्या मासपर्यंतं चत्वारिंशदधिकद्विशती प्राजापत्यानां प्राप्तौ तत्राहर्गुणा वृद्धि-
रित्यनेन प्रथमे प्राजापत्यद्वयस्य सकृद्गमनप्राप्तस्याहर्गतद्वित्वसंख्यागणनात् द्वितीये प्राजापत्यचतु-
ष्टयं तृतीये प्राजापत्यषट्कमिति रीत्या द्वितीयदिनादारभ्यैकोनत्रिंशद्दिनपर्यंतं दिनगणया षष्टि-
प्राजापत्यानि प्रथमदिनस्याष्टौ चेति मासाभ्यासिनोऽष्टषष्टिप्राजापत्यानि प्रायश्चित्तानि द्वितीयादि-
२० मासेषु माससंख्यया द्व्यादिरूपमासकृद्गमनप्राप्तप्राजापत्यगतद्वित्वसंख्याया गणनाच्चतुष्टे लब्धेऽष्ट-
षष्ट्यासंकलने द्विसप्ततिचतुःसप्ततिप्रभृतयस्ते भवंति पूर्णे वर्षे द्विनवति द्वितीये वर्षे षण्णवतिः
तृतीये द्विसंख्याधिकशतसंख्यास्ते भवंति। एवमन्यत्रापि बोध्यम्।

सकृदिति। प्रागुक्ते एव विषये सकृत्कृते एकं प्राजापत्यं प्राप्तमिति दिनत्रयं चतुरावृत्या-
ऽभ्यासतो द्वादशप्राजापत्याः प्राप्तास्तत्र दिनसंख्ययैव सकृद्गमनप्राप्तैकत्वसंख्याया गुणने कृते
२५ सति निष्पन्नसंख्याप्रायश्चित्तस्य त्रिदिनपर्यंतं वृद्धेरुक्ततया प्रथमादिचत्वार एव द्वितीयादिने द्वौ
तृतीये त्रय इति मिलित्वा नव प्राजापत्या मासमभ्यसतो द्वादशषण्मासमभ्यासात्द्वाविंशतिः ।
वर्षमात्रमभ्यसतः सप्तत्रिंशत् वर्षत्रयमभ्यसतः सप्तपंचाशत् एतदुत्तरं प्रतिवर्षं सार्धद्विसंख्यया वृद्धि-
माश्रित्य प्रायश्चित्तं कल्प्यम्। यदि तु प्रथमदिनेऽप्यभ्याससंख्याया दिनसंख्यापराधः स्वीक्रियते
तदा पूर्वत्र षट्संख्यायाः परत्र त्रिसंख्याया ह्रासेनोक्तैव संख्या तत्र तत्र वाच्येति। अत्र द्वितीयो-
३० पपत्तिश्चिंत्या। पंचदशतद्गुणं विंशादित्यार्षशीघ्रस्य व्रतमिति शेषः। एवमग्रेऽपि। एवमुपपत्तिकाभ्यासे
तु प्रकारविशेषोसर्वत्र बोध्यः।

**अनाश्रम इति**। अगृहीताश्रमत्वमित्यर्थः। परात्र परिपुष्टतेत्यस्यार्थः। **परेति। असदिति**।
[illegible]भ्यास इत्यर्थः । **आकरेति** । स्वर्णाद्युत्पत्तिस्थानेषु राजाज्ञयाधिकारि-
त्वमित्यर्थः॥ २८९॥

---

१ एवं मूले।

## याज्ञवल्कीये २९० श्लोकः।

मूलसंगतिमाह। **भार्याया इति**। **आदिना** जातिभ्रंशकरादिक्रमेणाह। **यथेति**। एव-
मि. पृ. ३०८ मग्रेऽपि। स्वरूपनिबंधनमप्याह। **तथा प्रतीति**। व्यवस्थामाह। **यदा
त्वित्यादिना**। मासभ्रमनिवारणायाह। **प्रत्ययमिति**। देवीमायगीतत्सत्वेनाधिकार इत्याह-।
**इदं चेति**। सृति द्रव्यगृहीते इति शेषः। त्यागश्चाप्सु प्रक्षेपः। कस्मैचिद्दानं वा। उपसंहरति। ५
**एवमिति**। एकतरनिमित्तके तु त्यागप्रायश्चित्तयोर्विकल्प इत्याहुः। एकस्यैवानेकैः प्रतिग्रहे तु न
दोषः। षोडशमहादानादन्यसत्प्रतिग्रहः शस्त्रविषब्रह्मांडाश्वशालग्रामतिललोहानां मृतशय्याहंकार-
वस्त्रादिजातित्वधेचाशुप्रतिग्रहोऽप्यसन्नवश्राद्धमासिकश्राद्धगजच्छायासुभोजनमपि। तथा तीर्थे
प्रतिग्रहाविघातयाहीनेन प्रतिग्रहोऽपि तथा उत्तमद्रव्यप्रतिग्रहश्च। उत्तमत्वं च मूल्यतो वचनाच्च।
तत्र देवविप्र एव द्रव्यमुक्तमभूसरस्वत्यस्तथेति **छांदोग्ये** "अन्नदधिमधुघृणगोभूरुक्माश्वगजा १०
उत्तमा" इति। **देवल** "रत्नक्षेत्रवेश्महेमकोप्याभरणानि च मृतशय्यादिप्रतिग्रहे पुनःसंस्कारो-
ऽप्यधिक" इति बोध्यम्॥

संगत्यर्थं स्वयमाह। **जात्येति**। **आदिना** स्वभावादि निंदितान्नादयेऽन्नमहनीयमात्रं
तस्य निंदितत्वं स्वभावकालसंपर्कक्रियाभावपरिग्रहैः स्वभावान्नशुभादेहकालतः पर्युषितादेः संप-
र्कात् श्वस्पृष्टादेः क्रियोतो हस्तदानादिना व्यंजनादेः भावादिक्षुरसादेः भवति हि कस्यचिदिक्षु- १५
रसे मंदिरे च मितिभावः। परिग्रहात्पतितादेरिति बोध्यम्। **च शब्देति**। चकारेणेत्यर्थः। **तत्र**
तेषां मध्ये। मूलमाह। **पलांडुमिति**। तदेवाह। **निषिद्धमिति**। अत्र मानमाहाऽ**मत्येति**।
**एतानि** शूद्रादीनि। **शेषेषु**। छत्राकादिषु। अन्येषु वार्ताकादिषु। "वार्ताकं श्वेतकंद्वरं श्वेत-
वृंताकमिति" **देवलात्**। **व्रश्चनप्रभवा** लोहिताः। लोहितान्नाक्षनिर्यासानिति **स्मृतेः**। **गोब-**
मि. पृ. ३०९. **लीति**। ब्राह्मणवासिष्ठेत्यपि बोध्यम्। **गृंजनं** विषदिग्धबाणाहतमृग- २०
मांसामिति कश्चित्। **कलिंजमिति** तन्नामेति प्राच्याः। नाजरारंत्यमूलं यदीयं चूर्णं गायकाः
कंठशुध्यर्थं भक्षयंति विटाश्च मंदार्थं स पत्रविशेषो वेति **माधवः**। लशुनानुकारिसूक्ष्मनालः
कंदविशेष **इत्याचार्यैः** प्रागुक्तम्। **पराशरोपि**

"पीयूषं श्वेतलशुनं वृंताकफलगृंजनम्। पलांडुं वृक्षनिर्यासं देवस्वं कवकानि च॥
"उष्ट्रीक्षीरमवीक्षीरमज्ञानात्पिबते द्विजः। त्रिरात्रमुपवासेन पंचगव्येन शुध्यतीति॥" २५

**पीयूषो**ऽभिनवं पय इति तस्य तत्वं चप्रसवकालिकत्वमित्येके दशाहांतःपातित्वमित्यन्ये।
**श्वेतत्वं** लशुनवृंताकान्वायि। तेन रक्तलशुनाशे कृष्णवृंताकादौ न दोषः। **वृक्षविशेषो**
हिंगुकप्लक्षादिभिन्नस्तेषां भोज्यत्वाभ्यनुज्ञानादिति **माधवः**। एतानि लशुनादीनि। **प्रकारः**
सादृश्यम्। उन्द्रंति कुशैः प्रायश्चित्तांते पुनः पुनरुपनयनेषु सर्वत्र तत्र च न स्वाध्यायादिकाला-
पेक्षा वपनमेखलादंडभैक्षचर्यादीनि च न **संधिनी** वृषेणोपजिगमिषुः। ३०

"स्त्रियाः क्षीरं द्विजः,पीत्वा कथंचित्काममोहितः। पुनः संस्कृत्य चात्मानं पंचगव्येन शुध्यतीति॥" तु
**कामतोऽत्यंताभ्यासविषयम्**। अमेध्यभक्षेतिदावतं अनिर्दशाहं तान्यपि एणादिपयास्य-
**विप्राश्य स्यंदिनी स्रवत्क्षीरा**। **आदिना** असंस्कारदुष्टमांसम्। तथा चाभक्ष्यमासं **द्विविधम्**।

स्वभावदुष्टम् संस्कारदुष्टं च । तत्राद्यं विट्शूकरादेः । द्वितीयमनुपाकृतमांसानीति मनूक्तेः। सूला वधस्थानं तत्र भवम्। वल्लूरं शुष्कमांसम् । जग्ध्वा मांसमिति । "अभोज्यानां तु भुक्त्वान्नं
मि. पृ. ३१० स्त्रीशूद्रोच्छिष्टमेव चे"त्यस्यादिः । विशेषमाह । इदं चेति । एतदिति । कृष्णाद्यर्हीत्यर्थः । कूष्मांडैस्तन्नामकमंत्रैः । पार्षतश्चित्रमृगः । मूत्रपुरीषे गोसबंधिभिन्ने ।
५ पंचेति । शशाद्यन्ये औष्ट्रं गव्यं च मांसं साहचर्यात् सर्वं पांचनखं शशाद्यन्यपंचनख-संबंधिमांसमूत्रादि ।

न्यूनतां परिहरति । अत्रेति । स्नानं तेषामपि अत्राभ्यासवर्जिते सर्वत्र एतद्दिनं घृतप्राशनं पुनःसंस्कारश्च समुदितभक्षणाभ्यासे तु षाण्मासिकं सांवत्सरं वेति प्राच्याः । भक्ष्याणि च शशकादयः । पंचैव पंचनखाः । मत्स्येषु सिंहतुंडिकरोहितपाठीनराजीवाः सशल्काश्च सर्वे
१० महिषाऽजाऽविउरभ्ररुरुमृगाः पशुषु तित्तिरिमयूरलावकपिंजलवार्धीणसवार्तिकाः पाक्षिष्वित्याहुः । अनंतरं । तावन्मात्रोद्धरणानंतरं स्वयं जलं स्पृशेत् । तच्च शिष्टं च हस्तस्थमेवं भूतं त्यजेत् । मुखस्थं निष्ठीव्य घृतं प्राशयेन्भक्षणप्रक्रमादाह । प्रासंगीति माहारः अनेनाहारांतरनिवृत्तिः तमसः क्लेश रूपत्वात् । एव मंत्रे पंचगव्यप्राशनेपि बोध्यम् । उपसंहरति । एवमिति । प्रकृतत्वादाह । पावकेति। ब्राह्मेति । तदीयोच्छिष्टेत्यर्थः । उच्छिष्टमंत्रे भोजनपात्रे भुक्तशेषं अन्याः सपिंडाः भुक्त-
१५ शेषं पाकपात्रावशिष्टमुच्छिष्टेति भोजनपात्रस्थभुक्तशेषेत्यर्थः । संनिकृष्टे' इत्यस्यार्थो महेति । अवधूतः । अष्टदिगंबरः । तृतीया सहार्थे । ततः कुर्यात् चंडालेति । तत्खानितेत्यर्थः । वर्णे वर्णे चातुर्वर्ण्ये इति पाठांतरम् । चंडालादीति अन्यरेर्खनितततत्परिगृहीतेत्यर्थः । तत्रैवाह । शुष्केति । तोये तु । तत्पाने तु । ब्रह्मेति । ब्रह्मकूर्चसहितत्रिरात्रोपवासैरित्यर्थः । घटके च। सौरे सुरासंबंधिकलशे । वाग्दुष्टं क्षुधार्तश्च न को भुंक्ते मामकत्वन्नमेव हि ब्रूते यशोर्थं यत्त्वेवं
२० तत्कांक्षिणाऽस्थिरिदं कस्य दीयते क्रियते न वा इत्युक्त्वा दीयते यच्च द्वितीयभावदुष्टे आह । शंकायामिति । त्रिरात्रमित्युभयान्वयि । तृतीयपक्षमाह । पलाशेति । तृतीयार्थे द्वितीयाभिः क्वाथयित्वा यः पिबेदित्यर्थः । शुक्तानि कालवशादम्लतां गतानि । कचीषपक्वं भौमोष्मपक्वमाम्रादि। समूहेति । ग्रहणकालभोजनमित्यर्थः । अमेध्यान् । अन्यान् । यने इति द्विवचनं । यस्येति । शेषे षष्ठी । पलाशो वल्ली पलाशो मध्यमपर्णं वा । लभते चांद्रकफलं । लभेच्चांद्रायणफलमिति
२५ पाठांतरम् ।

"घृतं हीनं तु यो भुंक्ते नर एवाहुतिपंचकम् । पश्चात् घृतेन भुंक्ते भुक्त्वा चांद्रायणं चरेत्॥"इति। मनुः । फालितं । राव इति प्रसिद्धम् । तेनैव क्रतुनैव ।

नाद्यासंवित् कन्यायां अश्लेषांतग्रहपिता । "अथ भुंक्ते तु यो मोहात्कृच्छ्रं सांतपनं
मि. पृ. ३१४-३१५. चरेदि"त्यापस्तंबः । अप्रसवितृकन्या अप्रसूता कन्या ।
३० अथ श्राद्धभोजने आह । पित्रादीत्यादिना । वृद्धौ वृद्धिश्राद्धे । अस्वरूपे । गुणशीलादिभिरसमाने दशाहाहं नवानि तत ऊनाब्दांतं नवमिश्रामिसपिंडतां मिश्रं ततः पुराणानि साहित्यस्याविवक्षितत्वात्ताभिः सहभोजनांतेषु अन्यतरत्कुर्वतो मासि प्राजापत्यं

१ एवं मूले । सूना वधस्थानं तत्र भवम् इति शुद्धः पाठो भाति ।

प्रत्येकं ज्ञेयम् । एवं संवत्सरेऽपि कल्प्यम् । द्विगुणं त्रिगुणादितद्भावं संनिगच्छतीत्यनेन प्रायश्चित्ताभाव उक्त इति । **जगत्प्रमोदयव्याख्यापाठो** मौल एव । हास इति । मात्रमधिकं मासोऽपि त इत्याद्यानुषितपदोपादानान्मासादिना तस्यैवेदं प्रायश्चित्तं बलात्कारकारितगोमहिषोच्छिष्ट-भोजनस्त्रीसंभोगादिप्रायश्चित्तैः सह समुच्चीयते कल्प्यं । ततः **संवत्सरगुणेति** । तच्च न नुसारादिति शेषः । मयूखेपि मौलपाठं लिखित्वा शूलपाणिस्तु संवत्सरैश्चतुर्भिरित्यादि दुरात्म- ५ इत्यंतोपपाठः प्राजापत्यचांद्रायणादिमासं मासमात्रे गवादिहिंसायां प्रातिस्विकं तत्तत्प्रायश्चित्तमेवा-

मि. पृ. ३१७ कामतो विहितं ज्ञेयमित्युक्तं । योग्यतया आह । **ब्राह्मणेति** । तत्र मानं **विष्णु**माह । **ब्राह्मेति** । **तेनैव** । **लिखितेनैव** । ददाति दानं देवताः देवपितरः । विशेषमाहेदं **चेति** । **कदंबकः** । समूहः । सर्वशेषं किंचिदुच्यते । कापालिकान्नं भोजने तज्जलं पाने च कृपा च कामं तदर्धं च अभ्यासे द्विगुणं मत्या च प्रत्याभ्यासे चतुर्गुणं ततस्त्रीगमने चैत अत्यंताभ्यासेऽब्दे १० कृच्छ्रम् । तथा **चापस्तम्बः**

"कापालिकान्नं भोक्तॄणां तन्नौद्रागामिनां तथा । ज्ञानात्कृच्छ्राब्दमुद्दिष्टमज्ञानादैंदवद्वयमिति"॥

पतिताच्च इछे च सति तत्समुत्सृत्यातिकृच्छ्रं अन्नसत्रप्रवृत्तस्याग्निहोत्रिणश्चामे न दोषः । **पक्वान्ने** त्वेकरात्रं त्रिरात्रं वा पावकं द्वादशचतुर्विंशतिर्वा प्राणायामाः चंडालाद्यन्नभक्षस्याद्यभ्यासे **मनुयमौ** (५४).

"चंडालांत्यास्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च । तत्त्वज्ञानतो विंशे ज्ञानात्साम्यं तु गच्छति ॥ १५
"रजकश्चर्मकारश्च नरो बुरुड एव च । कैवर्तनेमिभिल्लाश्च सप्तैते अंत्यजाः स्मृताः ॥
"एतेषां च स्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च । पतत्यनावतो विप्रो ज्ञानात्साम्यं तु गच्छतीति"॥

पतिगृहवासभोजनतद्वृत्तप्रतिग्रहेषु ज्ञानाभ्यासे मासोपवासः पंचदश धेनवो वा अज्ञानाभ्यासे वाशिष्टनिंद्यभंगादिमूलफलपत्रादशिते उपवासः ।

अथ सूर्यसोमोपरागयोर्विद्यमानाग्नेः सोमयाजिनः कर्तव्यमाह **देवलः** २०

"सूर्यसोमोपरागे तु सोमयाज्यग्निहोत्रवान् । गार्हपत्ये समिद्धेऽग्नौ स्रुवा हुत्वा विधानतः ॥
"सूर्यसोमोपरागेषु स्नात्वायाजी प्रयच्छति । मोक्षस्नानं पुनः कृत्वा मौनमास्थाय सत्वरः ॥
"गार्हपत्यं समिद्भिश्च प्राज्वाल्पयाज्य स्रुचोद्वहन् । सूर्योपरागे जुहुयाद् उदुत्यं चित्रमित्यृचा ॥
"उपस्थाय ततः पश्चात् नत्वा स्तुत्वा विसर्जयेत् । एवं कृत्वा तदायाज्या सूर्यलोकमवाप्यते ॥
"सोमोपरागे जुहुयात् आप्यायस्वेतिमंत्रतः । सं ते पयांसि च पुनः हुत्वा चाज्याहुतिद्वयम् ॥ २५
"ततः शुद्धिमवाप्नोति सोमयाजी महानिहि । एवं कृत्वा तदायाजी सोमलोकमवाप्नुयात् ॥"

**जाबालिः**

"ग्रहणे चोभयो राजन् अग्निवीर्यक्षयं गतः । राहुस्पर्शे तयोः पीडा ह्यग्नौ संक्रम्य तिष्ठति ॥
"सोमेयाज्यष्टमूर्त्यंशात्पुष्पवंतो यथा नृप । अतो होमः प्रकर्तव्यो यज्वभिर्यत्नतो नृप ॥
"आत्मनश्चाग्निहोत्रस्य पुनर्वीर्यबलात्यये" । सोमयाजिनस्त्वष्टमूर्तित्वमस्तीत्युक्तम् ॥ ३०

तदेवाह **भविष्योत्तरपुराणे**

"पृथिवी सलिलं तेजो वायुराकाश एव च । सूर्याचंद्रमसौ सोमयाजिनस्त्वष्टमूर्तयः ॥"

**इति हेमाद्रिविरचिते सूर्यसोमोपरागयोर्यज्वनिः कर्तव्यांशप्रायश्चित्तम् ।**

अथ सोमपानप्रतिग्रहप्रायश्चित्तमाह **देवीपुराणे** ।

"सोमं पिबेद्‌द्विजो यस्तु ह्यज्ञानकुलनामभिः । सार्कं यज्ञेषु मोहात्मा स वृथा ब्राह्मणस्मृतः॥" व्यर्थनामधेयः । घृतकोशगुह्यं वंतादिवत् ।

"तस्यैव निष्कृतिर्नास्ति पुनःसंस्कारणादृते । पश्चाच्चांद्रायणं कुर्याद्वापयित्वा शिरोरुहान्॥"

५ एतज्ज्ञानकुलगोत्रनामहोतृभिः सह सोमभक्षणविषयम् । सबंधुभिः सह पीत्वा प्रायश्चित्तमाह **कूर्मपुराणे**

"बंधुभिः सह मोतोता पीत्वा सोममहाक्रतौ । स्वमंत्रोच्चारणं कृत्वा त्रिवारं शुद्धिमाप्नुयात्" ॥ स्वमंत्रनेचरिहितारि च कर्माणि नियुक्तः । तत्र ये मंत्रास्तान् त्रिरुच्चार्य पश्चाच्छुद्धिमवाप्नोति स्वबंधवाः । **स्कंदपुराणे** ।

१० "सकुल्यश्च सनाभिश्च सपिंडश्च सगोत्रवान् । मातुलस्नेहपुत्रस्वभावुक्रो दुहितापतिः ॥

"श्वशुरस्नेहपुत्रश्च भागिनेयस्तथात्मजाः ।

"पितुःपितुः स्वसापुत्राः पितुर्मातुः स्वसुः सुताः । पितुर्मातुलपुत्राश्च विज्ञेयाः पितृबांधवाः ॥

"मातुः पितुस्वसुः पुत्रा मातुर्मातुः स्वसुःसुता । मातुर्मातुलपुत्राश्च विज्ञेया मातृबांधवाः ॥"

समानकुलं यस्य सः सकुल्यः । त्रिपुरुषादूर्ध्वं समाना नाभिर्यस्य सः सनाभिर्ज्येष्ठकनिष्ठ-

१५ भ्रात्रादिः । समानपिंडो यस्य सः सकुल्यपिंडज्येष्ठकनिष्ठपितृव्यस्तत्पुत्राः । समानं गोत्रं यस्य सः सगोत्रः । पंचमादूर्ध्वं एते स्वबांधवाः । एतैः सह सोमभक्षणे समंत्रपूतस्त्रेधावृत्य न दोषः । अज्ञातबंधुभिः सह भक्षणे चांद्रायणं कृत्वा पुनःसंस्कारं तेभ्यः प्रतिग्रहप्रायश्चित्तमाह **लिंगपुराणे**

"अज्ञातहोतृभिः सार्धं यः कृत्वा सोमभक्षणम् । तस्मात्सुवर्णवर्णं वा प्रतिगृह्य द्विजोत्तमः ॥

"प्राजापत्यं चरेत्कृच्छ्रमण्डमात्रं सुवर्णतः । पूर्वोक्तं च सुवर्णे च षडब्दं कृच्छ्रमाचरेत् ॥

२० "उपोष्य रजनीमेकां अनशुक्र शुद्धिमाप्नुयात् । उपोष्य पंचगव्यं वा पीत्वा शुद्धिमवाप्नुयात्॥"

**इति हेमाद्रिविरचिते सोमप्रतिग्रहप्रायश्चित्तम् ।**

अथ पशुपुरोडाशभक्षणप्रायश्चित्तमाह **देवीपुराणे** ।

"यज्ञेषु साधुवृत्तेषु धर्मार्जनधनेषु च । तत्रैव भक्षयेन्मध्ये पशुं वृत्त्यर्थमादरात् ॥

"ब्राह्मणो ब्रह्मवित् पूतः पशुं यद्यभिहारयेत् । तस्यैव निष्कृतिर्भूप वेदपारायणं स्मृतम् "॥

२५ एतत् बंधुकृत्यविषयम् । अन्यत्र भक्षणे. द्विगुणम् । अश्रोत्रिययज्ञे पशुपुरोडाशभक्षणे त्रिगुणं । शूद्रद्रव्यग्रहणयज्ञेषु पशुभक्षणे पंचगुणं पुनः संस्कारश्च **कूर्मपुराणे**

"स्वबंधुकृतयज्ञेषु प्राप्तं यत्पशुभक्षणम् । पारायणेन शुद्धिः स्यात् अन्यत्र द्विगुणं भवेत् ॥

"अश्रोत्रियेषु त्रैगुण्यं शूद्रे पंचगुणं भवेत् । पुनः संस्कारकृत् पूतः शुद्धो भवति सर्वदा॥"

तत्प्रतिग्रहदोषप्रायश्चित्तमाह **लिंगपुराणे**

३० "पशुं भक्षयतो यस्य द्विजस्याकृतनिष्कृतेः । प्रतिगृह्य सुवर्णं वा ज्ञात्वान्नं संपरिग्रहेत् ॥

"अज्ञात्वा कृच्छ्रमात्रेण ज्ञानेनैव द्वयं स्मृतम् । अन्नभृत् पंचगव्येन शुद्धिमाप्नोति पूर्वजः॥"

अल्पसुवर्णप्रतिग्रहे प्राजापत्यं स्वर्णमात्रप्रतिग्रहे द्विगुणम् । अन्नभक्षणे पंचगव्याच्छुद्धिः ।

।३। अजेन यष्टव्यमिति । अजच्छागस्तेन यागः कर्तव्यः । नान्यो यज्ञार्हः पशुरिति स्थितिः । देवानां सिद्धांत इत्यर्थः ।३। ऋषय.। बीजैर्यज्ञे. महॅथ ।४। ऋषयः स्वसिद्धांतं दर्शयति । बीजैरिति । अजेन यष्टव्यमिति या श्रुतिर्बीजपरा । तत्राजसंज्ञाति बीजानि भूमौ क्षिप्यंत इत्यजसंज्ञानि भवंति । तं भागं बीजमयं भागमित्यर्थः । नैष धर्मः स. पशुः ।५। भीष्म ३. । तेषां संव. वाचसुः ।६। अंतरिक्ष. क्षगें ।७। ऊचुर्द्विजा. प्रियः ।८। कथंस्विद. वसु. ।९। एवं ते संविदं कृत्वा. ५ मंतिकात् ।९। संविदं प्रतिज्ञा ।९। भो राजन्. वान्मतः ।१०। ॐषधीः ॐषधीभिः । ॐषधिभिर्वैर्धान्यैरित्यर्थः ।१०। सतां कृतां-तमाः ।११। कस्य वा कः परः काम इत्यत्र कस्य काम इत्यत्र कस्य कामः सिद्धांत इत्यर्थः । कस्य वा को मतः पक्ष इति पाठांतरं ।११। ऋषयः धान्यैर्यष्ट—त्वद्स्व नः ।१२। भीष्मः । देवानां तुम—स्तदा ।१३। कुपितास्ते ततः स वादिनं ।१४। सुरपक्षे—गतिः ।१५। आत्मछायाभिस्तदा ।१६। प्रवक्ष्यसि पातालमिति शेषः ।१६। अधो वै १० ज्ञया ।१७। देवास्तु—स्यतत् ।१८। अनेनाकसः ।१९। सहितैर्नो दिवौकसः । भो अस्माभिः दिवौकस इति संबोधनं ।१९। इतिबुध्या—रंसदा ।२०। ब्रह्मण्य—क्षणं । २१ । ब्रह्मण्यदैवतं ब्राह्मणहितानांपतिं ।२१। मानना. तम ।२३। यतस्वं. तम ।२३। यावत्वं. माप्स्यसि ।२४। यज्ञेषु. शत ।२५। वाजश्च मे प्रसवश्च म इत्यादिना अग्निचित्या होतव्या संतता घृताहुतिर्वसोर्धारा अस्महेतुध्यानात् । अस्मानुग्रहात् ।२५। नक्षत्पि. नच ।२६। सदेवौ. कसः ।२७। गताःस्व. भारत ।२८। १५ जप्यंज. दय ।२९। वसुर्विवणतस्त द्व्यलीकस्य फलात् । गुगुरोर्ब्राह्मणस्य व्यलीकस्यस्याप्रियकारणस्य फलाद्भूमेर्विवरण इत्यर्थः । नारायणमुखोद्गतं पंचरात्रे भगवता प्रोक्तं द्वादशाभ्यामित्यर्थः । पंचकालान् । संध्यासंगदात् ।२९। अजयद्धरिं. हरिः ।३०। अनन्यं त्तमं ।३१। द्विजोत्तमंपक्षीद्रं ।३१। गतत्प्रतं. न्मम ।३१। संम्राट् । त. उं ।३३। मानिता. ज्ञया ।३४। अधश्च. वान् ३५ विवेश. सुतः ।३६। उत्पपा. पुमः ।३७। सशरी. ज्ञया ।३८। प्राप्ता. श्वरः ।३९। ततः शा. २० पच ।४०। भीष्म । एतत्ते नृपिः ।४१। ततेसर्वं. नृप ॥ इति शांतौ नारायणीये । ते भूता मानवा इति । ते मानवाः सप्तद्वीपवासिनो यथाभूतास्तथैतत्तेसर्वमाख्यातमित्यर्थः । इति मोक्षधर्मे ।४२।

अव्यपरार्थं गायत्रीजपकर्तॄणां प्रायश्चित्तमाह **ब्रह्मांडपुराणे**

"परार्थं शृणु राजेंद्र गायत्रीजपकृन्नरः । मोहार्थं धनलोभार्थं स वै पाषंडतां व्रजेत्"॥

**गारुडपुराणे** २५

"ब्राह्मणो धनलोभेन परार्थं वेदमातरं । जप्त्वा नरकमाप्नोति तं कदा नालभेद्बुधः ।

**कूर्मपुराणे**

"वेदमाता च गायत्री जपतां पापनाशनी । परार्थं नात्यजेद्यस्तु स नरो मातृघातकः ॥"

**लिंगपुराणे**

"पादपूर्णं जपेद्यस्तु गायत्री शुद्धमानसः । स वै नारायणः साक्षाद्द्विबाहुरिति विश्रुतिः ॥" ३०

**महाभारते**

"वेदमाता तु गायत्री लोकमाता च जाह्नवी । तयोर्यदि जपो भक्त्या नित्यं सेवेत बुद्धिमान् ॥

"तयोरेकां परित्यज्य परार्थं जनवल्लभ । स दिवाकीर्तितुल्यं स्यान्मृत्वा नरकमश्नुते ।"

" तदंते भुवमासाद्य पादलंबादिबांधवान् । तस्य निष्कृतिरस्यैव दृष्ट्वा मुनिपरायणैः ॥
"दशकृज्जपतो देवीं परार्थे कृच्छ्रमीरितं । शतं परार्थे जपतः पराकं परिकीर्तितं ॥
" सहस्रसंख्ययान्यार्थे शुध्यर्थं चांद्रमाचरेत् । अयुतं नियुतं वापि परार्थे धनलोभतः ॥
" जपतस्तस्य कर्माणि सद्यः शीर्यंति देहतः । तस्योपनयनं भूयश्चांद्रायणचतुष्टयम् ॥
५ " औपासनाग्निं संत्यज्य गायत्रीदानमेव च । केशानां वपनं कृत्वा पंचगव्यं ततः परम् ॥
" परार्थे यावती संख्या गायत्री प्रणवात्मिका । पुनः स्वार्थे जपेत्पश्चात्ततः शुद्धिमवाप्यते ॥
" एवं कृत्वा द्विजः शुद्ध्येदन्यथा जलकाकवत् । तस्य जन्म वृथा लोके नामधारणमात्रकम् ॥"

मि. पृ. ३१७, न्यूनतां परिहरति । **निमित्तेति । परीति** । मननेति शेषः । सचेत्थं
"ब्राह्मणस्य कृतः कृत्यां घ्रातिरघ्रेयमद्ययोः । जैम्ह्यं पुंसि च मैथुन्यं जातिभ्रंशकरं स्मृतम् ॥
१० "विसश्वौष्टमगे भानो मजाविकवधस्तथा । संकरीकरणं ज्ञेयं मीनाहिमहिषस्य च ॥
"निंदितेभ्यो धनादीनां वाणिज्यशूद्रश्वेतसेवनम् । अपात्रीकरणं ज्ञेयमसभ्यस्य च भाषणम्॥
"क्रिमिकीटवयोहत्यामद्यानुगतभोजनम् । फलैधः कुसुमस्तेयमधैर्यं च मलावहम् ॥" इति

**वृद्धविष्णुः** । अतोऽन्यत्प्रकीर्णकमिति महार्णवेतकः । द्विपळावहांतादन्यत्रुजःकृत्या-रोमोत्पाटना । अघ्रेयं पूतिगंधि । **योगीश्वरस्य** तु एतेषामपि अस्मत्प्रतिग्रहादिवच्चकारेण संग्रहोऽभि-
१५ मत इत्युपपातकत्वमेवैषारुपिविशेषसंख्यास्तु तत्रोक्ताः प्रायश्चित्तविशेषार्थे । अत एव हृद्गत-मित्यादिपंचविधमिति च तत्रादिना एतेषामपि संग्रहः । **प्रमापणं** । मारणम् ॥ २९० ॥ २९१ ॥

## याज्ञवल्कीये २९२ श्लोकः ।

मि. पृ. ३१८. संगतिमाह । **एवमिति** विप्रमित्युभयान्वयीत्याह । **विप्रमित्यादि** ॥२९२॥

## याज्ञवल्कीये २९३ श्लोकः ।

२० इदं चानुक्तप्रायश्चित्तं विशेषविषयं । उक्तप्रायश्चित्तविशेषविषये आह । **श्रौतेष्विति** ।

मि. पृ. ३१९ **महायज्ञाः** पंचमहायज्ञाः । इदं च विषयानुपादानादनापद्यकामकृते द्वि-गुणम् । आपद्य कामतः । कृच्छ्रपादः कामतः कृच्छ्रार्धमेव । इदमपि सकृत्वप्ये(?) । अभ्यासे तु कल्प्यं वहनिति उपपादितत्वमयोः समुच्चयः । **प्रत्यापत्तिः** पुनरागमनम् । **मार्गता**मिति

मि. पृ. ३२०. षष्ठ्यन्तम् । **धनुरिति** । क्रमेण धनुर्दंडौ दक्षिणा । **तल्प** भार्या । **व्यव-**
२५ **स्थेति** । कामत इदं । **दंतानामिति** । दृष्टान्तीमुत्पाटयेदित्यर्थः । **अभ्यासेति** । अनभ्यासे त्वर्धं । **प्रत्यंतो** म्लेच्छदेशः । **एतदेव हारीतोक्तत्रिरात्रमेव** । एवमग्रेपि प्रधानं शुद्धिः ॥ २९३ ॥

## याज्ञवल्कीये २९४ श्लोकः ।

मि. पृ. ३२१ शक्तिविषये आह । **तथेत्यादि** । पापविषये आह । **तथा पापं चेति** ।
३० तुर्यपादार्थमाह । **यत्र चेत्यादि । क्रंदितेति** । 'झंभितेति' पाठान्तरं । **नोदेति** । अयं निषेधः सप्तमासादूर्ध्वम् ।

"वपनं मैथुनं तीर्थे वर्जयेद्गर्भिणीपतिः । श्राद्धं च सप्तमान्मासादूर्ध्वं चान्यत्र वेदविदि"त्युक्तेः ॥

श्राद्धं श्राद्धभोजनम्। **तत्रापीति**। तच्च प्राणायामशतमित्यादिना वक्ष्यमाण एवमंगकल्पनया तत्कल्पनामुक्त्वा तस्यापि साक्षात्कल्पनामाह । **न चेति** । परमतात्पर्यं मुनेराह । **प्रायश्चीति** ॥ २९४ ॥

## याज्ञवल्कीये २९५ श्लोकः।

मि. पृ. ३२२. मंगलार्थमुपसंहरति। **एवमिति**। मन्वनुरोधेनाह । **अथवेति**। **उपासीरन्** ज्ञातयः। न्यूनतां परिहरति। **एतच्चेति**। अत्र मानं **गौतम**माह। **तस्येत्यादि**। ५
अस्यार्थः। यः पतितत्वादिहेतुना त्याज्यत्वेनोक्तस्तस्य विद्यागुरूनाचार्यादीन्योनिसंबंधान्मातामहमातुलादींश्च पुत्रादयः **संनिपात्य** मेलयित्वा तेभ्यश्च तत्कारणमाहृयतैरनुमताः पुत्रादयः सपिंडाः **सर्वाणि** पिंडोदकश्राद्धादीनि प्रेतकार्याणि जीवंतमेव समुद्दिश्य कृत्वा पात्रं चास्य त्यागस्य कृते विपर्ययेयुः। कथमित्यपेक्षायामाह। **दास इत्यादि**। तयोर्मध्ये एकः **अवकरा**- १०
त्पुंरीषादिस्थानादशुचिपात्रमानीय दास्यानीतोदकघटात्तत्पात्रमुदकेन पूरयति तदनंतरं दक्षिणामुखो देवदत्तमनुदकं करोमीन्यभिधाय पदा **विपर्यस्य तं** त्याज्यं सपिंडाः पुत्रादयः। **प्राचीनावीतिनो मुक्तशिखा** अन्वालंभेरन् विद्यागुरवो योनिसंबद्धा वीक्षेरन् । ततः स्नात्वा ग्रामं प्रविशति । अत ऊर्ध्वं तेनाज्ञानात्संभाष्य सावित्रीं जपन्नहोरात्रं तिष्ठेत्। ज्ञानात्तु त्रिरात्रं जपन् तिष्ठेदिति।
विशेषमाह। **अयं चेति**। उत्तरार्धार्थमाह। **ततस्तमिति** । ततः घटस्फोटानंतरं। १५
**यात्रामिति**। लोकव्यवहारमित्यर्थः। उक्तशेष**गौतम**माहात **ऊर्ध्वमिति** ॥ २९५ ॥

## याज्ञवल्कीये २९६ श्लोकः।

**निनयेयुः** शुभे जलाशये प्रक्षिपयुः। न्यूनतां निराचष्टे। **एतच्चेति**। अपामिति शेषषष्ठी।
मि. पृ. ३२३ **शातकुंभं** कांचनं। उत्तरार्धार्थमाह। **तत इति**। सर्वश इत्यस्यार्थः **सर्वैति**।
**वसिष्ठः**। तथाभिषिक्तस्य प्रत्युद्धारः पुत्रजन्मना व्याख्यात इति। **अभिषिक्तस्य** पूर्वोक्तरीत्या २०
कृतस्नानस्य प्रत्युद्धारो भवति। स च पुत्रजन्मना व्याख्यातः। उक्तरीत्या प्रत्युद्धारानंतरं जातःकर्मादिसंस्कारैः संस्कुर्यादित्यर्थः ॥ २८६ ॥

## याज्ञवल्कीये २९७ श्लोकः।

**पतितस्येति**। प्रसंगादिति भावः। **आदिना** कृतप्रायश्चित्तानां परिग्रहः। अत एवाग्रे व्याख्याने एतत्पाठः क्वचित् दृश्यते ॥ २८७ ॥ २५

## याज्ञवल्कीये २९८ श्लोकः।

**नीचो** हीनवर्णः शूद्र इत्याह। **हीनेति**। **न पुनरिति**। तथा च **त्रीणीत्य**प्युपलक्षणं बोध्यम् । **तेन वसिष्ठेन**। एवमग्रेऽपि। **जुंगितः** प्रतिलोमतः। एवं सत्यविरोधं प्राह। **अतश्चेति** ॥ २९८ ॥

## याज्ञवल्कीये २९९ श्लोकः। ३०

**व्यापारो** हिंसा । तात्पर्यमाहा**तश्चेति** । तथा च शरणागतहंतृबालहंतृस्त्रीहंतृकृतघ्नाश्च सर्वथा सर्वमते अव्यवहार्या एव। प्रायश्चित्तं तु तेषां परलोकायैवेति बोध्यम्। **वाचस्पतिमिश्रास्तु**

**भामत्यां** महापातकिनः कामतोऽव्यवहार्याः । वचनात्प्रायश्चित्तं तु परलोकशुद्धिमात्रफलक-
मित्याहुः ॥ २९९ ॥

## याज्ञवल्कीये ३०० श्लोकः ।

**यवसं** तृणं । तात्पर्यमाह । **यदीति** ॥ ३०० ॥

५

## याज्ञवल्कीये ३०१ श्लोकः ।

### ( पूर्वार्धः । )

**तत्वं** । तथामिति पाठांतरं । पापनिष्कृति कृत्यः । **धर्मः** स्मृतिः । **तेनैव** **मनुनैव** ।
मि. पृ. ३२५ अत्र धर्मोपदेशविषये व्यवस्थामाह । **तत्र चेति** ।

### ( उत्तरार्धः । )

१० स्वयं संगतिमाह । **व्याख्यायेति** । कर्त्रितिविशेषणफलमाह । **अतश्चेति** । तथा च **हारीतः** "रहस्ये रहस्यं प्रकाशे प्रकाशमिति" । **तत्र** व्रताचरणाविषये । **अविभाव्य** अविचार्य । **एकांततः** । नियमतः । अन्येषामपि तत्ज्ञानं नांगमित्याह । **इतरेषामिति** । स्त्रीशूद्रभिन्नानां त्रैवर्णिकानामित्यर्थः । **योगं** विनियोगं । एतेन तेषामुच्चारणे **आश्वलायनैः** क्रियमाणं निरस्तं ।
मि. पृ. ३२६ **अत्रापि** । रहस्यव्रताचरणेऽपि ॥ ३०१ ॥

१५

## याज्ञवल्कीये ३०२ श्लोकः ।

तद्व्रते एव श्रांतं इत्यन्वयः । **उदकांते** तत्समीपे स्थंडिलं च स्थित्यर्थः । इतरत्र श्रोत्रियादि-
भिन्ने अष्टाधिकसहस्राहुतीः । **युक्तः** । समाहितः । **अभ्युपयन्** स्नानं कुर्वत् ॥ ३०२ ॥

## याज्ञवल्कीये ३०३ श्लोकः ।

**उपसंहरन्** । **इदं चेति** । प्राणांतिकप्रायश्चित्तनिमित्ते ब्राह्मणवधे इदमिति **त्वपरार्के** ।
२० ॥ २३३ ॥

## याज्ञवल्कीये ३०४ श्लोकः ।

### ( पूर्वार्धः । )

मि. पृ. ३२७ मासं षोडशेत्यनुवृत्तेराह । **मासमिति** । अप इत्यस्य व्याख्याप **न इति** ।
प्रतित्यृचमित्यस्य प्रतीतिमाह । त्रमित्यस्य **महित्रीति** । शुद्धवत्यस्यैतान्विंद्रमिति पावमान्यः
२५ स्वादिष्ठया मदिष्ठयेत्याद्याः । अनुवृत्तेराह । **त्रिरात्रेण इति** ।

### ( उत्तरार्धः । )

तदनंतरमाह । **जलेति** । अत्रापि कर्मणेसंगौर्येया ।(?) इदमकामतः । अत्रैवाभ्यासे द्विगुणं
कल्प्यम् । कामतस्तु मंत्रैरिति **मनूक्तं** ज्ञेयम् । अतः कामतोऽभ्यासे आहावृत्तौ **त्विति** । ॥३०४॥

## याज्ञवल्कीये ३०५ श्लोकः ।

३० **अनुमीयते** । विधीयते इति पाठांतरं । होमेऽपि चत्वारिंशत्संख्या बोध्या । उत्तरार्धार्थ-
मि. पृ. ३२८ **माहेभिश्चेति** । मासं षोडशेत्यनुवृत्तेराह । **मासमिति** । अथ मूलानुक्तं
संसर्गिप्रायश्चित्तमाह । **माहेति** ॥ ३८५ ॥

## याज्ञवल्कीये ३०६ श्लोकः ।

पूर्वपादानुरोधेनादावुत्तरार्धार्थमाह । **गोवधेति** । जाते समूहः बहुत्ववयवाभिप्रायं अनादिष्टपदमाह । **अनेति** । जाता एकत्वं । तृतीयपादार्थमाह । **तथेति** । अनेनानर्थक्यं । परिहृतं योय-
मि. पृ. ३२९ रूपा आह । **तत्र चेति** ॥ ३०६ ॥

## याज्ञवल्कीये ३०७ श्लोकः ।

५

उत्तमत्वमविवक्षितमित्याह । **द्विज इति** । **ब्रह्म** व्याहृतयः ॐभूरित्यादयः । ब्रह्मणा ओंकारेण । व्याहृतिभिश्च । **उरोगं** हृदयंगमं ॥ ३०७ ॥

## याज्ञवल्कीये ३०८ श्लोकः ।

चेन वाचिकं तुर्यपादार्थमाह । **तथेति** ॥ ३०८॥

## याज्ञवल्कीये ३०९ श्लोकः ।

१०

मि. पृ. ३३० न्यूनतां परिहरति । **चशब्द इति** । **दुर्गा** जातवेदस इति । **मधुऋचः** मधु वाता इति ॥ ३०९ ॥

## याज्ञवल्कीये ३१०।३११ श्लोकौ ।

मि. पृ. ३३१ व्यवस्थामाह । **तत्रेति** । तिलैरित्यस्याग्रेऽपि संबंधादाह । **तथेति** । **क्षौद्रं** मधु । **इतरैः** श्वेतैः ॥ ३१० ॥ ३११ ॥

१५

## याज्ञवल्कीये ३१२ श्लोकः ।

व्यवस्थामाह । **अतश्चेति** । उपसंहरति । **एतदिति** । अथ रहस्यसाधारणप्रायश्चित्तं **मनुराह** ( अ. ११ श्लो. २४५,२४६,२४८ )

"वेदाभ्यासोऽन्वहं शक्त्या महायज्ञक्रियाक्षमा । नाशयत्याशु पापानि महापातकजान्यपि ॥
"यथैधान्तेजसा वह्निः प्राप्तान्निर्दहति क्षणात् । तथाऽज्ञानकृतं पापं कृत्स्नं दहति वेदवित् ॥ २०
"सव्याहृतिकप्रणवाः प्राणायामस्तु षोडश । अपि भ्रूणहन्तमासान्तात् पुनंत्यहरहः कृता ॥"इति ।

**वसिष्ठः**

"यद्यकार्यं कृतं साग्रं शतं वेदश्च धार्यते । सर्वं तत्तस्य वेदाग्निर्दहत्यग्निरिवेंधनम् ॥"

**यमः**

"सहस्रपरमां देवीं शतमध्यां दशावराम् । गायत्रीं प्रजपेन्नित्यं महापातकनाशिनीम् ॥ २५
"ऋग्वेदमभ्यसेद्यस्तु यजुःसाममथापि च । सूक्तानि सुरहस्यानि अथर्वांगिरसस्तथा ॥
"ब्राह्मणानि च कल्पांश्च षडंगानि तथैव च । इतिहासपुराणानि देवतास्तवनानि च ॥
"पूत्पूपैः प्रमुच्येत धर्मस्थानैस्तथापरैरिति" । **कूर्मपुराणे**
"जपस्तपस्तीर्थसेवा देवब्राह्मणपूजनम् । ग्रहणादिषु कालेषु महापातकशोधनम् ॥ ३०
"पुण्यक्षेत्राभिगमनं महापातकनाशनम् । देवताभ्यर्चनं दानमशेषाघविनाशनम् ॥
"अमावास्यां तिथिं प्राप्य यः समाराधयेद्भवम् । ब्राह्मणान्भोजयित्वा त सर्वपापैः प्रमुच्यते ॥

"कृष्णाष्टम्यां महादेवं तथा कृष्णचतुर्दशीम् । संपूज्य ब्राह्मणमुखे सर्वपापैः प्रमुच्यते ॥
"त्रयोदश्यां तथा रात्रौ सोपहारं त्रिलोचनम् । दृष्ट्वेशं प्रथमे यामे मुच्यते सर्वपातकैः ॥
"एकादश्यां निराहारः समभ्यर्च्य जनार्दनम् । द्वादश्यां शुक्लपक्षस्य सर्वपापैः प्रमुच्यते ॥
"उपोषितश्चतुर्दश्यां कृष्णपक्षे समाहितः । यमाय धर्मराजाय मृत्यवे याचकाय च ॥
५ "वैवस्वताय कालाय सर्वभूतक्षयाय च । प्रत्येकं तिलसंयुक्तान् दद्यात्सप्तोदकांजलीन् ॥
"स्नात्वा न धातुपूर्वाह्णे मुच्यते सर्वपातकैः" । तथा तत्रैवाध्यायांतरे
"अस्मिन्कलियुगे घोरे लोकाः पापानुवर्तिनः । भविष्यंति महाबाहो वर्णाश्रमविवर्जिताः ॥
"नान्यत्पश्यामि जंतूनां मुक्त्वा वाराणसीं पुरीम् । सर्वपापप्रशमनं प्रायश्चित्तं कलौ युगे ॥" इति
॥ ३१२ ॥

## १० याज्ञवल्कीये ३१३।३१४ श्लोकौ ।

मि. पृ. ३३२ विरोधं परिहरति । **यत्पुनरिति** ॥ ३१३ ॥ ३१४ ॥

## याज्ञवल्कीये ३१५ श्लोकः ।

**तत्र** । व्रतानां मध्ये । गोमूत्रमिति एतेन कुशोदकं तु गोमतीरं दधिमूत्रं शकृत्घृतमित्य**परार्क**-
पाठः प्रत्युक्तः । स्मृतिषु तथैव क्रमदर्शनात् । साहचर्यात्क्षीरादि गोरेव । एवं स्त्रीव्यक्ते एव गोमूत्रादि ।
१५ संपूज्य मिश्रीकृत्य । **संयवनं** मिश्रीकरणम् । विपरीतमाह । **यदा पुनरिति** । शंवतीः शनो-
मि. पृ. ३३३ देवीरिति । **ब्रह्मकूर्चा** इति ब्रह्मकूर्चाख्यः पूर्वदिनानुष्ठीयमानः संप्रक्रांत
इत्यर्थः । एतत्सूचनार्थमेवोपवासपदं । एवं च तस्य प्राथम्यं युक्तं इष्टं च **ब्रह्मपुराणोक्त**सप्ताह-
साध्यसांतपने तस्य प्राथम्यं । एतेन मलस्यैव संज्ञांतरमिति **मदनायुक्त**मपास्तम् । **मरीचिरपि**
"देवताः संप्रवक्ष्यामि आनुपूर्व्येण यस्यणा (?) । वरुणो देवता मूत्रे गोमये हंसवाहनः ॥
२० "सोमः क्षीरे दध्नि वायुर्घृते रविरुदाहृतः ।
"गोमूत्रं ताम्रवर्णायाः श्वेतायास्त्वथ गोमयम् । पयः कांचनवर्णाया मालायास्त्वथ वा दधिः ॥
"घृतं वै कृष्णवर्णाया विभक्तावर्णगोचरम् । उदकं सर्ववर्णं तु तस्य वर्णा न गृह्यते ॥
"गोमूत्रस्य पलं ग्राह्यमंगुष्ठार्द्धं तु गोमयम् । क्षीरस्य त्रिपलं ग्राह्यं पलमेकं कुशोदकम् ॥
"आपो हि ष्ठेति चालोड्य उद्यम्य प्रणवेन तु । अग्नये स्वाहा सोमायेंद्रायेदं विष्णुर्मानस्तोके ।
२५ "गायत्र्या प्रजापतेन त्वदेतानीत्यग्नौ जुहुयात् ।

"नदीप्रस्रवणे तीरे रहस्ये निर्ऋते तथा । शुक्लवासाः पवित्रात्मा अहोरात्रोषितः पिबेत् ॥
"पालाशेन च पत्रेण बिल्वपत्रेण वा पिबेत् । तृतीयं ताम्रपात्रं वा ब्रह्मपात्राणि तानि वै ॥
"प्रतिमासं पौर्णमास्याममावास्यां च वा पिबेत् ।

ब्रह्महा परगामी च ये चान्येऽस्थिगता मलाः ॥ ब्रह्मकूर्चो हरेत्सर्वं मंथाग्निस्तृणमेव तु ॥"
३० इति । विशेषांतरमाह । **यदा त्विति** । मौलमेवोभयात्मकं मिश्रितपंचगव्यमिति बहुव्रीहिः ।
एवं च षडहसाध्यमेतत् । **जावेति** । **ब्रह्मपुराणे** त्वन्यथा क्रमसप्ताहसाध्ये सांतपनमुक्तम्
"प्रथमेऽहनि नाश्नीयात् गोमूत्राशी ततः पुनः । तृतीये गोमयाशी स्यात् चतुर्थे क्षीरपो भवेत् ॥

"पंचमे दधि भुंजीत घृतं षष्ठे भवेदथ। कुशोदकं सप्तमे च कृच्छ्रे सांतपने विधिरिति ॥"
**यमेन** तु दिनत्रयसाध्यं सांतपनमुक्तं गोमूत्रम्
"एकरात्रोपवासश्च श्वपाकमपि शोधयेत्। कपिलायां तु दुग्धायां धारोष्णं चैव यः पिबेत् ॥
"एवं सांतपनः कृच्छ्रः सर्वपापप्रणाशनः ॥" इति ॥ ३१५ ॥

## याज्ञवल्कीये ३१६ श्लोकः। ५

अनन्वितत्वादाह। **सप्तेति**। षष्ठ्यां पूर्वोक्तगोमूत्रादिना । **एतानि**। गोमूत्रादि कुशोदकांतानि षड्द्रव्याणि। **एकेनो**पवासनिवृत्तिः। एवं च द्वादशाहसाध्योऽयं अप्यैतत्प्रत्याम्नायाः तत्र सप्ताहसाध्यसांतपनस्य सार्धप्राजापत्यंत्यस्थाने विहितत्वादेका धेनु निष्कार्धं च देयम् । **षट्त्रिंशन्मतस्य** वक्ष्यमाणत्वात् दिनद्वयसाध्ये सर्वत्र निष्कार्धं दिनत्रयसाध्येऽपि षट्दिनसाध्ये यतिसांतपने धेनुः। सप्ताहसाध्ये महासांतपनेऽपि पूर्ववत् पंचदशदिनसाध्ये धेनुद्वयम्। निष्कार्धं १० च। एकविंशतिदिनसाध्ये सार्धनिष्कं धेनुत्रयं द्वादशदिनसाध्येऽतिसांतपने धेनुद्वयम् । एवं गायत्रीजपादावपि। तत्र धेनुत्रयम्। द्वादशदिनसाध्येति सांतपने धेनुद्वयम्। एवं गायत्रीजपादावपि धेनुस्थाने गायत्र्यायुते निष्कार्धस्थाने पंचसाहस्रीत्यादि बोध्यम् । पंचाहेति पलाशबिल्वपद्मानां पर्णान्यौदुंबरेऽस्मिन् ।

"अश्वत्थस्य च पर्णानि अशोदेकैकशस्तथा। अहोरात्रोपवासश्च पर्णकृच्छ्रः प्रकीर्तितः ॥" इति १५
**जाबालेन** षट्दिनसाध्ये उक्तः । "कुशपलाशोदुंबरपद्मशंखपुष्पीवटब्रह्मसुवर्चलापत्रैः क्वथितस्यांभसः प्रत्यह्नपानं पर्णकृच्छ्र" इति **विष्णुना** (अ.२४ सू.२३) सप्ताहसाध्य उक्तः । पद्मबिल्वपलाशोदुंबरकुशोदकान्येकैकमभ्यस्तानि ॥ ३१६ ॥

## याज्ञवल्कीये ३१७ श्लोकः।

मि. पृ. ३३४ **पर्णकृच्छ्र इति शंखलिखितौ**। पंचदिनसाध्य उक्तः। "एकैकं त्र्यहमश्नीयात्पर्णकृच्छ्रो विधीयत" इति **यमेनाभ्यासे** विशेषोक्तेः । **यम इति** । समस्तान्येतानि २० त्रिरात्रेण प्रयुक्तानि। **पर्णकूर्च इति**। तदग्रिम**शंखलिखितावपि**। **फलैरिति**। शरीरयात्रामात्रोपयुक्तं च तद्भक्षणं। अत्र सर्वव्रतसाधारणेतिकर्तव्यतापि संध्याननुकानि फलानीत्यत आह। **श्रीति**। पत्रादीनि। श्रीवृक्षादेरेव तत्कृच्छ्रः **पुष्पकृच्छ्रः** ॥ ३१७ ॥

## याज्ञवल्कीये ३१८ श्लोकः। २५

**मनुनेति**। **पराशरेण** त्रिदिनसाध्योऽपि तप्तकृच्छ्र उक्तः
"षट्पलं तु पिबेदंभस्त्रिपलं तु पयः पिबेत्। पलमेकं पिबेत्सर्पिस्तदा कृच्छ्रं विधीयते॥" इति।
**विष्णुना** तु दशादिनसाध्य उक्तः
"त्र्यहमुष्णाः पिबेदापस्त्र्यहमुष्णं पयः पिबेत्। त्र्यहमुष्णं घृतं पीत्वा नाश्नीयादेष तप्तकृच्छ्रः ॥"
एष एव शीतः। **शीतकृच्छ्र** इति **यमेति**। **पराशरोऽप्येवम्**। अयमपि द्वादशदिनसाध्यः। ३०
अथान्येऽपि कृच्छ्राः। **शंखः**
"बिसान्युदकसिद्धानि मासमश्नीत संयतः। सक्तून्वा सोदकान्मासं कृच्छ्रो वारुण उच्यते ॥'

"बिल्वैरामलकैर्वाऽपि पद्माक्षैरथ वा शुभैः । मासेन लोके श्रीकृच्छ्रः कथ्यते द्विजसत्तमैः ॥
"गोपुरीषाद्यवान्नं च मासं नित्यं समाहितः । व्रतं तु पावकं कुर्यात्सर्वपापापनुत्तये ॥"

**विष्णुः** ( २४।१४।१५) "उदकादिसक्तूनां मासाभ्यवहरणेनोदककृच्छ्रः । बिसभ्यवहरणे शीतकृच्छ्रः । उदयकादाति । उदकप्रधानानां सक्तूनां । **जाबालः**

५ "अनश्नञ्जलमध्यस्थस्त्वहोरात्रं जपन् बुधः । संवत्सरकृतं पापं जलकृच्छ्रो व्यपोहति ॥"
जपो वारुणसूक्तानाम् । **योगियाज्ञवल्क्यः** ( प्रा. ३१२ ) ।
"वायुभक्षो दिवातिष्ठेद्रात्रिं नीत्वाऽप्सु सूर्यदृक् । सहस्रमष्टाधिकां जप्त्वा गायत्रीं जलसंज्ञकः॥"
द्वितीयदिने सूर्य दृष्ट्वा अष्टोत्तरसहस्रगायत्रीजपं कृत्वा पारणं कुर्यादित्यर्थः । अयं जलकृच्छ्रः । **तथा** "मासोपवासो विज्ञेयो दिनात्रिंशदुपोषणात् ।"
१० तथा गोमूत्रकृच्छ्रः ।
"आतृप्तेश्चारयित्वा गां गोधूमान् यवमिश्रितान् । तान्गोमयोच्छ्रान्संगृह्येत्पचेद्गोमूत्रपावकमिति॥"
वारुणकृच्छ्रं स्त्रीकृच्छ्रं च **यम** आह
"ब्रह्मचारी जितक्रोधो मासेऽप्युदकसक्तुकान् । पिबेच्च अर्कद्वारः कृच्छ्रं वारुणमुच्यते ॥
"त्र्यहं पिबेत्तु गोमूत्रं त्र्यहं वै गोमयं पिबेत् । त्र्यहं वै यावकेनैव स्त्रीकृच्छ्रंस्त्वेतदुच्यते ॥" इति
१५ "अथैतत्प्रत्याम्नाया तत्र पंचाहसाध्ये सपादनिष्कैकधेनुः मासिकश्रीकृच्छ्रादौ सार्धनिष्कं धेनुद्वयं चतुर्दिनसाध्यतप्तकृच्छ्रे एका धेनुर्त्र्यहसाध्ये निष्कार्धं द्वादशाहसाध्ये धेनुत्रयमिति" **षट्त्रिंशन्मते । धेनुद्वयमित्यपरार्कभवदेवौ** । पादोनधेनुचतुष्टयमिति शूलपाणिः । एवं गायत्रीजपादावपि बोध्यम् ॥ ३१८ ॥

## याज्ञवल्कीये ३१९ श्लोकः ।

२० मि. पृ. ३३५. उक्तमुपपादयति । **अत्र चेति** । रात्रीस्ता एव । **रात्रौ वेति । दिवैवेति । केचिद्विशेषमाहाऽयाचीति** । विशेषमाह **येति** । अत्र पक्षे आह । **यदा त्विति । तेनैव आपस्तंबेनैव । मूलमग्रेऽपि । मूलमतेनाऽहार्धेति** । अत्र यतः पादोनकृच्छ्रकल्पना चिंत्या । अनेन पक्षद्वयेऽपि प्राजापत्यस्यैव कृच्छ्रसंज्ञाऽपि सूचितेति तयोः पर्यायत्वं न तु मूलमताप षोडशदिनात्मकः कृच्छ्रः । एवं च निरुपपदः कृच्छ्रशब्दः प्राजापत्यपर इति बोध्यम् । एतेन कृच्छ्रलक्षणं
२५ नोक्तमित्यपास्तं ॥ ३१९ ॥

## याज्ञवल्कीये ३२० श्लोकः ।

तदेतत् ध्वनयन्नाह । **प्राजापत्यकृच्छ्रमिति । तत्र** तेषां मध्ये । **पराकमुपवासः** । संज्ञांतरमासिश्विति उक्तपक्षत्रयान्यतमपक्षांगीकारेणाह । **जपादीति । रौरवेति । सोमे** धारयेत्यस्यां दुहान ऊधरित्यस्यां चक्रत्रित्र्यृचत्वेन गीयमाने सामनी यथाक्रमं रौरवयोधीजपाख्ये नित्यं कर्मी
३० विरोधिकालेषु पठेदित्यर्थः । **अन्विति** । त्रिकालं स्नानमित्यर्थः । **मार्जयीतेत्युभयान्वयि** । मार्जनं
मि. पृ. ३३६ च स्नानानंतरमेव । **उदकतर्पणमित्यनेनात्र** एव जले तर्पणं न स्थले इति गम्यते । **तर्पणे** नमेत्यादित्रयोदशमंत्राः । तत्रादावंते चरमः शब्दश्रवणादुभयत्र तत्प्रयोगः ।

उपस्थानं तत्साधनं कार्यकारणयोरभेदादेवमग्रेऽपि तर्पणानंतरमुपस्थानं। तत आज्यहोमः। स च लौकिकाग्निं प्रतिष्ठाप्य एताभ्यो वक्ष्यमाणाभ्यः। ते नव मंत्राः स्वाहाकारांताः। नन्वस्य बहुक्रियत्वात्कथमुक्तार्थे संप्रतिपत्तिरत आहाऽतश्चेति। क्षिप्रेति। विशेषणाच्चेत्यर्थः। उपसंहरति। एवमिति। एतत्प्रत्याम्नायाः अग्रे स्पष्टाः। अयमित्यस्य व्याख्यैतदिति। तद्व्याख्यैकेति। पाणिः। प्रसृतिः। अत्र मौलप्रत्याम्नायो धेनुत्रयमिति ॥ ३२० ॥ ५

## याज्ञवल्कीये ३२१।३२२ श्लोकौ।

**चतुर्विंशतिमते**। शेषमाह। **वर्तनामिति**। [illegible]। **पयो**ऽत्र जलम्। "चरेत् कृच्छ्रातिकृच्छ्रं तु पिबेत्तोयं तु शांतत्वमिति" **ब्रह्मपुराणात्**। तच्च प्रातःसायं मध्याह्नेषु ग्राह्यम्। एकविंशतिरात्रेषु कालेष्वेतेषु साधयेत् इति तच्छेषात्। **यमेन** चतुर्विंशतिदिनसाध्यमुक्तम्।

"एकैकं पिंडमश्नीयात् त्र्यहं कल्यं त्र्यहं निशि। अयाचितं त्र्यहं पिंडं वायुभक्षस्त्र्यहं परम् ॥ १०

"अतिकृच्छ्रं चरेदेतत् पवित्रं कायशोधनम्। चतुर्विंशतिरात्रं तु नियतात्मा जितेन्द्रियः ॥

"कृच्छ्रातिकृच्छ्रं कुर्वीत एकस्थाने द्विजोत्तमः।" इति **कल्पे** प्रातः। एकभक्ते यावत्। एकस्थाने इति एकदैवोक्तातिकृच्छ्रद्वयेनैकः कृच्छ्रातिकृच्छ्रो भवतीत्यर्थः। अनुवृत्तेराह। **द्वादशेति**। **यमेन** ग्रासविधानादत्रापि पर्णपुटादिना तत्परिमाणं बोध्यम्। **व्यवस्थेति**। एवमग्रेऽपि बोध्यम्। **मूलमते** पयोदुग्धमिति **मदनाद्युक्तं** एकभक्तादिनवदिनेषु यो भोजनकालः तत्रैवोदकेन १५ वर्तनमिति **माधवाद्युक्तं** चापास्तम्। अत एवोपवासदिनत्रये जलग्रहणाय ग्रहणये विप्रतिपत्तिरपि न। अत्र षट्धेनवः प्रत्याम्नायः। पंच त्रयश्च यथायथं परार्कप्रत्याम्नायः। पंचधेनव इति

मि. पृ. ३३७ **शूलपाणिर्द्वे** इत्यपरार्कभूवदेवौ तिस्र इति **षट्त्रिंशन्मतम्**। पिण्याकं तिलये प्रीतिप्रसिद्धं षट्दिनसाध्योऽयं सौम्यकृच्छ्रप्रत्याम्नाय एका धेनुरिति केचित् ॥३२१॥३२२॥

## याज्ञवल्कीये ३२३ श्लोकः। २०

अर्धोचितासौम्यकृच्छ्रघटितत्वेन कृतत्वादाह। **पिण्याकादीनामिति**। त्र्यहं द्वयं। त्र्यहं त्र्यहमिति पाठांतरम्। अष्टदिनसाध्यं तु यत्नात्पुरुषांतरं स्मर्यते

"पिण्याकं च तथा चामं तक्रं चोदकसक्तवः। त्रिरात्रमुपवासश्च तुलापुरुष उच्यते ॥" इति। एषां व्यवस्था प्राग्वत्। अत्र प्रत्याम्नाया यथायथमुक्तरीत्योह्याः। **अत्र हारीतेति**। तथा हि अथातस्त्रिनयनोक्तस्य तुला पुरुषस्य कल्पं व्याख्यास्यामः २५

"अत्राज्यायाजनं कृत्वा मात्रे मूत्रपुरीषके। अप्रतिग्रहमादाय याजयित्वा तु निंदितान् ॥

"विनायकोपसृष्टस्य महाव्याधिहतस्य च। एतत्कृच्छ्रं तुलापुरुषं महापातकनाशनम् ॥

"स्वर्गद्वारमिदं पुण्यं महादेवेन निर्मितम्। आचाममंथपिण्याकं तक्रं चोदकसक्तुकान् ॥

"त्र्यहं त्र्यहं प्रयुंजानो वायुभक्षस्त्र्यहं परम्। वाक्पादवैलरजोभिर्हताहिनिवृतानि च ॥

"आचामस्तानि निर्हंति नवश्राद्धं च सूतकम्। ३०

"तैलस्य दारुणं किंचित् केशकीटं हतं च यत्। प्राश्य मूत्रपुरीषं च ब्रह्महा स्पष्टमेवं च ॥

"पिण्याकं तानि निर्हंति अस्थि भित्वा तु यत् स्थितम्। आचामेषु च ये दोषाः स्नेहदोषाश्च ये क्वचित् ॥

"खरोष्ट्रमुखसंस्पृष्टं मद्यसंस्पृष्टमेव च। तक्रेण तानि निर्हंति पंचायाढावलोकितम् ॥

"कनकाश्च तिला गावो भूमिराच्छादनं स्त्रियः । सर्वं पुनाति धर्मात्मा गूढं चोदकसक्तुभिः ॥

ब्रह्महत्या भ्रूणहत्या सुवर्णस्तेयं सुरापानं गुरुदाराभिगमनं कन्यादूषणं क्लीबाभिगमनं वायुभक्षः पुनाति तत् ।

"गंधोशीरमयौ कार्यौ पुरुषोपलसंमितौ । नदीमृत्तिकपानापि पुरुषौढौ तु कारयेत् ॥

५ "महापशुर्येन शरेण विद्धो यच्चापि पशुमुनयोर्लब्धलक्षं ।

तेनायसीं सुकृतां कारयित्वा प्रादेशमात्रामुभयोक्त्रांतशिक्याम् ॥

"सौवर्णीं राजतीं वाऽपि तुलां देवीं तु कारयेत् । अपि चंदनवृक्षस्य खदिरस्यापि कारयेत् ॥

"तस्यालाभे तुला कार्या यथा वा ह्युपपद्यते "। यः पुरुषः पिंगलो बभ्रुर्हलमुशलचक्रपाणिस्त्वमहं पुरुषं पिंगलं बभ्रुं हलमुशलवज्रपाणिमावाहयिष्यामि सुस्त एहि नाग एहि कृष्णासिन एहि । स्वागतमनुस्वागतं भवते तुलापुरुषाय महादेवाय इदमर्घ्यमिदं पाद्यमिदमाचमनीयमिदमासनं मे प्रसीद गंधमाल्यधूपदीपं प्रतिगृहापापदेनो महारुद्रः सुमना भव ।

अथ तुलामभिमंत्रयेत् । ऋषिः सत्यदेवसत्यं ब्रह्मसत्यं यत्सत्यं तेन सत्येन सत्यवादिनि ।

"देशानां संपदं ब्रूहि कं देशं वर्द्धयिष्यसि । बीजानां संपदं ब्रूहि किं बीजं वर्द्धयिष्यसि ॥

"संज्ञां च संपदं ब्रूहि कं नृपं वर्द्धयिष्यसि । अस्माकं संपदं ब्रूहि किमस्माकं भविष्यसि ॥

५ "यदास्य गुरुमात्मानमसकृत्तुलया धृतम् । परं चैव लघुं मन्ये तदा कर्म समाचरेत् ॥"

अग्नये पृथिव्याधिपतये स्वाहा । सूर्याय दिवोधिपतये स्वाहा । सोमाय नक्षत्राधिपतये स्वाहा । कुबेराय यज्ञाधिपतये स्वाहा । इंद्राय देवाधिपतये स्वाहा । ब्रह्मणे त्रैलोक्याधिपतये स्वाहा । देव्यै भगाधिपतये स्वाहा । शालकटंकटाय स्वाहा । कुष्मांडराजपुत्राय स्वाहा । महाविनायकाय वक्रतुंडाय गणानां पतये स्वाहा । धर्माय स्वाहा । अधर्माय स्वाहा । तुलायै स्वाहा । तुलापुरुषाय स्वाहा । प्रजापतिदेवाय मरुद्भिः सदैव पुनरागमनाय स्वाहा । सकृच्चरित्वा शुचिः कर्मणो भवति द्विश्चरित्वा गाणपत्यमवाप्नोति त्रिः कृत्वा महादेवस्यार्धासनं प्राप्नोति । आषाढ्यां कार्त्तिक्यफाल्गुन्यां पुण्ये वा नक्षत्रे एषां विहितो धर्म इति ॥

यमः "अथातो भगवतस्तुलापुरुषस्य कल्पं व्याख्यास्यामः ।

" अभक्ष्यभक्षणं कृत्वा विकर्मकरणं तथा । प्रसूतानां द्विजातीनां संकीर्णासु च योनिषु ॥

५ संकीर्णयोनिषु प्रतिलोमयोनिषु । तथा निषिद्धयोनिषु च प्रसूतानामुत्पादितापत्यानाम् ।

"प्राश्य मूत्रं पुरीषं च भोजयित्वा च निंदितान् । अगम्यागमनं कृत्वा दूषयित्वा च कन्यकाम् ।

"विनायकोपसृष्टस्य महाव्याधिहतस्य च । स्वर्गमार्गाविलंबस्य स्वयोद्धाः ......॥

"इदं यंत्रं दुराधर्षं महापातकनाशनम् । स्वर्गद्वारमिदं श्रेष्ठं महादेवप्रचोदितम् ॥

"वाङ्मनोभ्यां च कायेन यानि पापानि देहिनः । आचामस्तानि निर्हंति नव श्राद्धं च सूतकम् ।

"तैलस्य दारुणं किंचित्केशपक्षिहतं च यत् । पिण्याकस्तानि निर्हंति अस्थि भित्वा च यत् स्थितम् ॥

"तैलस्य भक्ष्यमाणस्य तथा निषिद्धसेविने । अभ्यंगादिषु योज्यमानस्य दारुणसलक्ष्मीकरं यत्पापं केशपक्षिहतं केशे यस्युपहतं । अस्थि भित्वा स्थितं । यत्पूर्वकृतं पापं दीर्घकालत्वाद्गूढं संस्थितं तदस्थि भित्वा स्थितमित्युच्यते ।

"आहारेषु च ये दोषाः सोपि* (?) दोषाश्च ये कचित् । तर्केण तानि पूतानि श्वभिर्यैश्चावलोकितम्
"कनकं च तिला गावो भूमिराच्छादनं स्त्रियः । सर्वं पुनाति धर्मात्मा तथैवोदकसक्तुभिः ॥
कनकादिप्रतिजनितां पापं पुनातीति न संशयः ।

अथाज्ययाजनं चौर्यं कन्यायामथ दूषणम् । यच्च गोमैथुनात्पापं वायुं पीत्वा पुनाति तत् ॥

आहाराग्नामपि जुहोति आहाराग्नामपि जुहोतीत्यपि शब्दोपादानादाज्यहोमोऽपि गम्यते । ५
अग्नये पृथिव्यधिपतये स्वाहा । वरुणाय पाशाधिपतये स्वाहा । महासेनाधिपतये स्वाहा । रुद्राय भूताधिपतये स्वाहा । ब्रह्मणे लोकाधिपतये स्वाहा । विष्णवे सर्वाधिपतये स्वाहा । येन देवाः पवित्रेण तुलापुरुषमारुह्य पुनरुद्धताम् । तमहं पवित्रं पवित्राणां तुलापुरुषमावाहयिष्यामि स्वाहा ।

करालं पिंगलं ब्रभ्रुं विश्वरूपमुमापतिं । यो हि वेदात्ततो जातस्त्वमृतं च महामतिः ।

अंभसः पारे भुवनस्य मध्ये नाकस्य पृष्ठे महतो महिमानं महीयते । उदयति यो ब्रह्मासनं १०
स नयति पुरायाति कं । यो भोजो ग्रहणजातो मनुजो महाध्वजः । एकाक्षरं बहु बहुयोजमान् वर्णप्रधानं बहुधा विश्वरूपः प्राणात् विहितोभिहितो विश्वकर्मणो नमो नम इति । स्वागतं भवते तुलापुरुषाय इदमासनमास्यतां भगवते । ततः पाद्यार्घाचमनमनुलेपनमाज्यदीपधूपनैवेद्यैश्चाभ्यर्च्य भगवंतं सपत्नीकं सपार्षतं पशुपतिमभ्यर्चयेत् । सपार्षतं सगणं । धूपमंत्रश्च भवति

"वनस्पतिरंसो नित्यं गंधाढ्यो गंधसत्तमः । आहारः सर्वभूतानां धूपोऽयं प्रतिगृह्यताम्" ॥ १५

सर्वत्रायं धूपमंत्रः । अथ तुल्यं भवति महापशुर्येन शरेण विद्धो यच्चापि शस्त्रमुभयोर्लब्ध-लक्षतेनायसीतुलां सुकृतां कारयित्वा त्रिप्रादेशमात्रामुभयोर्जातशिक्यां महापशुर्महाभुजः । यच्छस्त्र-मुभयोर्लब्धलक्षं उभयोराद्यंताभ्यां प्रहृतलक्षम् । आद्यंतयोस्तीक्ष्णं सद्विदमृगादिकं । अथवा उभयोः पार्श्वयोः प्रहृतलक्षं धाराद्वयेन प्रहृतलक्षं खड्गादिकं एवंविधेन लोहेन प्रादेशत्रयप्रमिता तुला कार्येत्यर्थः । उभयोर्जातशिक्यां पार्श्वद्वयकृतशिक्यां । २०

"सौवर्णी राजता वापि तुला देवी तु सा स्मृता । अथ चंदनवृक्षस्य खदिरस्याथ कारयेत् ॥
"एतेषामप्यभावे तु तुलाऽन्या योपपद्यते । प्रतिमा चांदनी कार्या एकैव स्वभ्रसंज्ञिता ॥
"उशीरस्यापरा कार्या तथा नरकसंज्ञिता । नदीमृत्तिकया वापि प्रतिमे द्वे तु कारयेत् ॥
"विहिते सूपलिप्ते च तत्र बीजानि स्थापयेत्" ॥ विहिते न्यूनाधिकरहिते । हारीतोक्तपल-परिमाणोपेत इति यावत् । सूपलिप्ते पृष्ठतः सुसंसृष्ट इति मंजर्याम् । पृष्ठभागे अवयविभागो २५
यथा न जायते तथा समीकृते इति तात्पर्यार्थः । तत्र तत्स्थापनं प्रदेशे बीजानि व्रीह्यादि-बीजानि स्थापयेत् ।

"अदितिस्तु तुला माता स्वयंभूर्जनिता भव । त्वं हि सत्यं च धर्मश्च त्वयि लोकाः प्रतिष्ठिताः ॥
"सत्यं वद सत्यवादिनि सत्येन रमतां मान्* । सस्यानां संपदं ब्रूहि किं सस्यं वर्द्धयिष्यसि ॥
"बीजानां संपदं ब्रूहि किं बीजं वर्द्धयिष्यसि । राज्ञां च संपदं ब्रूहि कं नृपं वर्द्धयिष्यसि ॥ ३०
"अस्माकं संपदं ब्रूहि किमस्मान् वर्द्धयिष्यसि ।

"यदा तु गुरुमात्मानमसकृत्तुलया धृतम् । परं च लाघवं मन्ये ततः कर्म समारभे ॥
"एतेनैव तु कल्पेन ब्राह्मणस्य विधीयते । राजन्यवैश्ययोश्चैव काष्ठप्रतिकृतस्मृते*" ॥

* एवं मूले ।

परं च लाघवं मन्ये परशिक्यारोपितमश्मादि लघु यदा भवतीति **स्मृतिमंजर्यां** व्याख्यातम् । यदा तु गुरुमात्मानमित्यादेरयमर्थः । अत्रासकृत्तुलया धृतमित्याभिधानात् तथा 'राजन्यवैश्ययोश्चैव काष्ठप्रतिकृती स्मृत'इत्युक्तत्वाद्गंधादिप्रातिमाद्वयस्योक्तत्वाच्च स्वप्रतिकृतिरूपं प्रत्येकं पलपरिमितचंदनादिप्रतिमाद्वयं कृत्वा पलपरिमितपाषाणादि एकस्मिन् शिक्ये निक्षिप्य
५ द्वितीयशिक्ये स्वप्रतिकृतिद्वयमपि पृथक् पृथक् निक्षिप्य तोलयेदिति । अत एवासकृत्तोलनं भवति । त्रिप्रादेशमात्रतुलाविधिरपि प्रतिकृतितोलन एवोपपद्यते । साक्षात्स्वरूपतोलने तस्या अपर्याप्तत्वात् । तथाश्वेताश्वो गुरुदक्षिणश्चिता गौर्गुरुप्रसादो वा नमस्तुलापुरुषायेति . **यम** इति । यत्किंचिद्दत्वा गुरुराचार्यः प्रसादनीयः । स एव प्रसादो वा दक्षिणेत्यर्थः । अश्वादिसंपादना-समर्थविषयमेतत् । अत्रानुष्ठानक्रमः । **हारीत**वचने तुलानुरोहणानंतरं होममंत्राः पठिताः ।
१० **यमेन** तूपक्रम एव । अतश्च होमे क्रमो विकल्प्यते । होमं कृत्वा उमामहेश्वरपूजां विधाय तुलाभि-मंत्रणानंतरं महेश्वरः स्थितं प्रतिमाद्वयं तुलां पृथक् पृथक् पूर्वोक्तविधिनारोपयेत् । ततो वा होमः कर्तव्यः । स्मृतिद्वयेऽपि 'यदा तु गुरुमात्मानमि'त्युपक्रम्य 'ततः कर्म समारभेदि'त्युक्तत्वात् । तुलारोहणानंतरमेव आचामपिण्याकादिभक्षणादिना व्रतमाचरेत् । अत्र गुरुमित्युपलक्षणं साम्येऽपि कर्तव्यम् । तुलादिव्यप्रकरणे साम्येऽपि दोषयुक्तत्वाभिधानात् । एतच्च दोषसंदेहे । दोषनिश्चये
१५ तु दैवाल्लघुत्वेऽपि प्रायश्चित्तं कर्तव्यमेव । संदेहे तु लघुत्वे उत्तरत्र क्रियमाणं प्रायश्चित्तं न कर्तव्य-मिति गम्यते । "आत्मानं लाघवं मन्ये ततः कर्म समारभेदिति" हेतूपादानात् । केवलपुण्यो-पार्जनार्थं तुलापुरुषकृच्छ्रकरणे गुरुत्वे साम्ये लघुत्वे च कर्तव्यमेव । विशिष्टस्यैव सुकृतोपादान-हेतुत्वात् । **हारीतेन***... थोयमाषाद्यादिकालोऽभिहितः । सोऽपि सुकृतार्थिन एव दुरितोपेतस्य निमित्तानंतरमेव कर्तव्यत्वात् इति ।

२० **अथ यावकव्रतं**

"गोपुरीषाद्यवान्नं च मासं नित्यं समाहितः । व्रतं तु यावकं कुर्यात्सर्वपापापनुत्तये॥" इति **शंखः**।

"गोपुरीषयवाभ्यासो मासमेकं समाहित" इति पाठांतरम् । "गोभक्षणार्थं यवान्दत्वा तदनंतरं गोमयमध्यनिःसृतान्यवान् गृहीत्वा चरुवत्पक्वैस्तैरेकभक्तनक्तानि कुर्वन्मासं नयेदेतद्यत्किंव्रतं यवानामप्सु साधितानां सप्तरात्रं पक्षं मासं वा प्राशनं यावक" इति तु **देवलः** ।
२५ यदा तु प्राग्वदेव यवानादाय गोमूत्रे पक्त्वा तैः प्राग्वदेव मासातिवर्तनं तदा गोमूत्रयावकव्रत-मित्युच्यते । तदाह **योगियाज्ञवल्कः**

"आहूय चारयित्वा गां गोधूमान्यवामिश्रितान् । गोमयोत्थांश्च सँगृह्य पचेत् गोमूत्रयावकमिति"। एवमुक्तप्रकारेण मासमेकं ग्रासमात्रं क्षीरेण वर्तनं पयोव्रतं । यत्र व्रते येन द्रव्येण शरीरयात्रा तद्वृत्तस्य तद्व्यपदेश्यत्वस्य **मार्कंडेय**सम्मतत्वात् ।

३० **अथाघमर्षणव्रतं । मनुः ( अ. ११ श्लो. २५९-२६० )**

"त्र्यहं तूपवसेद्युक्तस्त्रिरह्नोभ्युपयन्नपः । मुच्यते पातकैः सर्वैस्त्रिर्जपित्वाऽघमर्षणम् ॥

"यथाऽश्वमेधः क्रतुराट् सर्वपापापनोदनः । तथाऽघमर्षणं सूक्तं सर्वपापापनोदनमिति ॥"

---

* सांदिग्धमिदम् ।

अत्रैव विशेषमाह **विष्णुः** "प्रत्यहं त्रिषवणस्नानमाचरेत् । त्रिः प्रतिस्नानमप्सु निमज्जन्मग्नश्च त्रिरघमर्षणं जपेत् । दिवा स्थितास्तिष्ठेद्रात्रावासीनः कर्मणोऽते पयस्विनीं दद्यादिति ।" अथैतत् प्रत्याम्नायाः । तत्र यावकव्रते पयोव्रते सपंचधेनवः षडुपवासाः प्राजापत्यमिति प्रात्येयं च षट्कसत्वात् यद्यपि यावकव्रते प्रतिदिनं यावकभोजनं तथाऽप्युक्तयावकभोजनस्यात्यंतक्लेशावहत्वा-दुपवासतुल्यत्वं पयोव्रते तु पयःपाने क्लेशाधिक्यादेका धेनुः । एवं गायत्रीजपाद्यपि कल्पनीयम् । ५ पाकोत्तरमीषद्गोमूत्रयुक्तयावकपानं कृच्छ्रद्वयसमं सार्धं कृच्छ्रद्वयसममित्यन्ये त्रिंशदुक्तैर्दशोपवासास्तत्र कृच्छ्रचतुष्टयं कृच्छ्राब्दं त्रिंशद्धेनुसमं उपवासस्थाने एकविप्रभोजनं शक्तौ द्वयोः गायत्रीसहस्रजपः द्वादशप्राणायामा वा । अत्र प्रायश्चित्तप्रकरणे व्रतशब्दः सामान्यतो यावकपानवचनः । दिनरात्रि-शब्दौ तत्तद्वचनावेव उपवाससमभिव्याहारे ह्यहोरात्रवचनौ । अहःशब्दश्चाहोरात्रपर इति व्यवस्था क्वचिदुक्ता ॥ ३२३ ॥ १०

## याज्ञवल्कीये ३२४ श्लोकः ।

अस्य योगरूढत्वमाह । **चंद्रस्येति** । नायं नियम इत्याह । **यदा त्विति** । अतिदेशमाह ।
मि. पृ. ३३८. **तस्योक्तो विधिः** । **कृच्छ्रे इति** । कृच्छ्रे प्राजापत्ये यो विधिरुक्तः 'तिष्ठे-दहनी'त्यादि स सर्वोऽस्य बोध्यः । एवं तद्धर्माननतिदिश्य प्रकृष्टसाधारणधर्ममाह । **वपनं व्रत-मिति** । अर्श आद्यच् । वपनपूर्वं व्रतं सामित्यर्थः । इदमग्रे स्फुटीभाविष्यति । अथ विशेषधर्मानाह । १५ **श्वो भूतामिति** । पौर्णमासीं ग्रासोपक्रमातिथिं श्वोभूतामभिलक्ष्य पूर्वतिथौ चतुर्दश्यामुपवसेदि-त्यर्थः । **एताभिः** तिसृभिः । क्रमेणाह । **तर्पणमिति** । **हविष इति** पिंडकरणात्पूर्वं तदनंतरमाह । **यद्देवा इति** । होमस्तर्पणं च प्रतिमंत्रं । **अंते** उक्ताज्यहोमांते । **समिद्भिर्यज्ञियकाष्ठो-द्भवाभिः** । यद्यपि देवकृतस्येत्येका ऋक् तथापि बहुवचनबलात्कपिंजलन्यायेन त्रित्वे पर्य-सानादावृत्या तिस्रः समिधाहुतयोऽवांतरवाक्यानां षट्संख्या कृत्वा षट् वा पिंडकरणानंतरमाह**ॐ** २० **भूरि**तिवत्तत्तात्तिथिसंख्याकग्रासान्कृत्वा प्रणवादिषोडशभिः प्रतिमंत्रं तदनुमंत्रणं प्रतिपिंडपक्षांतर-माह । **मनसेति** । सर्वान् पिंडान् आसाद्यीति । यावदन्नं मुखे प्रविशति तावदित्यर्थः । चतुर्दश्यामु-पोषितस्य पूर्णिमादितिथिषु ग्राससंख्यानियममाह । **पौर्णेति** । एवं पिपीलिकामध्यमुक्त्वा यव-मध्यमाह । **विषेति** । अत्र ग्रासग्रहणकालश्चंद्रोदयः । स च दिवारात्रौ वेति तदनुसारेण ग्रास-ग्रसनं । तथा च **हारीतः** "चांद्रमसं चरुं श्रपयित्वा नवो नव इति हुत्वा ज्योत्स्नाया चतुःशेषान् २५ पिंडान् सावित्र्यभिमंत्रितान्प्राश्नीयादिति" । ग्रासग्रसनसमये या तिथिस्तद्रूपा ग्राससंख्या । ज्योत्स्नाशब्देन चंद्रोदयो लक्ष्यते । तथा चार्धरात्रोदयेऽपि भोजने न दोषः । **आर्द्रामलेति** । तथा च **शंखः** "आर्द्रामलकमात्रास्तु ग्रासा इंदुव्रते स्मृताः । तथैवाहस्तपस्तत्र शौचार्थं चैव मृत्तिका ॥

"एकैकं ह्रासयेत् पिंडं कृष्णे शुक्ले च वर्धयेत् । उपस्पृशंस्त्रिषवणमेतच्चांद्रायणं स्मृतमिति"॥ **मौलायुक्त**चांद्रायणापेक्षया भिन्नमेव **गौतमोक्तं** । न तु तत्रैव प्रकारविशेषबोधकमित्याह । ३० **यत्पुनरिति** । विपक्षे बाधकमप्याह । **यद्येतदिति** । योगार्थबाधमप्याह । **चंद्रेति** । तथा चात्र चांद्रायणशब्दो गौणोऽग्निमेष्विवेत्यर्थः । कुंडपायिनामयने मासमग्निहोत्रं जुहोतीतिवदिति बोध्यम् ॥ ३२४ ॥

## याज्ञवल्कीये ३२५ श्लोकः।

आदिना दिनद्वयमुपोष्यत §जीवयेद्वा त्रिंशदित्यादि। एवं चात्र तिथ्यपेक्षाया ग्रासनियमेन एष्वेव प्रकारे काचित् विशेषसंज्ञा मनुनोक्तेत्याह। **मनुना चेति**। चरेत् मासमिति शेषः। एवमग्रेऽपि। **न्यूनसंख्येति**। नवतिसंख्येत्यर्थः। हविष्याण्याह **स्मृतिः**

५ "हैमंतिकसितास्विन्नं धान्यं मुद्गास्तिला यवाः। कलापकंगुनीवारवास्तूकं हिलमोचिका॥
"षष्ठिकाः कालशाकं च मूलकं केमुकेतरत्। कंदं सैंधवसामुद्रे गव्ये च दधिसर्पिषी॥
"पयोऽनुद्धृतसारं च पनसाम्रं हरीतकी। पिप्पली जीरकं चैव नागरंगं च तिंतिली॥
"कदली लवली धात्री फलान्यगुडमैक्षवम्। अतैलपक्वं मनुयो हविष्यान्नं प्रचक्षते॥"

**अगस्तिसंहितायां** नारिकेलफलं चैवेति। अत्र हैमंतिकपदं वार्षिकधान्यव्यतिरेकः। सितपदेन श्याम-
१० तुषश्यामतंडुलयोर्निवृत्तिः। आस्विन्नपदेन स्विन्ननिवृत्तिः। "हरिद्रागोरसं धान्यं फलं लवणमौषधमि-" त्यादिवचनेन दिनांतरेण स्विन्नधान्यभोजनेऽपि दोषाभावात्। कलापपदेन वर्तुलो ग्राह्यः। 'कालाय-स्त्रिपुटो ज्ञेय" इति **वैद्यकशास्त्र**विधानस्य 'कलापश्चातिवातुल' इति प्रकरणीयत्वात्। कंगुकं गुणिका। नीवारो जलधान्यविशेषः। वास्तूकं लंबपत्रं वाप्फत्वेन प्रसिद्धं। कालशाकं कालवात्वेन पर्वतप्रसिद्ध ईषत् श्यामपत्रः शाकविशेषः। केमुकेतरत् कंदमित्यन्वयः। केमुकः क्विडआ इति
१५ पूर्वदेशे प्रसिद्धः कंदविशेषः। तदितरं तद्भिन्नं सूरणादीत्यर्थः। गौडास्तु 'कंदकं केमुकेतरदिति' पठित्वा मूलकमिति व्याचख्युः। पयोऽपि गव्यमेव दधिसंनिधानात्। तितिली चंचेति शास्त्रे प्रसिद्धा। अंबिलीति मध्यदेशे प्रसिद्धा। लवली दाडिमी। धात्री आमलकी। अडगु-मित्यैक्षवविशेषणम्। तथा चेक्षुरस इत्यर्थः। अतैलपक्वमिति तैलपक्वनिषेधः। तेनापक्वं घृतपक्वं वा हविष्यमुक्तद्रव्यमित्युक्तं भवति। इदमुपलक्षणं। निषिद्धेतरत्स्वयमरण्यसंभवं पुष्पमूलफल-
२० शाकादिकं सर्वं हविष्यम्। शाकेषु मुख्या किलका कमाचीत्यादि **वामनपुराण**दर्शनात्। यथा
"हविष्येषु यवा मुख्यास्तदनुव्रीहयः स्मृताः। माषकोद्रवगौरादीन्सर्वालाभेऽपि वर्जयेत्"॥

अत्र गौरो गुर्जरदेशे प्रसिद्धः। पशुभक्ष्यो मसूराकृतिरन्नविशेषः। श्वेतसर्षप इत्येके। तन्न। तस्य भक्ष्यत्वे मानाभावात्। आदिपदात् कुलस्य मंड्रकादिसर्वालाभेपीति। अनिषिद्धचीण-काद्यभावेऽपीत्यर्थः। अत्र यद्यपि जलं नोक्तं तथापि हविष्यस्य जलव्यतिरिक्तभक्षणासंभवादगत्या
२५ तदपि हविष्यं बोध्यम्। अत्र **बौधायनः**

"यथोक्तवस्त्वसंपत्तौ ग्राह्यं तदनुकारि यत्। यवानामिव गोधूमा व्रीहीणामिव शालयः"॥

अत्र तदनुकारीति घृताभावे नालिकेरादिफलप्रभवस्नेहः। मुद्गाभावे नकुष्ठादिः। सैंधवाभावे स्वयं-कृतलवणादिरित्यर्थ इति केचित्। मम त्विदं प्रतिभाति। पारिभाषिकमध्ये यवा मुख्यास्तदभावे व्रीहयस्तदलाभे तद्भिन्नाः पारिभाषिताः। तदभावे गोधूमादयोऽनिषिद्धास्ते दनुकारिभूताः।
३० माषादीनां तु सर्वथा ग्रहणमिति। सावनेति। तथा चात्र चांद्रायणे पूर्वप्रक्रांतैकादश्यादिव्रत-लोपो न तिथिनियमेन ग्रामनियमभावात्। आद्ये तु तिथिनियमेन ग्रासनियमात्तादृशैकादश्यादि-

§ संदिग्धम्।

व्रतलोपो न दोषावहः । अन्येन वा तत्कारणीयं न दोष इति चंद्रगत्यनुसरणं विना तादृशसावनमासानुष्ठेयत्वादिति भावः । एवं चात्रोपक्रमः प्रतिपद्येवेति न नियम इति तात्पर्यम् ।

मि. पृ. ३३९ विरोधं परिहरति । **यत्पुनरिति । तेन हारीतेन** । चतुस्त्र्यादिक्रमेणास्तमानां ह्रासात्पुनरेकादिक्रमेण वृद्धेश्चतुर्थी कृष्णैवेत्याह । **कृष्णेति** । एतेन न त्रिरात्रमित्युक्त्या मुखे एव दाह इति प्रतीयते तथापि स्तनस्य साक्षात्तृप्त्यसाधनत्वात्पयस्तत्वादग्नौ होमो प्रोक्तस्तस्य 'द्रव्यसाध्यत्वादुपस्थितमिति' **न्यायेन** क्षीरत्यागे नान्याकल्पनाया अन्यथात्वात्तत्रत्यं क्षीरं गृहीत्वा या ते सोमेत्यादिमंत्रैः प्रतितिथि एकैकामाहुतिं हुत्वा पयः पिबेत् । चांद्रायणधर्मातिदेशाच्चंद्रोदये एव पानमंत्रोहान्याह । **या ते सोम पंचमीति** । एवममापर्यंतं कृत्वा प्रतिपदादि प्रथमा तनूरित्यादि प्रयोगाः । यथार्था इति । तथा च चतुर्थीद्वादशीमध्ये यदतिक्षयादि न तथेदमनुष्ठेयम् । **तदशक्तेति** । एवं च पूर्वोक्तं शक्तविषयं बोध्यम् ।

अथैतत्प्रत्याम्नायाः । तत्राद्यचांद्रायणद्वयस्य **मूलोक्तस्य गौतमोक्तस्य** चाष्टधेनवः समृद्धधनस्य "अष्टौ चांद्रायणे देयाः प्रत्याम्नायविधौ सदेति" **चतुर्विंशतिमतात्** वृषभसहिता गौश्चात्र दक्षिणा सार्धं सप्तधेनवो **मौलस्येति शूलपाणिः** । अल्पधनस्य तु तिस्रः ।

"प्राजापत्ये तु गामेकां प्रतिकृच्छ्रे द्वयं स्मृतं । चांद्रायणे पराके च तिस्रस्ता दक्षिणा तथेति"

**पराशरात्** । **स्वल्पेति** । कर्तव्यतासहितयोरपीदं । तदभावे निष्कादि । यद्वा प्रतिधेन्वयुतगायत्रीजपः । धेनुसंख्या उदवासाः प्राणायामशतद्वयानि वेदपारायणानि तिलहोमसहस्राणि द्वादशविप्रभोजनानि तथा स्नानानि । एते विकल्पा न व्रीहिवत् किंतूदितानुदितहोमवत् । व्यवस्था च देशाद्यपेक्षया । "देशं कालं तथाऽऽत्मानमिति" **बौधायनात्** ( १।५।४७ ) । तत्र शौचशब्देन शुद्धिसाधनं सर्वं । एवमन्यत्रापि बोध्यम् । "यतिचांद्रायणं प्राजापत्यचतुष्टयसममिति" **बृहद्विष्णुः** । एवं शिशुचांद्रायणमपि पादोनचतुष्टयधेनुदानमुभयत्रेति **शूलपाणिः** । ऋषिचांद्रायणेऽपि तावद्देवेति धेनुत्रयमिति च चिंत्यमुपपत्तेरभावात् ।

अथ **गोवधव्रतम्** । **याज्ञवल्क्यः** (प्रा. २६३)

"पंचगव्यं पिबेद्गोघ्नो मासमासीत संयतः । गोष्ठे शयो गोनुगामी गोप्रदानेन शुद्ध्यति" । मासे नवतिमासेन केशाधिक्या यत् किंचिदधिका च धेनवः सोमायनः । यद्यपीदं प्रागुक्तं तथापि स्पष्टीक्रियते । इत्थं हि तेन शुद्ध्यति ।

"कृच्छ्रं चैवातिकृच्छ्रं च चरेद्वाऽपि समाहितः । दद्यात्त्रिरात्रं चोपोष्य वृषभैकादशस्तु गाः ॥"

अत्र प्रेतचतुष्टयं विहितं । आहारांतरनिरपेक्षेण पंचगव्यं पिबन् । रात्रौ गोशालायां शयानः । प्रातस्ता एव वनं गच्छंतीरनुगच्छन् तिष्ठंतीरनुतिष्ठन् । अन्यैरपि नियमैर्युक्तो मासमासीत । ततो मासांते गा ब्राह्मणाय दत्वा शुद्ध्यतीत्येकं व्रतम् । पंचगव्याहारव्यतिरेकेण पूर्वोक्तधर्मयुतो मासं प्राजापत्यं कृच्छ्रं चरेदिति द्वितीयम् । तथैव प्राजापत्यस्थाने । अतिकृच्छ्रं मासं चरेदिति तृतीयम् । त्रिरात्रोपवासं कृत्वैको वृषभो दश गाश्च दद्यादिति चतुर्थम् । अत्रेयं व्यवस्था । अज्ञानतो जातिमात्रब्राह्मणसंबंधिगोमात्रवधे "दद्यात् त्रिरात्रमुपोष्य वृषभैकादशास्तु गा" इत्येतत् । अज्ञानतः क्षत्रियसंबंधि गोमात्रव्यापादेन मासं पंचगव्याशित्वं प्रथमं प्रायश्चित्तम् । अज्ञानतः वैश्यसंबंधि गोमात्रव्यापादने मासमतिकृच्छ्रं कुर्यात् । अज्ञानतः शूद्रस्वामिगोमात्रवधे मासं प्राजापत्यव्रतं

कुर्यात् । कामतस्तु तद्द्वैगुण्यं कल्प्यं । अथवा मन्वाद्युक्तानि व्रतानि पूर्वोक्तेषु विषयेषु विषयांतरेषु देशकालशक्त्याद्यपेक्षया योज्यानि ।

## अथ मासोपवासव्रतं ।

**चिन्तामणौ नारद** उवाच

५ "भगवन् श्रोतुमिच्छामि व्रतानामुत्तमस्य च । विधिं मासोपवासस्य फलं चास्य यथोदितं ॥
"यथाविधा नरैः कार्या व्रतचर्या यथा भवेत् । आरभ्येते यथापूर्वं समाप्यं हि यथाविधि ।
"यावत्संख्यं च कर्तव्यं तावद् ब्रूहि पितामाह । व्रतमेतत्सुरश्रेष्ठ विस्तरेण समानवं ॥

**ब्रह्मोवाच**

"साधु नारद यच्चैतत्पृष्टं चर तपोधनं । यादृक् मतिमतां श्रेष्ठ तच्छृणुष्व ब्रवीमि ते ॥
१० "सुराणां च यथाविष्णुस्तपतां च यथा रविः । मेरुः शिखरिणां यद्वद्वैनतेयश्च पक्षिणाम् ॥
"तीर्थानां च यथा गंगा प्रजानां तु यथा वणिक् । श्रेष्ठः सर्वव्रतानां तु तद्वन्मासोपवासनं ॥
"सर्वव्रतेषु यत्पुण्यं सर्वतीर्थेषु तेन तु । सर्वदानोद्भवं चापि लभेन्मासोपवासकृत् ॥
"अग्निष्टोमादिभिर्यज्ञैर्विविधैर्भूरिदक्षिणैः । न तत्फलमवाप्नोति यन्मासपरिलंघनात् ॥
"तेन तप्तं हुतं दत्तं तपस्तप्तं कृतं स्वधा । यः करोति विधानेन नरो मासमुपोषणम् ॥
१५ "प्रविश्य वैष्णवं यज्ञं तेनाभ्यर्च्य जनार्दनम् । गुरोराज्ञां ततो लब्ध्वा कुर्यान्मासोपवासनम् ॥
"वैष्णवानि यथोक्तानि कृत्वा सर्वव्रतानि च । द्वादश्यादीनि पुण्यानि ततो मासमुपाचरेत् ॥
"अतिकृच्छ्रं पराकं च कृत्वा चांद्रायणं ततः । मासोपवासं कुर्वीत ज्ञात्वा देहबलाबलम् ॥
"वानप्रस्थो यतिर्वाऽपि नारी वा विधवा मुने । मासोपवासं कुर्वीत गुरुविप्राज्ञया ततः ॥
"आश्विनस्यामले पक्षे एकादश्यामुपोषितः । व्रतमेतत्तु गृह्णीयाद्यावत्त्रिंशद्दिनानि च ॥
२० "वासुदेवं समभ्यर्च्य कार्तिके सकले नरः । मासं चोपवसेद्यस्तु स मुक्तिफलभाग्भवेत् ॥
"अच्युतस्य लभेद्भक्त्या त्रिकलं कुसुमैः शुभैः । मालतींदीवरैः पद्मैः कमलैः सुसुगंधिभिः ॥
"कुंकुमोशीरकर्पूरैर्विलिप्य वरचंदनैः । नैवेद्यधूपदीपाद्यैरर्चयेत्तु जनार्दनम् ॥
"मनसा कर्मणा वाचा पूजयेद्गरुडध्वजम् । कुर्यान्नरास्त्रिबंद्धर्णबृहद्वृक्तिजितेंद्रियम् ॥
"नाम्नासेन तथालापं विष्णोः कुर्यादहर्निशम् । भक्त्या विष्णोः §स्तुतिं वाऽपि मिथ्यावादं विवर्जयेत् ॥
२५ "सर्वसत्वदयायुक्तः शांतवृत्तिरहिंसकः । न सुप्तो वा न संस्थो वा वासुदेवं प्रकीर्तयेत् ॥
"स्मृत्यालोभनगंधादिस्वादनं परिकीर्तनम् । अन्नस्य वर्जयेत्सर्वं ग्रासानां चाभिकांक्षणम् ॥
"गात्राभ्यंगशिरोभ्यंगं तांबूलं सविलेपनम् । व्रतस्थो वर्जयेत्सर्वं यच्चान्यत्र निराकृतम् ॥
"न व्रतस्य स्पृहेत्किंचिद्विविधस्था न चालयेत् । देवतायतने तिष्ठेच्चागृहस्थश्चरेद्व्रतम् ॥
"कृत्वा मासोपवासं तु यथोक्तविधिना नरः । नारी वा विधवा साध्वी वासुदेवं समर्चयेत् ॥
३० "अन्यूनाधिकमेवं तु व्रतं त्रिंशद्दिनैरिदम् । कृत्वा मासोपवासं तु संयतात्मा जितेन्द्रियः ॥
"ततोऽर्चयेत् वैगुण्यं द्वादश्यां गरुडध्वजम् । पूजयेत्पुष्पमालाभिर्गंधधूपविलेपनैः ॥
"वस्त्रालंकारवाद्यैश्च तोषयेदयुतं नरः । स्नापयेच्च हरिं भक्त्या तीर्थं चंदनवारिणा ॥
"चंदनेनानुलिप्तांगं धूपपुष्पैरलंकृतम् । वस्त्रदानादिभिश्चैव भोजयेच्च द्विजोत्तमान् ॥

---

§ स्तुतिं इति मूलपाठः ।

"दद्याच्च दक्षिणां तेभ्यः प्रणिपत्य क्षमापयेत्! विप्रान्क्षमापयित्वा तु विसृज्याभ्यर्च्य पूज्य च॥
"एवं वित्तानुसारेण भक्तियुक्तेन शक्तितः। एवं मासोपवासं तु कृत्वाऽभ्यर्च्य जनार्दनम्॥
"भोजयित्वा द्विजांश्चैव विष्णुलोके महीयते।

"एवं मासोपवासांश्चि सम्यक्कृत्वा त्रयोदश। निर्वापयेत्कृतास्तान्यैर्विधिना* येन तच्छृणु॥
"कारयेद्वैष्णवं यज्ञमेकादश्यामुपोषितः। पूजयित्वा तु देवेशमाचार्यानुज्ञया हरिम्॥ ५
"अर्चयित्वा हरिं भक्त्या अभिवाद्य गुरूंस्तथा। ततोऽनुभोजयेद्विप्रान्भोजयीत यथाविधि॥
"विशुद्धकुलचारित्रान्विष्णुपूजनतत्परान्। पूजयित्वा द्विजान्सम्यग्भोजयित्वा त्रयोदश॥
"तावंति वस्त्रयुग्मानि भोजनाच्छादनानि च। योगपट्टानि शुभ्राणि ब्रह्मसूत्राणि ते* व हि॥
"दद्याच्चैतद्द्विजाग्रेभ्यः पूजयित्वा प्रणम्य च।

"ततोऽनुकल्पयेच्छय्यां शस्तास्तरणसंस्कृताम्। साच्छादनां शुभां श्रेष्ठां सोपधानामलंकृताम्॥ १०
"कारयित्वात्मनो मूर्तिं कांचनीं तु स्वशक्तितः। न्यसेत्तस्यां तु शय्यायामर्चयित्वा स्रगादिभिः॥
"आसनं पादुका छत्रं वस्त्रयुग्ममुपानहौ। पवित्राणि च पुष्पाणि शय्यायामुपकल्पयेत्॥
"एवं शय्यां तु संकल्प्य प्रणिपत्य चरान् द्विजान्। प्रार्थयेच्चानुमोक्षार्थं विष्णुलोकं व्रजाम्यहम्।
"एवमभ्यार्चितो विप्रा वदेयुर्व्रतिनं सदा। व्रजपूजनिनश्रेष्ठविष्णोः स्थानमनामयम्॥
"ततो विसर्जयेद्विप्रान्प्रणिपत्यानुगम्य च। ततस्तु पूजयेद्भक्त्या गुरुं ज्ञानप्रदायकम्॥ १५
"कृत्वा वासोपवासांश्च निर्वाप्य विधिवन्मुने। कुलानां शतमुद्धृत्य विष्णुलोकं व्रजेन्नरः॥
"यस्मिन् जातो महापुण्ये कुले मासोपवासकृत्। सर्वपापविनिर्मुक्तो विष्णुलोके महीयते॥
"नरो मासोपवासानां कर्ता पुण्यवतां नरः। पितृमातृकुलाभ्यां च समं विष्णुपुरं व्रजेत्॥
"नारी वा सुमहाभागा यथोक्तव्रतमास्थिता। कृत्वा मासोपवासांश्च व्रजेद्विष्णुं सनातनम्॥

**नारदोवाच** २०

"सुदुष्करमिदं देव मूर्छाग्लानिकरं नृणां। व्रतं मासोपवासाख्यं भक्तिं जनयतेऽच्युते॥
"पीडितस्य भृशं देव मुमूर्षोर्व्रतिनस्तथा। त्यागो वाऽनुग्रहो वाऽथ किंतु कार्यं पितामह॥

**ब्रह्मोवाच**

"व्रतस्थं कर्षितं दृष्ट्वा मुमूर्षुं वा तपोधनः। दृष्ट्वा तु ब्राह्मणस्तस्य कुर्वीतसम्यगनुग्रहं॥
"अशृतं पायसे क्षीरमित्थमादसक्त्निशि। यथेह न वियुज्येत प्राणैः क्षुत्पीडितो व्रती॥ २५
"व्रती मूर्छागतं क्षीणं मुमूर्षुं क्षुत्प्रपीडितम्। पाययित्वा घृतक्षीरं रक्षेद्दत्वा फलानि च॥
"अहोरात्रं च यो नित्यमेतस्थं परिपालयेत्। पयोमूलफलं दत्वा विष्णुलोकं व्रजेत सः॥
"एवं मासोपवासस्थमारूढं प्राणसंशये। परीक्षेद......ब्राह्मणाज्ञया॥
"नैते व्रतं विनघ्नंति हविर्विप्रानुमोदितम्। क्षीरोदधि गुरोराज्ञा अपो मूलफलानि च॥
"एवं कृत्वाऽभिरक्षेत सगुडं पायसं तथा। पायसेद्रक्षितो यस्मात्समाप्नोति पुनर्व्रतम्॥ ३०
"अथ विष्णुव्रतं विष्णुर्दाता विष्णुर्व्रती तथा। सर्वं विष्णुमयं ज्ञात्वा व्रतस्थं क्षीणमुद्धरेत्॥
"यदा मुमूर्षुर्निश्चेष्टं परिग्लानोऽतिमूर्छितः। तदा समुद्धरेत्क्षीणमिच्छंतं विमुखोत्थितम्॥
"परिपाल्य व्रती देहं व्रतशेषं समापयेत्। यथोक्तद्विगुणं तस्य फलं विप्रमुखोदितम्॥
"इन्द्रियार्थेष्वनासक्ता सदैव विमला मतिः। परितोषयतो विष्णुं नोपवासो जितात्मनाम्॥

---

* एवं मूले।

"किं तस्य बहुभिस्तीर्थैः स्नानहोमजपव्रतैः । येनेंद्रियगणो घोरो निर्जितो दुष्टचेतसा ॥
"जितेंद्रियः सदा शांतः सर्वभूतहिते रतः । वासुदेवं नरो नित्यमक्लेशं कर्तुमर्हति ॥
"कृत्वा न्यूनं यथोक्तं तु वैष्णवं पुरुषो व्रतम् । विष्णुलोकमवाप्नोति पुनरावृत्तिदुर्लभम् ॥
"ये स्मरंति सदा विष्णुं विशुद्धेनांतरात्मना । यं प्रयांति भयं त्यक्त्वा विष्णुलोकमनामयम् ॥
५ "विभाते चार्धरात्रे च मध्याह्ने दिवसक्षये । अच्युतं ये कीर्तयंति ते तरंति भवार्णवम् ॥
"आनंदितो वा दुःखार्तः क्रुद्धः शांतोऽथवा हरिम् । योऽनुकीर्तयते विष्णुं स गच्छेद्वैष्णवीं पुरीम् ॥
"गर्भजन्मजरारोगदुःखं संसारबंधनैः । विसर्जयेन्नरो नित्यं वासुदेवमनुस्मरन् ॥
"स्थावरे जंगमे चाप्सु स्थूले सूक्ष्मे शुभाशुभे । विष्णुं पश्यति सर्वत्र यः स विष्णुः स्वयं नरः ॥
"सर्वं विष्णुमयं ज्ञात्वा त्रैलोक्यं सचराचरम् । यस्य शांता मतिस्तेन पूजितो गरुडध्वजः ॥
१० "इति कल्पानुकल्पानां व्रतानामुत्तस्य च । विष्णुलोकमवाप्नोति प्रसादाच्चक्रपाणिनः ॥
"विधिर्मासोपवासस्य यथावत्परिकीर्तितः । सुतस्नेहान्मुनिश्रेष्ठ सर्वलोकहिताय च ॥
"कृत्वा श्रुत्वा चरेद्भक्त्या नरो विष्णुपुरीं व्रजेत् । नाभक्ताय प्रदातव्यं न देयं दुष्टचेतसे" ॥

**इति विष्णुरहस्ये मासोपवासव्रतम् ।**

"आज्येनैव हि शालाग्नौ जुहुयाद्व्याहृतीः पृथक् । श्राद्धं कुर्याद्व्रतांते च गोहिरण्यादि दक्षिणाम् ॥
१५ "स्त्रीणां होमो न दातव्यः पंचगव्यं तथैव च । **पराशरः**

"स्त्रीशूद्रस्य विशुद्ध्यर्थं प्राजापत्यं समाचरेत् । पंचगव्यं च कुर्वीत स्नात्वा पीत्वा शुचिर्भवेत् ॥"
स्त्रीशूद्रयोः पंचगव्यस्य विहितप्रतिषिद्धत्वाद्विकल्पः । **जाबालेन** शालाग्नौ होमं विधाय 'स्त्रीणां होमो न दातव्य' इति निषेधात् । गृह्याग्नावेव होमनिषेधः । ततश्च स्त्रीशूद्रयोरपि ब्राह्मणद्वारा लौकिकाग्नौ भवत्येव । अयं च होमांगहोमः । न तु कृच्छ्रप्रत्याम्नायभूतप्रधानहोमः ।
२० "आरंभे सर्वकृच्छ्राणां समाप्तौ च विशेषतः । आज्येनैव हि शालाग्नौ जुहुयाद्व्याहृतीः पृथगिति" **जाबालेन** विशेषोऽभिहितः । कृच्छ्रप्रत्याम्नायभूतयोस्तु प्रधानयोर्जपहोमयोः स्त्रीशूद्रयोर्नाधिकारः । तथा **चांगिराः**

"तस्माच्छूद्रं समासाद्य सदा धर्मे पथे स्थितम् । प्रायश्चित्तं प्रदातव्यं जपहोमविवर्जितम् ॥"
अत्र शूद्रशब्दः स्त्र्युपलक्षणार्थम् । तयोः समानधर्मत्वात् । **बौधायनः** (ध. सू. ३।८।४)
२५ "अहतं वासो वसानः"

"सावित्रीं व्याहृतीश्चैवं जपेदष्टसहस्रकम् । ओंकारमादितः कृत्वा रूपे रूपे यथा ततः ॥
"भूमौ वीरासने युक्तः कुर्याज्जाप्यं सुसंयतः । आसीनः शल्यविद्धो वा पिबेद्गव्यं पयः सकृत् ॥
"गव्यस्य पयसोऽलाभे गव्यमेव भवेद्दधि । दध्नोऽलाभे भवेत्तक्रं तक्राभावे तु यावकम् ॥
"एषामन्यतमं यत्तु उत्पद्येत [१]च तत् भवेत् ।" शल्यविद्धो वेति वाशब्द उपमार्थे । शल्यविद्ध इव निश्चलः सन्नासीनः पयः पिबेदित्यर्थः । ये तु प्राणाग्निहोत्राधिकारिणस्तेषामपोशनकर्मानंतरं प्राणाहुतयोऽपि पंचभिर्ग्रासैर्भवंति । तत्र पूर्वोक्तप्रणवगायत्र्याद्यन्यतमैर्मंत्रैर्ग्रासानाभिमंत्र्य

१ ख—न च ता भवेत् ।

प्राणाय स्वाहेत्यादिभिर्मन्त्रैः प्राणाग्नौ होमः कार्यः । यदा त्वेकद्वित्रिचतुरो बाधास्तत्र **बौधायनोक्तो** विशेषो ग्राह्यः । तद्यथा । "अश्नीयात्प्राणायेति प्रथमामपानायेति द्वितीयां व्यानायेति तृतीयामुदानायेति चतुर्थीं समानायेति पंचमं । यदा चत्वारस्तदा द्वाभ्यां प्रथमं यदा त्रयस्तदा द्वाभ्यां द्वाभ्यां पूर्वौ यदा द्वौ तदा द्वाभ्यामेवोत्तरमेकं सर्वैरिति" । अस्यार्थः । यदा चत्वारो ग्रासा भक्ष्यन्ते तदाऽद्यद्वितीयाभ्यां प्रथमं ग्रासं ग्रसेत् । तृतीयेन द्वितीयम् । चतुर्थेन तृतीयम् । पंचमेन चतुर्थम् । यदा त्रयस्तदाऽद्यद्वितीयाभ्यां प्रथमं तृतीयचतुर्थाभ्यां द्वितीयं पंचमेन तृतीयं । यदा द्वौ तदादितास्त्रिभिः प्रथममग्रिमाभ्यां द्वितीयं यदैकस्तदा सर्वैस्तदास इति ॥ ३२५ ॥

## याज्ञवल्कीये ३२६ श्लोकः ।

सौरिभिरुपयन्नयेत्यादिक्रग्भिः । **तेनैव** । **मनुनैव** । न्यूनतामंगेषु निराचष्टे । **एतानि** मि. पृ. ३४० **चेति** । तत्फलितमाहाभ्युदेति । सिते सति दशस्थानान्याह । **भस्मेति** । पूर्वेद्युर्निशामुखे पर्षदुपदिष्टाविधिना संकल्प्य परेद्युस्त्रिषस्तवैति स्नानं प्रतिहोमाद्यंगकलापसहित- मि. पृ. ३४१ मनुतिष्ठेदित्यर्थः । अत्र मानमाह । **ग्रामादिति** । **निवृत्तिः** पापात् । **अनुकीर्तनं विष्णोः** ॥ ३२६ ॥

## याज्ञवल्कीये ३२७ श्लोकः ।

**उक्तेति** बहुव्रीहिः । पौनरुक्तं परिहरति । **दुरितमिति** । निरपेक्षत्वे चांद्रायणांशे मानमाह । **गौ तेति** । तत्कृच्छ्रातिकृच्छ्रे सूचितस्यानुषंगोत्र अग्रेपि । अत एवाह । **केवलेति** । **गवामिति** । अत्र व्रतचतुष्टयं भिन्नं । **तेनैव** । **मनुनैव** । इह शास्त्रे । मूलादितात्पर्यार्थमाहै**तानि** मि. पृ. ३४२ **चेति** । विशेषमाह । **तथेति** । **तेनैव गौतमेनैव** । तत्वमुपपादयति । **न चेति** । न हीत्यर्थः । उपसंहरति । **किंचिद्वक्तु** । **तस्मादिति** । तथा च बाध्यबाधकभावे भौतिभावः । तमेव योजनाप्रकारमाह । **तत्रेत्यादिना** । **तत्र** तेषां मध्ये । **तावंत्यः** षष्ट्याधिकशतत्रयमिताः । **तुल्यं** संपूर्णम् । इदमपि तावदेव । तदसंभव आह । **मूराशीर्थमिति** । निष्कं सुवर्णाश्चत्वारः । इदमपि तावदेव उक्तयमगौतमादित एव तावंतः धेनुमिताः । कृच्छ्रः प्राजापत्यं । **उदवासः** उदकवासः । स चाहोरात्रं । विरोधं परिहराति । **यत्त्विति** । नानुकण्य इत्याह । **न पुनरिति** । **वेदपारायणं** संहितामात्रपारायणम् । अत्र विधिरुच्यते । स्थण्डिलं कल्पयित्वाऽग्निमुपसमाधाय संपरिस्तीर्याज्येनैताभ्यो देवताभ्यो जुहोति । अग्नये सोमायेंद्राय विश्वेभ्यो देवेभ्य ऋषिभ्यां ऋग्भ्यो यजुर्भ्यः सामभ्यः श्रद्धायै प्रज्ञायै मेधायै धारणायै श्रियै ह्रियै सावित्र्यै सवित्रे प्रजापतये कांडऋषये सोमाय कांडऋषये अग्नये कांडऋषये विश्वेभ्यो देवेभ्यः कांडऋषिभ्यः सांहितीभ्यो देवताभ्य उपनिषद्भ्यो याज्ञिकीभ्यो देवताभ्य उपनिषद्भ्यो वारुणीभ्यो देवताभ्य उपनिषद्भ्यो हव्यवाहाय विश्वेभ्यो वारुणेभ्योऽनुमत्यै स्विष्टकृते च पृथक् पृथक् स्वाहाकारेण हुत्वा व्याहृतिभिश्च पुनः परिषिंचति समाप्ते चैता यजुषा तर्पयंति । एवमृग्वेदस्य

१ ख-बौधायनोक्तो ।

कांडऋष्यादि वर्जमास्विष्टकृतस्तेषां स्थाने शतर्चिभ्यो माध्यमेभ्यो गृत्समदाय विश्वामित्राय वामदेवाय यात्रये भरद्वाजाय जामदग्न्याय गौतमाय वसिष्ठाय प्रगाथेभ्यः क्षुद्रसूक्तेभ्यो महासूक्तेभ्यो महानाम्नीभ्य इति। ततो वेदादिमारभ्य संततमधीयीतेत्याह भगवान्बौधायनः।

इति वेदपाराणविधिः।

---

५ **अथ वेदपारायणे कलशप्रतिष्ठापनादिप्रकारः।**

"तीर्थे देवालये गेहे प्रशस्ते सुपरिष्कृते। कलशं सुदृढं तत्र सुनिर्णिक्तं विभूषितम्॥

"पुष्पपल्लवमालाभिः कुंकुमैश्चंदनादिभिः। मृत्तिकायवसंमिश्रा वेदिमध्ये न्यसेत्ततः॥

"पंचाशद्भिः कुशैः कार्यो ब्रह्मा पश्चात् मुखस्थितः। स्नापितः स्थापितः कुंभे चतुर्बाहुश्चतुर्भुजः॥

"वत्स जान्वाकृतिं वेदमुत्तराग्रैः कुशैः कृतम्। ब्रह्मोपदाने दत्वा तं ततः स्वस्त्ययनं पठेत्॥

१० "प्रतिष्ठां कारयेत्पश्चात्पूजाद्रव्यमथोच्यते।

"यज्ञोपवीते नैवेद्यवस्त्रचंदनकुंकुमैः। स्रक्धूपदीपतांबूलैरक्षतैश्च पितामहम्॥

"ब्रह्मजज्ञानमिति वा गायत्र्या वा प्रपूजयेत्। उपाध्यायं च संपूज्य यथापाठं पठेत्ततः॥

इति वेदपारायणे कलशप्रतिष्ठादिप्रकारः।

---

**अथाऽनश्नन्पारायणविधिः।**

१५ अथातोऽनश्नन्पारायणविधिं व्याख्यास्यामः। आसमाप्तेर्नाश्नीयाद्यथाशक्ति वाऽऽपः पयः फलान्योदनं वा हविष्यमात्रपन्नच्यभुक्त्वा तदा शेषमधीयीत। ग्रामान्प्राचीमुदीचीं वा दिशमुपक्रम्याऽग्निमुपसमाधाय परिस्तीर्येध्मं प्रदायाज्येनैताभ्यो देवताभ्यो जुहोति। अग्नये सोमायेंद्राय प्रजापतये बृहस्पतये विश्वेभ्यो देवेभ्यो ब्रह्मणे ऋषिभ्य ऋग्भ्यो यजुर्भ्यः सामभ्यः श्रद्धायै मेधायै प्रज्ञायै धारणायै सदसस्पतये अनुमतये श्रियै ह्रियै सावित्र्यै सवित्रे प्रजापतये
२० कांडऋषये सोमाय कांडऋषऋषयेऽग्नये कांडऋषये विश्वेभ्यो देवेभ्यः कांडऋषिभ्यः सांहिर्तिभ्यो देवताभ्य उपनिषद्भ्यो याज्ञिकीभ्यो देवताभ्य उपनिषद्भ्यो वारुणीभ्यो देवताभ्य उपनिषद्भ्यो हव्यवाहनाय विश्वेभ्योऽरुणेभ्योऽनुमत्यै स्विष्टकृते च पृथक् स्वाहाकारेण हुत्वा व्याहृतीभिश्च पुनः परिषिंचति समाप्ते चैता यजुषा तर्पयति। एवमृग्वेदिनां कांडऋष्यादिवर्जमास्विष्टकृतस्तेषां स्थाने शतर्चिभ्यो माध्यमेभ्यो गृत्समदाय विश्वामित्राय वामदेवात्रये भर-
२५ द्वाजाय जामदग्न्याय गौतमाय वसिष्ठाय प्रगाथेभ्यः क्षुद्रशक्तेभ्यो महासूक्तेभ्यो महानाम्नीभ्य इति। ततो वेदादिमारभ्य संततमधीयीत। यदंतरा विरमेत् त्रीन् प्राणायामानायम्य प्रणवं वा प्रविधाय यावत्कालमधीयीत ततः सर्वं निशो निशांतरसंग्रामारण्यसलिलं लोप्य परिदध्यात्। आदावंते च ब्राह्मणभोजनं दक्षिणादानं च दद्यात्। य एतेन विधिना वेदमधीयीत स ततः पूतो वेदो भवति मनःशुद्धिश्च भवति द्वाभ्यां पारायणाभ्यां ऋग्भिश्चाभोजन इहाधीते। अनृतेभ्यः
३० प्रमुच्यते त्रिभिर्बहुभ्यः पतनीयपातकेभ्यः शूद्रायां रेतः सिक्त्वा गंगाप्सु निमग्नश्च भवति चतुर्भ्यः शूद्रान्नभोजनात्तत्सेवनात्तत्स्त्रीसेवनाच्च पंचभिरयाज्ययाजनात्पूतो भवति। अग्राह्यग्रहणात् ग्राह्याग्रहणात्। असत्योपासनाच्च षड्भिर्ब्राह्मणस्य लोहितकरणात्स्त्रीलोहितकरणात् पशुहनना-

त्सुवर्णस्तेयाच्चातिसंप्रयोगाच्च सप्तभिः प्राजापत्य इहानाचरणाद्यज्ञोपवेधनाच्च । अष्टभिश्चांद्रायणस्या-
नाचरणाद्गुरुतल्पगमनाद्रजस्वलागमनाच्च । नवभिः सुरापानादिसोमपानात् द्वादशभिः पूर्व-
जन्मेहजन्मकृतैः सर्वपापैर्विप्रः प्रमुच्यते । स्वर्गं गच्छति पितृंश्च स्वर्गलोकं गमयति अग्निष्टोमादी-
न्क्रतून्यजति तैः क्रतुभिरिष्टं भवति ।

वेदाध्यायी सदैव स्यादपाप्मा सत्यवाक्छुचिः । यं यं कामयते कामं तं तं वेदेन साधयेत् ॥ ५
असाध्यं नास्ति यत्किंचिद्ब्राह्मणो हि फलं महत् । ब्राह्मणो हि फलं महदिति । समाप्ते
चैता यजुषा तर्पयतीति समाप्ते समाप्ते यजुर्वेदपारायणे समाप्ते । एता देवताः पूर्वोक्ता अग्नि-
सोमाद्याः । यजुषा तर्पयति यजुर्वेदेन सह तर्पयतीति यजुर्वेदपारायणे तस्य वेदस्य प्राधान्य-
मुच्यते । अथवा भूरादिव्याहृतिचतुष्टयात्मकं यजुःशब्देन गृह्यते । तेनैतदुक्तं भवति । नाशुचि-
हेतुभूते इत्यर्थः । नांतरा व्याहरेदिति । उपक्रांते वेदपारायणे मध्ये न व्याहरेन्नाध्यापयेत् । १०
तथा लौकिकवचनमपि न ब्रूयात् । विदितनित्यनैमित्तिककर्मानुपयुक्तमुक्तिं न कुर्यादित्यर्थः ।
निशो निशांतरं संग्रामारण्यसलिलं लोप्य परिदध्यादिति । लोप्य द्वित्वापरिहाथवर्जयित्वेति यावत् ।
परिदध्यात्समापयेत् । निशांतरं निशीथा संध्या वा । सलिलं वृष्टिरुदकसमीपं भूमिका वा ।
निशादिकालात् देशांश्च वर्जयित्वा समापयेदित्यर्थः । स ततः पूतो वेदो भवतीति । वेदो भवतीति
वेदात्मको भवति । उत्कृष्टज्ञानवान् भवतीत्यर्थः । द्वाभ्यां पारायणाभ्यां ऋषिश्चेति । ऋषिः १५
पावमानीभिः पारायणद्वयं पावमान्यश्च मिलित्वोक्तफलाय कल्पंत इत्यर्थः । एवमुत्तरत्रापि पारायण-
त्रयगंगास्नानं च मिलित्वा साधनं । निमज्जंश्च भवति । पूतो भवतीत्यर्थः । प्राजापत्यहाना-
चरणं प्रक्रांतप्राजापत्यानामननुष्ठानम् । एवं चांद्रायणस्यानाचरणम् । यज्ञोपवेधनम् । यज्ञविनाशः ।

इत्यनश्नन्पारायणविधिः ।

आहिनेति प्राद्वादश वा । **ब्रह्मपुराणमाह** । **गवामिति** । भोज्याः । पातकेष्टिस्तथैव च । २०
अन्या वा पावमानेष्टिः समान्याहुर्मनीषिण इति गायत्रीदशसहस्रप्रभृतयः सप्तप्राजापत्यप्रत्याम्नाया
इत्यर्थः । तत्समेषु पादोनमाहातीति । अतिदिष्टेष्वर्धमाह । **पातकेष्वेवाह**। **त्रैमासिकेत्यादि-
त्रयामिति** । तथा च **धर्मविवृतौ**

"चांद्रायणं मृगारेष्टिः पवित्रेष्टिस्तथैव च । मित्रविंदापशुश्चैव कृच्छ्रत्रयमथापि वा ॥

"तिलहोमायुतं चैव वराकद्वयमेव च । गायत्र्या लक्षमेकं तु सामान्याहुर्मनीषिण" ॥ इति । २५
त्रिषयामति तदसमर्थस्य प्रत्याम्नायाधिक्यमिति भावः । उत्तरार्द्धे तु अतिकृच्छ्रस्य द्वादशदिनसाध्यस्य
मासाचरणेन तेषामेव संभवात् पक्षे **मानवे** पक्षे **मौले** यथथहोरात्राद्विर्भोजनमध्ये भोजनत्रयनिवृत्तौ
सार्द्धोपवासः प्राप्नोति तथापि दिनत्रयेऽपि सकृत्भोजनादिकोपवासपरिकल्पनैव युक्तेत्याहै**कोपेति** ।
अयाचितेऽपि द्विवैकभोजनमिति पक्षेणाह । **सायंतनेति** । **गोवधेति** । व्रतचतुष्टयं प्राक्प्रदर्शितम् ।
तत्राज्ञानतो जातिमात्रब्राह्मणसंबंधिगोमात्रवधे त्रिरात्रमुपोष्य दश गाव एको वृषभश्च निष्कार्थे देयाः। ३०
त्रिरात्रोपवासाशक्तौ पूर्वोक्ता गावो वृषभश्च निष्कार्थं च देयम् । कामतश्चेद्द्विगुणम् ।

अज्ञानतः क्षत्रियसंबंधिगोमात्रव्यापादने पंचगव्यं पिबेत् । गोघ्नो मासमासीत संयतः गोष्ठे शयो
गोनुगामी गोप्रदानेन शुद्ध्यतीति । अनेन प्रकारेण मासं पंचगव्यव्रतं चरित्वांऽते गां दद्यात् । एतत्

---

१ ख–च्चातिसंप्रयोगाच्च ।

करणाशक्तौ व्रतस्थात्यंतक्लेशयुक्तत्वेन व्रतप्रत्याम्नायत्वेनाष्टौ गावः । एकां व्रतांते चेत्येवं नेवधनवो देयाः । "अष्टौ चांद्रायणं देयाः प्रत्याम्नायविधौ सदेति" उक्तेः । बहुक्लेशसाध्यत्वान्माससाध्यत्वाच्च समानविषयत्वेन युक्तमष्टधेनुपरिकल्पनम् । कामतश्चेत् षोडश धेनवः । एका च दक्षिणात्वेनेति सप्तदश गावः ।

५ अज्ञानतो वैश्यसंबंधिगोमात्रव्यापादने मासमतिकृच्छ्रं कुर्यात् । एतदाचरणाशक्तौ द्वादशदिनसाध्यपाणिपूरणान्नभोजनयुक्तातिकृच्छ्रप्रत्याम्नायत्वेन गोद्वयदानस्यातिकृच्छ्रप्रत्याम्नायप्रकरणं दर्शितत्वादत्र मासातिकृच्छ्रं पंच गावो भवंति। किंचित् भोजनत्रययुक्तस्य द्वादशदिनसाध्यातिकृच्छ्रस्य करणाशक्तौ तिस्रो गावो विहिता इति माससाध्ये कृच्छ्रे सप्त गावो निष्कार्द्धं च देयम् । उभयत्र कामतो द्वैगुण्येन क्रमेण दश पंचदश भवंति । गवामभावे मासप्राजापत्यातिकृच्छ्रप्रत्याम्नाय-
१० प्रकरणोक्ताः प्रत्याम्नायाः शक्त्याद्यपेक्षया कर्तव्याः ।

अज्ञानतः शूद्रस्वामिगोमात्रस्यासावने मासप्राजापत्यविधानात्तदशक्तौ गोद्वयं निष्कार्द्धत्वं चेयम् । कामतः पंच गावः । तदशक्तावितरे पूर्वोक्ताः प्रत्याम्नाया इति । मासोपवासे तु बहुवासतुल्यप्राजापत्यप्रत्याम्नायत्वेन "प्राजापत्ये तु गामेकामिति" विधानात् । पंच गावो भवंति जपनियमाद्यनेकेतिकर्तव्यतोपेतमासव्रते तु क्लेशाधिक्यौपेतचांद्रायणव्रत इवाष्टौ गावः कल्प्याः ।
१५ मीमितिमासं पंचगव्याशनेऽप्येवमेव । पराकेति । पराकाद्यशक्तौ प्राजापत्यत्रयं सांतपनाशक्तौ सार्द्धं प्राजापत्यमित्यर्थः। उपसंहरति । एतदिति । विरोधं परिहरति । यत्पुनरिति । एवमग्रेपि । क्विनिगमनाविरहा एकत्र मासीति जलमुपपादयति । वचेति । ततस्त्रीगमनविषये इत्यर्थः । विशेषमाह । यस्त्विति । स्मृत्यं चतुर्विंशतिमतं । कृच्छ्रं प्राजापत्ये । सर्वत्रेति । तथा च वृत्तिर्दिनं पंच-द्वितीये पंचदशतृतीये त्रिंशत् । तप्तकृच्छ्रे चतुर्थे चत्वारिंशत् । पंचमे षष्टिः षड्विंशतिः सप्तमे चतु-
२० र्विंशतिरिति भावः । आद्ये आहाऽत्र चेति । आद्ये इत्यर्थः । द्वादशेति । समुदितस्थाने द्वादश न प्रतिदिनं समानीत्युक्तेरिति भावः ।

**अथ तीर्थप्रत्याम्नायाः** । अत्र समूलत्वप्रदर्शनार्थमादित्यपुराणोक्तं किंचिल्लिख्यते "पांडवे राज्यलोभाय दुरितोपशमाय च । श्रीकृष्णनारदव्यासश्रीकंठेंद्राजरोमस्थैः ( ? ) ॥

"मार्कंडेयं पुलस्त्याय सप्तर्षिप्रमुखैस्तथा । द्वादशद्वादशाब्दानि कृच्छ्राण्याद्यापि भक्तितः ॥
२५ तीर्थैरकुर्वन्नि"त्यादिपुराणे श्रूयते कथेतिस्मृतिसंग्रहस्मृत्यर्थसारादिभिरुक्तप्रकारेणास्माभिरपि लिख्यते । तत्र संकल्पपूर्वकं पद्भ्यां षष्टियोजनागतस्य भागीरथ्यां स्नानं षडब्दकृच्छ्रसमं । अत्र एकैकस्य यात्रायोजनस्य वृद्धावर्द्धकृच्छ्रवृद्धिः परिकल्पनीया । षष्टियोजनगतस्य भागीरथ्यां विध्युक्तस्नानेनैकः कृच्छ्रो भवति । मध्ये चैत्यपर्वतादिभिर्व्यवधानं भवति । पर्वताद्यभावे मार्गस्यादुर्गमत्वे च योजनागतस्य दुर्गमते अर्द्धयोजनादागतस्येत्येवं कल्पनीयम् । पूर्वं सप्तमातृका
३० राक्षसभयान्नद्यो जाताः । गते च भवे पुनर्देवता अभवन् । ततो नद्यः शुष्काः तेषु स्नानेषु भागीरथी सममभवत् । तासु विष्णुगंगादिसप्तमातृकानामसु गंगासु स्नानं षष्टियोजनदागतस्य षडब्दकृच्छ्रतुल्यं प्रयागे गंगाद्वारे गंगासागरसंगमे च द्विगुणं यमुनायां विंशतियोजनागतस्य स्नानं षब्दकृच्छ्रसमम् । मथुरायां द्विगुणं सरस्वत्यां चत्वारिंशद्योजनागतस्य चतुरब्दसमम् । प्रभासे

द्वारवत्यां च द्विगुणम् । यमुनासरस्वत्योर्यात्रायोजनवृद्धौ पादकृच्छ्रवृद्धिः । ह्रासे पूर्वोक्तरीत्या कल्प्यं । दृषद्वतीप्सु शूद्राविपाशावितस्ताशरावतीमरुद्वृधामधुमतीपयास्विनीघृतवतीत्यादिदेवनदीषु स्नानं त्रिंशत्कृच्छ्रसमं पंचदशयोजनागतस्य । चंद्रभागावेत्रवतीसरयूगोमतीदेविकाकौशिकीनित्यजलामंदाकिनीसहस्रवक्त्रापौनःपुण्यापूर्णपुण्याह्वयागंडकीवारुण्यादिदेवनदीषु पंचदशयोजनागतस्य पंचदशकृच्छ्रसमम् । एतासु महानदीषु परस्परासंगमे योजनागतस्य ५
कृच्छ्रत्रयफलं समुद्रगामहानदीभिः सह पूर्वोक्तवेदवेदेव नदीनां संगमे योजनागतस्य षट्कृच्छ्रफलम् । अनुक्तस्थलेषु यात्रायोजनसंख्यया कृच्छ्रसंख्या विज्ञेया । महानदेषु महानद्यर्द्धफलम् । शोणमहानदे तु गंगार्धफलम् । नदेषु नद्यर्धफलम् । गणमहानदीं । मेरुरामेश्वरं पद्मनाभं श्रीरंगं पुरुषोत्तमम् । कुरुक्षेत्रं नैमिषं बदर्याश्रमं । पुण्यारण्यं केदारं श्रीशैलं महालयं रुद्रकोटिपुष्करं नर्मदामात्स्यनकेश्वरं* कुब्जाप्रभासं । कोकामुरं १०
च विजयेशं पुरींद्रपंचनदं गोकर्णं मथुरामयोध्यां द्वारवतीं गयां कांचीं शालग्रामं शंबलग्राममित्यादि मुक्तिक्षेत्राणि संसेव्य गंगासमं फलं लभेत् । चतुर्विंशति योजनागतस्य ताप्यामष्टकृच्छ्रसमम् । तथा पयोष्णायामपि । अत्र संगमे द्विगुणम् । षष्टियोजनागतस्य गोदानं त्र्यब्दकृच्छ्रसमम् । प्रणीतायामष्टयोजनांतर्गतस्याष्टकृच्छ्रफलम् । पूर्णायां तदर्धकृच्छ्रं वेणायां योजनसंख्यया कृच्छ्रसंख्या । ककुद्मिनीसंगमे दशयोजनागतस्य पंचदशकृच्छ्रफलम् । मलापहारिण्यां योजनसंख्यया कृ सख्या । १५
तथा निवृत्यामपि । गोदावर्यां यात्रायोजनवृद्धौ पादकृच्छ्रवृद्धिः । सिंहे गुरौ सर्वत्र जान्हवीसमा । कन्यास्थे गुरौ कृच्छ्रं । वेण्यायां सर्वत्र जान्हव्यर्द्धम् । तुंगभद्रायां तुलास्थे रवौ कर्कटस्थे च गंगार्द्धम् । कृष्णवर्णायां मलापहारिणीसंगमे त्रिंशद्योजनागतस्य त्रिकृच्छ्रसमम् । भीमरथ्यासंगमे द्विगुणम् । तुंगभद्रासंगमे त्रिगुणम् । निवृत्तिसंगमे चतुर्गुणम् । ब्रह्मेश्वरे पंचगुणम् । मल्लिकार्जुनसमीपे पातालगंगायां षड्गुणम् । कावेर्यां महानद्यां दशयोजनागतस्य पंचदशकृच्छ्रफलम् । द्वादशयोजनागतस्य २०
द्वादशकृच्छ्रसमम् । ताम्रपर्णीकीर्तिमलापयस्विदादीषु सत्यादिपादोद्भूतावद्र्यो योजनमविच्छिन्नप्रवाहरूपास्वदैर्घ्यानुसारेण योजनागतस्यैकद्वित्रिकृच्छ्रफलप्रदाः । विंध्यश्रीशैलोद्भवा द्विगुणाः । हिमाचलोद्भूतास्त्रिगुणाः । स्मृतिपुराणादिषु "यथाकथंचिदनुकुल्या योजनागतस्य त्रिरात्रफलदाः अल्पनद्यः कृच्छ्रफलप्रदाः । महानद्यः कृच्छ्रत्रयफलदाः । एकयोजनगादिषड्योजनगताः । स्रवंत्यः कुल्याः । तास्ता द्वादशयोजनगता अल्पनद्यः । चतुर्विंशतियोजनगता नद्यः । उपवाससहितं २५
महानदीस्नानं योजनादर्वागपि कृच्छ्रसमम् । कुत्सितनाम्न्यो नद्यः पापनद्यश्च वर्ज्याः । समुद्रस्नानं सर्वत्र दर्शे कार्यम् । देवतासमीपे महानदीसंगमेषु च सर्वदा कार्यम् । पंचदशद्योजनागतस्य समुद्रस्नानं पंचदशकृच्छ्रफलम् । प्रसिद्धदेवतासमीपे द्विगुणम् । तत्र स्नात्वा तद्देवताद्यशिनं तु त्रिगुणं त्रिंशद्योजनं दूरात्सेतुगमनं त्रिंशत्कृच्छ्रसमम् । तत्र स्नात्वा रामेश्वरदर्शने द्विगुणम् । विंध्यदेशजानां सेतुरामेश्वरे जान्हव्यास्त्रिगुणं फलम् । तथैव जान्हवी केदारयोरपि । दक्षिणदेशीयानां ३०
जान्हव्यां षड्गुणम् । गंगादेशीयानां सेतुरामेश्वरे षड्गुणम् । सर्वत्र भाषाभेदपर्वतादिभिर्व्यवधाने मार्गस्य दुर्गमे चोक्तयोजनसंख्यातो योजनसंख्याह्रासेन कृच्छ्रादिफलानि कल्प्यानि प्रयासाधिक्यात् । सर्वे वैष्णवमाहेरसौश्वरशाक्तेषु पीठेषु दर्शनेन योजनसंख्यया कृच्छ्रसंख्या । प्रख्यातेषु द्विगुणम् । तीर्थतीरपितृव्यस्थितस्यापि योजनपारिमितात् प्रदेशादागमनमंतरेणापि विधिवत्स्नात्वा धौतं वासः

* एवं मूले ।

परिधाय शिरोरुहेष्वनार्द्रेषु सत्सु पुनः स्नातव्यम् । एवं द्वादशभिः स्नानैरेकः कृच्छ्रो भवति । परार्थगंतुः षोडशांशफलम् । प्रसंगगंता अर्द्धफलं लभते । अनुषंगेण तीर्थे प्राप्य स्नाने स्नानफलमेव लभते न यात्राफलम् । पितृपितामहभ्रातृमातामहपितृव्यमातुलश्वशुरपोषकार्थं गुर्वाचार्योपाध्यायार्थं तेषां य.त्रार्थं मातृष्वसृपितृष्वस्रर्थं स्नात्वा स्वयमष्टमांशं लभते साक्षात्पित्रोरर्थे कुर्व-
५ न्पुत्रश्चतुर्थांशं लभते दंपती च सपत्न्यश्च मिथोर्द्धफलं लभंते । देवलः

"अभिसंगम्य तीर्थानि पुण्यान्यायतनानि च । प्रमुच्यते नरः पापाद्ब्राह्मणांश्च तपस्विनः ॥
"सर्वाः समुद्रगाः पुण्याः सर्वे पुण्या नगोत्तमाः । सर्वमायतनं पुण्यं सर्वे पुण्या वनाश्रया "॥इति।
"अर्थिना तत्फले ह्रासः शुश्रूषाफलमीदृशम् । कर्कादौ मासद्वये निरंतरं रजस्वला नद्यः । तास्वपि गोमतीचंद्रभागासिंधुनर्मदासरय्वश्च त्रिरात्रं । वापीकूपादिषु स्थितपुराणोदकेषु त्रिरात्रं ।
१० सरस्वतीगंगायमुनादयो न कदापि रजस्वलाः । वाराणस्यामगणितं फलम् । तस्यां महापातकं न प्रविशति । कुल्यास्त्रिरात्रफलदा अल्पनद्यः कृच्छ्रदाः । नद्यो द्विकृच्छ्रदाः । महानद्यस्त्रिकृच्छ्रदाः । एकयोजनगंगादिषड्योजनगांताः स्रवंत्यः कुल्याः । ततो द्वादशयोजनगांता अल्पनद्यः । ततश्चतुर्विंशतियोजनगता नद्यः । तदधिकगमहानद्यः समुद्रगाश्च । उपवाससहितं नदीस्नानं कृच्छ्रसमं योजनादर्वागपि । शुनीगर्दभीचांडालीशूद्राकष्टादिनामकनद्यः पापनद्यश्च वर्जिताः । सर्वत्र समुद्र-
१५ स्नानं दर्शे कार्यं । देवतासमीपसरिन्नदीसंगमेषु सदा कार्यं । समुद्रस्नाने पंचदशयोजनागतस्य पंचदश कृच्छ्राणि । एवमधिकयोजनागमनेऽधिकमूह्यं । तथा तीर्थेषु स्नानमपि कृच्छ्रादिफलकम् । तथा च जमदग्निः

"तीर्थेषु पादकृच्छ्रं स्यान्नद्यां कृच्छ्रफलं लभेत् । द्विगुणं तु महानद्यां संगमे त्रिगुणा भवेत्॥"
इति । नारदः

२० "अतिकृच्छ्रः पर्णकृच्छ्रः सौम्यकृच्छ्रश्च कृच्छ्रकः । महासांतपनं शोध्ये तप्तकृच्छ्रश्च पावनः ॥
"जपोपवासकृच्छ्रस्तु ब्रह्मकूर्चश्च शोधनः । एते व्यस्ता समस्ता वा प्रत्येकं ह्येकतोऽपि वा ॥
"महत्सु पातकेषूपपातकेषु च यत्नतः । कार्याश्चांद्रायणयुता केवला वा विशुद्धये ॥
"उपवासस्त्रिरात्रं वा मासः पक्षस्तदर्द्धकम् । षडहोद्वादशाहानि कार्यं शुद्धिमभीप्सतेति॥"

विश्वामित्रः

२५ "उपपातकयुक्तानामनादिष्टेषु चैव हि । प्रकाशे च रहस्ये च अभिसंध्याद्यपेक्षया ॥
"शक्तिज्ञातिगुणान्दृष्ट्वा सकृद्बुद्धिकृतं लघु । अनुबंधादिकं दृष्ट्वा कल्प्यं सर्वं यथागमम् ॥
"प्रकाश उक्तं यत्किंचिद्विंशो भागो रहस्यके । त्रिंशद्भागः षष्ठिभागः कल्पो जात्याद्यपेक्षयेति॥"
यत्तु बृहस्पतिवचनं "जन्मप्रभृति यत्किंचिदिति" तस्य विषय उक्तः । तत्र पूर्वार्द्धे तन्निवृत्तये इति शेषः ।

३० "द्विजस्याब्धौ तु नौ यातुः शोधितस्याप्यसंग्रहः । अस्य वर्णागनादुष्टैः संसर्गः शोधितैरपि"
इत्यादि तु कलिनिषिद्धमध्ये स्पष्टम् । प्रायश्चित्तेषु वपनं केवलपुण्यार्थिनां तु नेत्युक्तं प्राक् । तत्र विशेषः । "केशानां नास्ति नारीणां वपनं व्रतयज्ञयोः । गोवधादिषु सर्वेषु छेदयेदंगुलित्रयम् ॥
"सधवानां तु नारीणामलंकाराय सर्वदा । केशसंधारणं प्रोक्तं प्रायश्चित्ते द्विजोत्तम ॥

इत्यत्र सधवाशब्दोपादानाद्विधवानां वपनमस्त्येव । नांगुलित्रयप्रमाणेन छेदः । वपनं च दिनत्रयसाध्यव्रते नखच्छेदनमात्रं षड्दिनसाध्ये श्मश्रुणोऽपि नवदिनसाध्ये शिखावर्जं तदूर्ध्वं सशिखम् त्रिषड्दिनयोः । स्त्रीणां नैव तत् । धेनुदानादावप्येवमेव । अस्य नैमित्तिकत्वात्सदा बद्धशिखेनेत्यनेन न विरोधः । " कृच्छ्राण्येतानि सर्वाणि कुर्वीत कृतवापन" इति **विष्णुः** । "द्वादशाहे संपूर्णो वपनमिति" **पैठीनसिः** । **अपरार्के** ५

"उदङ्मुखः प्राङ्मुखो वा वपनं कारयेद्बुधः । केशश्मश्रुलोमनखान्युदक्संस्थानि वापयेत् ।।
"दक्षिणं कर्णमारभ्य कर्मार्थे पापसंचये । शिखाधं नवसंस्कारं शिखाद्यंतं शिरो वपेत् ।।"

पापसंचये तन्निमित्ते प्रायश्चित्ते । संपूर्ण इत्युक्त्या ततो न्यूने न भवति । यत्र च द्वित्रिरात्रादि साध्यकृच्छ्राणामावृत्या द्वादशरात्रसमता तत्रापि वपनमस्त्येव । किंतु अक्षिरोमशिखावर्जं । "अक्षिरोमशिखावर्जमिति" **वशिष्ठोक्तेः** ( २४।५ ) यत्र तु मुंड इत्यादिपदैर्विशेषविधि- १० स्तत्र तथैव वपनं कार्यम् । राजा वेति वाक्ये राजादय उपलक्षणम् । यत्र राजादीनामप्येवं किमुतान्येषामिति । विद्वद्विप्रोते वाक्येनेष्यते सर्वात्मना न विधीयते वपनं किंतु तदभावेऽपि द्विगुणव्रताचरणे शुद्धिरित्यर्थः । इदं च सर्वाधिकृतवर्णसाधारणं विशेषानुक्तेः । कृच्छ्राणामिति तद्विधिवाक्ये निरुपपदकृच्छ्रशब्दोक्तेरिति । **अथ सामान्येन पापनिष्कृतिहेतवः** । तत्र **गौतमबौधायनौ** ( १९।११।१० ) "तस्य निष्क्रियमाणानि[1] जपस्तपो होम उपवासो दानं उप- १५ निषदो वेदांतः सर्वच्छंदः सुसंहितामधून्यघमर्षणं अथर्वशिरो रुद्राः पुरुषसूक्तं राजन्यारोहिणे सामनी बृहद्रथंतरपुरुषगतिर्महानाम्नो महावैराजं महादिवाकीर्त्यं ज्येष्ठसाम्नामन्यतमं बहिः पवमानं कूष्मांडानि पावमान्यः सावित्री चेति पावनानि। पयोव्रतानाशिकफलभक्षता प्रसृतयावको हिरण्य- प्राशनं घृतप्राशनं सोमपानमिति मेध्यानि। सर्वे शिलोच्चयाः सर्वाः स्रवन्त्यः पुण्याह्रदास्तथान्यृषि- निवासा गोष्ठपरिष्कंदा इति देशा। ब्रह्मचर्यं सत्यवचनं सवनेषूदकोपस्पर्शनम् । आर्द्रवस्त्रता अधः- २० शायिता अनाशकता इति तपांसि । हिरण्यं गौर्वासोऽश्वो भूमिः तिला घृतमन्नमिति देयानि । संवत्सरः षण्मासाश्चत्वारस्त्रयो द्वावेकश्चतुर्विंशत्यहो द्वादशाहः षडहस्त्र्यहा अहोरात्रे इति कालाः । एतान्येवानादेशे विकल्पेरन्नेनसि गुरुणि गुरुणि लघुनि लघुनि । कृच्छ्रातिकृच्छ्रौ चांद्रायणमिति सर्व- प्रायश्चित्तमिति" । अस्यार्थः । तस्य पापस्य निष्क्रियमाणानि संशोधकारणानि जपादीनामन्यतम- स्यापि पापापनिर्हणहेतुत्वमस्त्येव । प्रत्येकमसमस्तत्वेन निर्देशात् [illegible] दारण्यकादयो वेदांतः । उपनिषत्वेऽपि बृहदारण्यकादीनां पृथगुपादानं [illegible] । सर्वशाखासु पदक्रमरहिता मंत्रग्रंथाः । सर्वछंदः सुसंहिताः मधुवाता इत्यादीनि यजूंषि मधूनि । 'ऋतं च सत्यं चेति' सूक्तमघमर्षणम् । अथर्वशिरः अथर्ववेदैकदेशः प्रसिद्धः । 'नमस्ते रुद्र मन्यव' इत्यध्यायो रुद्राः । सहस्रशीर्षेत्यध्यायः पुरुषसूक्तम् । राजन्यारोहिणे सामनी 'इंद्रं नरो- नेमधिता हिरण्याय' इत्यस्यामृचि गीयेते । बृहद्रथंतरे 'त्वामिद्धि हवामहे' । 'अभि वा शूर नोनुम' ३० इत्यनयोर्गीतिः पुरुषगीतिः । अहमस्मि प्रथमजा तस्येत्यत्यांगिरसः विदामघवन्नित्याद्या ऋचो महानाम्न्यः । पिबा सोममृतस्येत्येतस्यां गीतं महावैराजम् । विभ्राड्बृहत्पिबतु सोम्यं मध्वि-

---

१ निक्रयणानि इति गौतमीयपाठः ।

त्यस्यां गीतं सामैव दिवाकीर्त्यम् । अच्छादोहाख्यानि सामानि पृष्ठसामानि । उपास्मै गायतेति स्तोत्रं बहिःपवमानम् । यद्देवा देवहेडनमित्यादीनि यजूंषि कूष्मांडानि । स्वादिष्ठया मदिष्ठये-त्याद्या ऋचः पावमानः । सन्दितमयमध्यस्थितयवसाधिता यवागूः प्रसृतयावकः । गोष्ठं प्रसिद्धम् । परिस्कंदानोव्रजनमार्गः । सर्वप्रायश्चित्तं सर्वत्रादेशेऽनादेशे च प्रायश्चित्तमिति । प्रायश्चित्तं च
५ अष्टमीचतुर्दश्योर्न कार्यम् । चतुर्दश्यां संकल्प्यामायां कार्यमिति शिष्टाचारः । तत्र पापं द्विविधम् । रहस्यं प्रकाशं च । कर्तृव्यतिरिक्तैरज्ञानदोषो रहस्यम् । तत्र प्रकीर्णकादिषु रहस्येषु च विंशति-प्राणायामाः । उपपातके तादृशिशतम् । अनुपातके द्विशतम् । अतिपातके त्रिशतम् । महा-पातके चतुःशतम् । सर्वत्राभ्यासे द्विगुणम् । मत्या त्रिगुणम् । मत्याभ्यासे चतुर्गुणम् । यद्वा गायत्र्या लक्षजपो महापापं पादोनलक्षजपोऽतिपापे अर्द्धं लक्षमनुपापे मत्या द्विगुणपादलक्षमुप-
१० पापे तदर्धार्धं । प्रकीर्णकादिषु अन्यान्यपि रहस्यप्रायश्चित्तानि निबंधेभ्य ऊह्यानि । अविद्वान्मुखां-तरेण व्याजात् प्रायश्चित्तं ज्ञात्वा रहश्चरेत् । विद्वांस्तु स्वयमेव दशलक्षगायत्रीजपः प्रायश्चित्तम् ।

"सर्वेषामेव पापानां संकरे समुपस्थिते । दशलक्षं समभ्यस्ता गायत्री पावनं महत् ॥"

इति स्मरणात् । तथा भस्मच्छन्नो भस्मशयनो रुद्रजापी सर्वपापात् मुच्येत । स चैकादश-वारं । अत्र सर्वशब्देन महापापव्यतिरिक्तं ग्राह्यमिति केचिन्महापापान्यपि सर्वशब्देनेत्यपरे ।
१५ पुरुषसूक्तं प्रत्यहं षोडशकृत्वो जपन् मासेन शुद्ध्येत् । अत्राताविशेषानुक्तौ पयःप्रभृतयः शिलो-च्चयादयो मायादयश्च देशकालौ अतिरिक्तेषु व्याहृतिभिराचमनम् । एवं ख्यापनानुतापाध्ययन-तपांस्यपि पापनाशकानि ख्यापनसभासु पुण्यस्थानेषु स्वव्यापकथनपूर्वकमात्मनिंदनं अध्ययनं वेदस्य वेदांतादेश्च उपदिष्टप्रायश्चित्तेषु तु एतदंगं अन्यथा तद्विधिरफलः स्यात् ।

"कृते पापेऽनुतापो वैषम्यपुंसः प्रजायते । प्रायश्चित्तं तु तस्योक्तं हरिं संस्मरणं परम् ॥

२० "प्रातर्निशि तथा संध्या मध्यान्हादिषु संस्मरन् । नारायणमवाप्नोति सद्यः पापक्षयं नरः॥"

इति विष्णुपुराणे

"नारायणपरा वेदा नारायणपराः क्रियाः । नारायणपरो धर्मो नारायणपरा गतिः ॥

"नारायणपरं सत्यं नारायणपरं तपः । नारायणपरो मोक्षो नारायणप[रा] स्तुतिः ॥

"नारायणपरं ज्ञानं नारायणपरं पदमिति" । हरिवंशे । चत्वारिंशे । अत्र केचित्
२५ अनेन च सर्वपापप्रणाशो भवत्येव । इह व्यवहार्यता त्वतिप्रसंगनिवारणाय मन्वादिप्रायश्चित्तरव रागद्वेषादिकलुषहृदयतया तत्राविश्वसतो जनान्प्रति व्यवहार्यतासिद्धये वातः उपदेश इति प्राहुः ।

"गंगास्नानं सर्वविधसर्वपापनाशकं । चांद्रायणसहस्रं तु यश्चरेत् कायशोधनम् ॥

"पिबेत् यश्चापि गंगांभः स्वयौ स्यातां न वा समौ ।

"भवंति निर्विषाः सर्पा यथा तार्क्ष्यस्य दर्शनात् । गंगाया दर्शनात्तद्वत्सर्वपापैः प्रमुच्यते ॥"
३० इत्यादि महाभारतादिवचनेभ्यः न चैतान्यर्थवादाः ।

"स्नानमात्रेण गंगायां पापं ब्रह्मवधोद्भवं । दुराधर्षं कथं वातिचिंतयेद्यो वदेदपि ॥

"तस्याहं प्रवदे पापं कोटिब्रह्मवधा इदम् ।

"स्तुतिवादपि*यमत्वात्कुंभीपाकेषु जायते । आकल्पनरकं भक्तानितो जायेत गर्दभः॥"इति ।

---

* एवं मूले ।

भविष्यकौमार्यादिभ्यः। परं नास्तीत्येवमाह। पितामहः

"सर्वं कृतयुगे पुण्यं त्रेतायां पुष्करं मतम्। द्वापरे तु कुरुक्षेत्रं कलौ गंगैव केवलम्॥"
गंगाकलियुगे स्मृतेति पाठांतरम्।

"यत्रकार्यशतं कृत्वा कृतं गंगावसेचनम्। सर्वं तत्तस्य गंगांभो दहत्यग्निरिवेंधनमि"त्यादि-वचनान्यप्यनुसंधेयानि। कलियुगीयपापनाशसामर्थ्यं गंगाया एव न पुष्करादीनां। कृतादौ तु ५ पापस्याल्पत्वात्तन्नाशसामर्थ्यं तेषामपीति सर्वं कृतयुग इत्यस्य तात्पर्यम्।

## अथ प्रायश्चित्तोपक्रमप्रकारः।

तत्र कर्मविपाकप्रायश्चित्तोपयुक्तं किंचिदुच्यते। तद्यथाह देवलः

"कृच्छ्राणां द्वारको राजा निर्देष्टाधर्मपाठकः। अपराधी प्रयोक्ता च रक्षिता कृच्छ्रपालकः॥"

महापापेषु कृच्छ्राणां प्रायश्चित्तानां दापको राजा भवति। ब्रह्महत्यादिप्रायश्चित्तेषु राज्ञा १० विना द्विजाग्र्यैः प्रायश्चित्तं नोपवर्णनीयमित्यर्थः।

प्रायश्चित्तस्य निर्देष्टा धर्मपाठक इत्युच्यते। यस्मिन्ननुवादकशब्दं लोकाः प्रयुंजते। अंगिराः

"ब्रह्मचर्याश्रमादूर्ध्वं वृद्धा आश्रमिणस्त्रयः। वदेयुस्तस्य ते धर्मान्ये मया परिकीर्तिता"इति।

"वेदविद्याव्रतस्नातः सत्यसंधो जितेंद्रियः। अनेकधर्मशास्त्रज्ञः प्रोच्यते धर्मपाठकः॥

"चातुर्विद्यं विकल्पी च अंगविद्धर्मपाठकः। त्रयश्चाश्रमिणो वृद्धाः पर्षदेषा दशावरा॥ १५

"चतुर्णामपि वेदानां पारगा ये द्विजोत्तमाः। यथाक्रमं विनाप्यंगैश्चतुर्भिधमिति स्मृतम्॥

"धर्मस्य पर्षदश्चैव प्रायश्चित्तक्रमस्य च। त्रयाणां यः त्रयाणां सः सविकल्पो भवेद् द्विजः॥

"शब्दे छंदसि कल्पे च शिक्षायां च सुनिश्चितः। ज्योतिषामयने चैत्यनिरुक्तसवित(?)भवेत्*।

अपराधी पापकारी कृच्छ्रप्रयोक्तेत्यभिधीयते। रक्षिता राजपुरुषः कृताकृतप्रत्यवेक्षणेन प्राय-श्चित्तपरिपालक इति कथ्यते। तथा २०

"विचारस्तादृशः कार्यो यथा सर्वे सभासदः। एकवाक्यं तत्र ब्रूयुस्तथा श्रेयोऽधिगच्छति॥"

प्रकृतमनुसरामः। धर्मविवृत्तौ

"क्षत्रियो ह्यथ वैश्यो वा शूद्रो वा न कथंचन। प्रायश्चित्तविधानं हि कुर्वीतीति विदुर्बुधाः॥

"अव्रतानाममंत्राणां जातिमात्रोपजीविनां। सहस्रशतयुक्तानां पर्षत्वं नोपपद्यते॥" पातके च शतं परिषत् सहस्रमहदादिपापेषु पंचाशत्स्वल्पे स्वल्पास्तथा भवेत्। बहुभिर्विद्वद्भिर्मिलित्वा २५ विचार्य प्रायश्चित्तं विधेयमिति शतादिशब्दानां तात्पर्यार्थः। अत एव याज्ञवल्क्यः (आ. ९)

"चत्वारो वेदधर्मज्ञा पर्षत्त्रैविद्यमेव वा। सा ब्रूते यं स धर्मः स्यादेको वाध्यात्मवित्तमः॥"

इति। तथाच मनुः (१२।१११)

"त्रैविद्यो हैतुकस्तर्की नैरुक्तो धर्मपाठकः। त्रयश्चाश्रमिणः पूर्वे पर्षदेषा दशावरेति।"

तिस्रो विद्या ऋग्यजुःसामात्मिका यस्यासौ त्रैविद्यः। हैतुकोऽनुमानज्ञः। तर्कोऽस्यास्तीति तर्की। ३० संशये सत्येकस्यां कोटौ प्रामाणिकत्वारोपे कृते बाधकादर्शनात् प्रमाणेनात्र भवितव्यमिति यः प्रत्ययः स तर्कः। स च वेदशास्त्राविरोधी ग्राह्यः। एवंविधायाः परिषद उपस्थानं वक्ष्यमाण-प्रकारेण कार्यम्। अत्रायं वृद्धसमाचरो व्रतग्रहणदिने। तद्यथा। अभुंजानः सायंकाले पर्षदं प्रद-क्षिणीकृत्य स्वकीयमेनो विज्ञापयतीति। अत्रायमाशिषः। अंगिरसः प्राप्तपापस्य परिषदोनुपस्थाना-

* एवं मूले।

त्पूर्वं भोजनं निषिद्धम्। अस्यायमभिप्रायः । पश्चात्तापवान्भवेत्। अविलंबेनैव प्रायश्चित्तं गृह्णी-
यादिति। अन्यथा दीर्घकालं भोजनपरित्यागे देहधारणाभावे न प्रायश्चित्ताचरणमेव स्यात्।
तस्मात् दैववशात्प्रायश्चित्तविलंबे मितमेध्याहारादिभिः शरीररक्षणं कुर्वीत न स्वच्छंदाहारी स्यात्।
इमां स्मार्त्तीमुक्तिं दृष्ट्वा व्रतग्रहणदिन एवाभोजनं मन्यते। कलौ दृढतरानुतपस्यामभावात्। उप-
५ क्रमदिने शरीरशुद्धेरीप्सितत्वाच्च। **मनुः** (११।४७)

"प्रायश्चित्तीयतां प्राप्य दैवात्पूर्वकृतेन वा। न संसर्गं व्रजेत्सद्भिः प्रायश्चित्तेऽकृते द्विजः॥"

**अंगिराः**

"उपस्थितस्तु न्यायेन व्रतादेशनमर्हति। कृतेन संयमं पापे न भुंजीतानुपस्थितेः॥"

"भुंजानो वर्द्धयेत्पापमामत्यं पर्षदि व्रजन्। संशये तु न भोक्तव्यं यावत्पापस्य निष्कृतिः॥

१० "प्रमादश्च न कर्तव्यो यथैवासंशये तथा। कृत्वा पापं न गूहेत गूहमानस्तु वर्द्धयेत्॥"

"बहु वा स्वल्पकं वापि कर्मविद्भ्यो निवेदयेत्।

"प्रायश्चित्ते समुत्पन्ने ह्रीमान्सत्यपरायणः। मृदुरार्जवसंपन्नः शुद्धिं याचेत मानवः॥

"सचैलं वाग्यतः स्नात्वा क्लिन्नवासा समाहितः। क्षत्रियो वापि वैश्यो वा पर्षद्ह्युपतिष्ठते॥

क्षत्रियाद्युपादनं प्रदर्शनार्थं।

१५ "उपस्थाय ततः शीघ्रमार्तिमान्धरणीं व्रजेत्। गात्रैश्च शिरसा चैव न च किंचिदुदाहरेत्॥

"ततस्ते प्रणिपातेन दृष्ट्वा तं समुस्थितम्। वृद्धाः पृच्छंति किं कार्यमुपविश्याग्रतः स्थितम्॥

"किं ते कार्यं वदास्माभिः किं वा मृगयसि द्विज। तत्वतो ब्रूहि तत्सर्वं सत्यं हि गतिरात्मनः॥

"अस्माकं चैव सर्वेषां सत्यमेव परं बलम्। यदि चेद्रक्ष्यसे सत्यं नियतं प्राप्स्यसे शुभम्॥

"यथागतोऽस्य सत्येन न त्वं शुद्ध्यसि कर्हिचित्। एवं सर्वमनुज्ञातः सर्वं ब्रूयादशेषतः।" इति।

२० न भुंजीतानुपस्थित इति। अनुपस्थितः पर्षदमनुपस्थितः। संशयो नाम पर्षदुपस्थातुं स्वगत-
पापसंदेहः। कार्यस्य निष्कृतिः पापस्य निश्चयः। अथवा कार्यस्य निष्कृतिं प्रायश्चित्तनिश्चयः।
संशये तु न भोक्तव्यम्। इत्येतन्मिथ्याभियोगविषयम्। प्रमादश्च न कर्तव्यः पुनः पापं न
कुर्यादित्यर्थः। अथवा चिरकालसंदेहानुवृत्तौ हविष्यभोजनादिशरीररक्षणप्रमादः स न कर्तव्यः।
तथैवासंशये स्वयं पापस्य निश्चये देशांतरादिव्यवहितेषु विद्वत्सु पर्षदुपस्थानात् प्राग्यथा हविष्य-
२५ भोजनाच्छरीररक्षणं क्रियते तथा संशयस्थलेऽपीत्यर्थः। पर्षदग्रे पापप्रख्यापनं च दक्षिणादाना-
नंतरं कुर्यात्। तथाह **पराशरः**। "पापं प्रख्यापयेत्पापी दत्वा धेनुं तथा वृषमिति"। अत्रैव
विशेषमाह **विष्णुः**

"पादव्रते वस्त्रदानं कृच्छ्रार्द्धे तिलकांचनम्। विख्याप्य पापं तत्कृद्भ्यः किंचिद्दत्वा व्रतं चरेत्॥

इति। तत्प्रकीर्णकविषयम्। यत्र च परिषदग्रे दक्षिणात्वेन धेनुवृषभयोरन्यतरदुभयं वा दीयते
३० तत्र धेनुमूल्यं निष्को वा दातव्यो न प्रत्यक्षं गौर्वृषभो वा। यथाऽऽह**ांगिराः**

"बहुभ्यो न प्रदेयानि गौर्गृहं शयनं स्त्रियः। विभक्तदक्षिणा ह्येता दातारं तारयंति हि।

"एका एकस्य दातव्या न बहुभ्यः कथंचन। सा तु विक्रयमापन्ना दहत्या सप्तमं कुलमिति।"

एवं पूर्वोक्तप्रकारेण सचैलस्नानं आर्द्रवासाः पर्षदं प्रदक्षिणीकृत्य परिषद्दक्षिणां दत्वा

दंडवत्प्रणम्य पापं सर्वं विख्याप्य परिषदग्रे भो मामनुगृह्णीतेत्युक्त्वा परिषदग्रे तूष्णीं तिष्ठेत । ततो ब्राह्मणास्तमुत्सार्य परस्परं प्रायश्चित्तस्वरूपं चिंतयेयुः । तथा **चांगिराः**

"तेषां निवेदिते कार्ये उत्सार्यो हि सकार्यवान् ।

"तस्मिन्नुत्सारिते विप्रे ये यथा धर्मपाठकाः । ते तथा तत्र जल्पेषु विमृश्यंतः परस्परम् ॥

"धर्मशास्त्रेषु यच्चोक्तं यच्च सानुग्रहं भवेत् । विमृश्य पर्षत्तत्सर्वं प्रायश्चित्तं प्रकल्पयेत् ॥ ५

"यथाकालं यथादेशं यच्च कार्यांतरं भवेत् । पर्षदः समतं चैव कारिणश्च बलाबलम् ॥

"सर्वेषां निश्चितं यच्च यच्च प्राणान्न पीडयेत्" । कार्यांतरं वृद्धमातापितृशुश्रूषादि । **यच्च प्राणान्न पीडयेत्** । यत्र प्राणिपीडाकरणांतकप्रायश्चित्तव्यतिरेकेण शास्त्रोपदिष्टं प्रायश्चित्तांतरमस्ति तत्र प्राणबाधाकरं न देयमित्यर्थः । **वृद्धशातातपः**

"यदि वा धर्मशास्त्रेण प्रायश्चित्तं विधीयते । नैव शुद्धिमवाप्नोति प्रायश्चित्ते कृतेऽपि सः ॥ १०

"अदृष्ट्वा धर्मशास्त्राणि प्रायश्चित्तं वदंति ये । प्रायश्चित्ती भवेत्पूतस्तत्पापं पर्षदं व्रजेत् ॥

**देवलः** "एकोऽप्यर्हति तत्कर्तुमनूचानोऽप्यनूग्रहम् । धर्मज्ञा बहुवो विप्राः कर्तुमर्हंत्यनुग्रहम् ॥

"स्नेहाद्वा यदि वा लोभान्मोहादज्ञानतोऽपि वा । कुर्वंत्यनुग्रहं यत्तु तत्पापं तेषु गच्छति ॥

"शरीरस्यात्यये कार्यः संयमे नियमो द्विजैः । महतो वोपराधेन न सुस्थस्य कदाचनेति ॥"

**कार्यः** । अनुग्रहः कार्यः । महानुरोधो महत्पापात् । **अंगिराः** १५

"आर्त्तानां मार्गमाणानां प्रायश्चित्तानि ये द्विजाः । जानंतो न प्रयच्छंति ते तेषां समभागिनः ॥

"तस्मादार्तं समासाद्य ब्राह्मणं च विशेषतः । जानद्भिर्धर्मपंथानं न भाव्यं तु पराङ्मुखैः ॥

"अनर्चितैरनाहूतैरपृष्टैश्चैव संसदि । प्रायश्चित्तं न दातव्यं जानद्भिरपि कल्पतः ॥"

एवं धर्मशास्त्रानुसारेण प्रायश्चित्तमपसार्य प्रायश्चित्तस्वरूपं निष्कृष्य तत एकेन तत्प्रायश्चित्तस्वरूपमनुवादयेत् । तत्रायं प्रयोगः । पर्षदुपाविष्टेनामुकप्रायश्चित्तेन चीर्णेन सांगोपांगेनामुकपापाद्विमुक्तो २० भविष्यति । तस्मात्सांगोपांगं कर्तव्यमिति । एवं त्रिर्ब्रूयात् । शिष्टसमाचारात् । एवं च प्रयोगवाक्यरचनाप्रदर्शरचनार्थाः । तस्माद्यत्र यथोचितं तत्र तथा प्रयोक्तव्यम् । **अंगिराः**

"सर्वेषां निश्चितं यच्च यच्च प्राणं न पातयेत् । आहूय श्रावयेदेकः पर्षदा यो नियोजितः ॥

"शृणु भोः स्वमिदं विप्रैर्यत्तु चादिश्यसे भवान् । तत्ते यत्नेन कर्तव्यमन्यथा तद्वृथा भवेत् ॥

"यदा त्वया भवेच्चीर्णं व्रतं शुद्धिकरं महत् । यदा कुर्याः प्रयत्नेन शक्त्या विप्राय पूजनम् ॥" २५

पर्षदा यो नियोजितः इत्यनेनानुवादकस्य भृतित्वेन दक्षिणा गम्यते । तथा हि । नियुक्तो हि धर्मकरो भवति स च भृतिमपेक्षते । किं पापानुवादोऽपि पापायैवेति दृष्टलोभाभावेन कोऽपि न प्रवर्तते । तस्मात्पापानुसारेणानुवादकस्य भृतिरूपदक्षिणा देया । वर्णक्रमेण चानुवादकविशेषोऽ-**गिरसैव** दर्शितः

"ब्राह्मणो ब्राह्मणानां तु क्षत्रियाणां पुरोहितः । वैश्यानां याजकश्चैव प्रायश्चित्तं समादिशेत् ॥ ३०

"अगुरुः क्षत्रियाणां यो वैश्यानां वाऽथ याजकः । प्रायश्चित्तं समादिश्य तप्तकृच्छ्रं समाचरेत् ॥

"एवमुत्कृष्टवर्णेषु ब्राह्मणादिषु दर्शितम्" । अत्रोत्कृष्टत्वं द्विजानां वृत्ताधिक्ययोगात् निकृष्टत्वं तद्राहित्यात् । निकृष्टायां च वक्ष्यामि प्रायश्चित्तमतः परं । प्रायश्चित्तं तद्दानं ध्यायतो **शंखलिखितौ** "कृच्छ्राणां द्विजातीनामेव नावरस्य कामं धर्मस्यानिषेधः । साधारणो हि धर्मो

नियमश्च अवरस्य शूद्रस्य वेदमंत्रसहितस्य प्रायश्चित्तस्य निषेधः तद्रहितस्याभ्यनुज्ञा। यद्वा राग-द्वेषादलभ्यमानेषु प्रायश्चित्तेषु यज्ञहवनाध्ययनब्रह्मचर्य्यपरो भैक्ष्याशी दंडी मेखली स्वयमेव संवत्सरेण महापापतत्परोऽव्यपोपिहतिकिल्विषा न ब्राह्मणस्य पतनमिच्छंत्याचार्याः" इति। अस्यार्थः रागादिवशात्पर्षदः सकाशात्प्रायश्चित्तमलभमानः स्वयमेव यज्ञहोमाध्ययनादिनिष्ठो ब्राह्मणः ५ संवत्सरेणेत्यपि लक्षणं यावता कालेम यत्पापनिवृत्तिस्तावता महापातकादीनि व्यपोहतीति। शंखः

"तस्करश्वापदाकीर्णे वक्तव्योक्तमृगे वने। न व्रतं ब्राह्मणः कुर्याद्ब्राह्मणस्याभयात्सदा॥

"शरीरं धर्मसर्वस्वं रक्षणीयं प्रयत्नतः। शरीरात्स्रवते धर्मः *पक्षयामश्रणामिनः।

"अंतरा ब्राह्मणं कृत्वा व्रतमेषां समादिशेत्।

१० "तथा शूद्रं समासाद्य सदा धर्मपुरःसरम्। प्रायश्चित्तं प्रदातव्यं वेदमंत्रविवर्जितम्॥

सुमंतुः "अथवा रागद्वेषादलभ्यमाणेषु प्रायश्चित्तेषु यज्ञहवनाध्ययनब्रह्मचर्यपरो भैक्षाशी दंडी मेखली स्वयमेव संवत्सरेण महापातकानि तत्परो व्यपोहति किल्विषी न ब्राह्मणस्य पतन-मिछंत्याचार्याः" इति।

रागादिवशात्पर्षदः सकाशात्प्रायश्चित्तमलभमानो ब्राह्मणः स्वयं चेत्प्रायश्चित्तस्वरूपं १५ विजानीयात्तदा ब्राह्मणानुज्ञामंतरेणापि यस्य पापस्य यावत्प्रायश्चित्तं तावत्समाचरेत्। कथमि-त्याकांक्षायामाह। यज्ञहवनादीति। तथा कालमपि निर्दिशति। संवत्सरेणेति। एतच्चोपलक्षणम्। एवंच च यावान्काल उपयुक्तः यावती चेतिकर्तव्यतोपयुक्ता तावन्मात्रं ग्राह्यम्। पर्षदनुपादिष्टस्य प्रायश्चित्तस्याद्याचरण हेतुमाह। न ब्राह्मणस्य पतनमिच्छंत्याचार्या इति। अत्र ब्राह्मणग्रहणाच्च क्षत्रियादेः पर्षदनुपदिष्टप्रायश्चित्ताचरणोऽधिकारः। एवं पूर्वोक्तप्रकारेण पर्षदमुपस्थाय पर्षदुपदिष्टं २० व्रतं मनसि विधाय दिनांते प्रायश्चित्तोपक्रमं कुर्वीत। तद्यथा। दिनांते नखरोमादीनि वापयित्वा स्नानं विधाय प्रायश्चित्तसंकल्पं कृत्वा तत्र प्राच्यांगानि करिष्ये इत्यभिलप्य ततो द्वादशांगुलप्रमाणेना-निषिद्धेन क्षीरवृक्षोद्भवेन कंटकिवृक्षोद्भवेन च काष्ठेन दंतान्विशोध्याचम्य भस्मगोमयमृद्वारिपंच-गव्यकुशोदकैर्दशभिर्वक्ष्यमाणप्रकारेण दश स्नानानि कृत्वा वासः परिधायाऽऽचम्य वैष्णवश्राद्धं विधायाऽऽदिगोदानं निवर्त्यानंतरमाजोनाम्नामष्टाविंशतिरष्टोत्तराशतं वा व्याहृतिभिर्हुत्वाऽथ वक्ष्य-२५ माणलक्षणं पंचगव्यं पृथक् पृथगानीय गायत्र्यादिमंत्रैर्वा प्रणवेन वा तानि मेलयित्वा समालोड्य ततः सप्तपत्रैर्हरितैः कुशैः पंचगव्यं समुद्धृत्य एवेत्यदिभिर्मंत्रैर्दशाहुतीर्हुत्वा प्रणवेनैव हुतशेषं समालोड्य प्रणवेनैव निर्मथ्य प्रणवेनैव समुद्धृत्य प्रणवेनैव पिबेत्। आलोडनं शोधनं। तत्तु हस्तेन निर्मथनं काष्ठेन। पानं च पालाशमध्यपर्णेन पद्मपत्रेण सुवर्णपात्रेण ताम्रपात्रेण ब्रह्मतीर्थेन वा भवति। एवमुपक्रांतं व्रतं समाप्य चांते गोहिरण्यादिदक्षिणां दद्यात्। अथात्र क्रमेण मंत्रसहितः प्रयागः प्रदश्यते। ३० सचैलं स्नात्वा क्लिन्नवासाः पर्षदं प्रदक्षिणीकृत्य पर्षदादिदक्षिणां दत्वा नत्वा सर्वं पापं विख्याप्य तदुपदिष्टव्रतं मनसि निधाय दिनांते नखरोमादीन्प्रवाप्य स्नात्वा प्रायश्चित्तसंकल्पं कृत्वा तत्र प्राणयोनिं करिष्य इत्यभिलप्य शास्त्रविहितं द्वादशांगुलपरिमाणं दंतकाष्ठं गृहीत्वा पूर्वाभिमुखं सन्मंत्रं पठेत्। तत्र

---

* एवं मूले।

"आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च। ब्रह्म प्रज्ञां च मेधां च त्वं नो धेहि वनस्पते॥"
अनेन मंत्रेण काष्ठस्याग्रभागं किंचिद्भक्षयित्वा तेनैव प्रदेशेन दंतान्संशोध्य तावत्प्रमाणेन काष्ठांतरेण जिव्हामुल्लिख्य प्रक्षाल्य काष्ठद्वयं किंचिद्भग्नं कृत्वा विसृज्याचम्य भस्मादिभिः स्नायीत। स्नानप्रकारस्तु तूष्णीं भस्मना मस्तकाद्यवयवाननुलिप्योदकेन स्नायीत। एवमेव गोमयेनानुलिप्य पुनर्वारिणा स्नायीत। एवमेव मृदाऽनुलिप्य पुनरुदकेन। इदं भस्मादिभिरुदकसाहितैः स्नात्वा पश्चात्केवलोदकेन स्नानं कुर्वीत। ततो गोमूत्रेण स्नात्वाऽथ गोमयेनानंतरं क्षीरेण पश्चाद्दध्ना स्नाप्योदकेन ततः कुशांतरितेनोदकेनेति दश स्नानानि मंत्रवर्जं कुर्वीत। "मलापकर्षणं स्नानं बाह्यशौचोपसिद्धये" इति विष्णुना मलस्नानस्यैव निर्देशात्। अथवा बाह्यशौचोपसिद्धय इत्युक्त्वात् शुद्धेश्च दृष्टादृष्टरूपेणाऽभिषिंचमानमंत्रपाठेनादृष्टोत्पत्तेः। समंत्रकाण्येतानि स्नानानि। स्त्रीशूद्राणां त्वमंत्रकमेव स्नानम्। भस्माद्यनुलेपनेनापि दृष्टादृष्टसिद्धेरुपपत्तेः। मंत्रेऽधिकाराभावाच्च। **लिंगपुराणे**

"ईशानाय शिरोद्देशं मुखं तत्पुरुषेण तु। हृदोद्देशमघोरेण गुह्यं वामेन सुव्रत॥
सद्योजाताय पादौ प्रणवेन शोधयेत्सर्वांगम्। अत्र क्रमेण मंत्राः। तत्र स्नानमंत्राः। ईशानाय नम इति शिरसि। तत्पुरुषाय नम इति मुखे। अघोराय नम इति हृदये। वामदेवाय नम इति गुह्ये। सद्योजाताय नम इति पादयोः। प्रणवेन सर्वांगम्। अयमेकः प्रकारः। प्रकारांतरं च। ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिव इति शिरसि। तत्पुरुषाय विद्महे महादेवाय धीमहि। तन्नो रुद्रः प्रचोदयादिति मुखे। अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः। सर्वेभ्यः सर्वसर्वेभ्यो नमस्तेऽस्तु रुद्ररूपेभ्यः इति हृदये। वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः इति गुह्ये। सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः। भवे भवेनाति भवे भवस्व मां भवोद्भवाय नमः इति पादयोः। प्रणवेन सर्वांगे। अथवा अग्निरिति भस्म। जलमिति भस्म। स्थलमिति भस्म। व्योमेति भस्म। सर्वं ह वा इदं भस्मेत्येते मंत्रा ग्राह्याः। इति भस्मस्नाने मंत्रांतराणि। इति भस्मस्नानानंतरं गोमयेन स्नानम्। तत्र मंत्रः "मानस्तोके तनये" इति पूर्ववत्। अथवा

"गंधद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्। ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्॥"
अपि वा

"अग्रमग्रश्चरंतीनामोषधीनां वने वने। तासामृषभपत्नीनां पवित्रं कायशोधनम्॥

"यन्मे रोगांश्च शोकांश्च पापं मे हर गोमय।" गोमयस्नाने वैकल्पिका मंत्राः। अथ मृदा स्नानं। तत्र मंत्राः

"अश्वक्रांते रथक्रांते विष्णुक्रांते वसुंधरे। शिरसा धारयिष्यामि रक्ष त्वं मां पदेपदे॥

"उद्धृतासि वराहेण कृष्णेन शतबाहुना। मृत्तिके हर मे पापं यन्मया दुष्कृतं कृतम्॥

"मृत्तिके ब्रह्मपूतासि काश्यपेनाभिमंत्रिता। मृत्तिके देहि मे पुष्टिं त्वयि सर्वं प्रतिष्ठितम्॥

"मृत्तिके प्रतिष्ठिते सर्वं तन्मे निर्णुद मृत्तिके। त्वया हतेन पापेन गच्छामि परमां गतिम्"॥

इति मृत्तिकास्नानमंत्राः । अथ केवलोदकस्नानम् । तत्र मंत्राः । आपो हि ष्ठेति त्रिऋचा पूर्ववत् । अथवा इदमापः पूर्ववत् इति केवलोदकस्नानम् । अथ पंचगव्यस्नानानि । तत्र गोमूत्र-क्षीरदधिघृतानां क्रमेण मरीचिना देवता दर्शिताः

"देवताः संप्रवक्ष्यामि आनुपूर्व्येण यस्य याः । वरुणो देवता मूत्रे गोमये हव्यवाहनः ॥

५ "सोमः क्षीरे दध्नि वायुर्घृते रविरुदाहृत" इति । अथ देवताप्रकाशका मंत्राः प्रदर्श्यंते । तत्र गोमूत्रस्नानमंत्राः "ध्रुवा सुत्वा सुक्षितिषु क्षिपन्तो व्यस्मत्पाशं वरुणो मुमोचत् । अवोचन्वाना अदितेरुपस्था यूयं पात स्वस्तिभिः सदा नः" । उपलक्षणमेतत् । तस्माद्वरुणप्रकाशकाः श्रौत-स्मार्ता वा मन्त्रा अपि ग्राह्याः । एवं सर्वत्रापि । अथ गोमयस्नानमंत्रः 'पाहिनो अग्न एकया' पूर्ववत् । अथ क्षीरस्नानमंत्रः

१० "उरुष्याणो अभिशस्तेः सनोनिपाह्यंहसः । सखासुशेवऽएधि नः"।(ऋ.सं.१।६।२१)अथ दधि-स्नानमंत्रः । "आत्मा देवानां भुवनस्य गर्भो यथा वशं चरति देव एषः । घोषा इदस्य शृण्विरेनरूपं तस्मै वाताय हविषा विधेम । कृष्णनियानं हरयः सुवर्णा अपो वसाना दिवमुत्पतंति । त आववृत्र-न्त्सदनादृतस्यादिद्घृतेन पृथिवी व्युद्यते" । अथवा पराशरोक्ता मंत्रा ग्राह्याः ।

"गायत्र्याऽऽदाय गोमूत्रं गंधद्वारेति गोमयम् । आप्यायस्वेति च क्षीरं दधिक्राव्णस्तथा दधि ॥

१५ "तेजोसि शुक्रमित्याज्यं देवस्य त्वा कुशोदकमिति" । एतैर्मंत्रैराभिषिंचामीति वाक्यशेषः पूरणीयः । एवं दश स्नानानि कृत्वा वासः परिधायाऽऽचम्य वैष्णवं श्राद्धं कुर्वीत । तद्यथा । विष्णुदेशेन त्रिभ्योऽधिकान्युग्मान्ब्राह्मणान्भोजयेत् । भोजनाभावे भोजनपर्याप्तमन्नहिरण्यं दद्यात् । एवं वैष्णवश्राद्धं विधायादिगोदानमाचरेत् । तत्र गोदानमंत्राः

"गवामंगेषु तिष्ठंति भुवनानि चतुर्दश । यस्मात्तस्माच्छिवं मे स्यादिह लोके परत्र चेति" ॥

२० इति गोदानानंतरमाज्येनाग्नौ व्याहृतिभिरष्टाविंशतिरष्टोत्तरशतं वा हुत्वा पंचगव्यं जुहुयात् । तत्र पंचगव्यहोमप्रकारः

"ताम्रवर्णाया गोमूत्रं श्वेतायाश्चैव गोमयम् । पयः सपीतवर्णाया नीलायाश्च दधि स्मृतम् ॥ कृष्णायास्तु घृतं चैव । अथवा पंचगव्यं कापिलं । असंभवे यथा लाभोपपलं पृथक् संख्यायाः पलपरिमितं वा माषाष्टकं वांऽगुष्ठार्धप्रमितगोमयद्विगुणपरिमाणं गोमूत्रम् । पलाशमध्यपत्रनिमित्ते वा पद्मपत्रविरचिते वा सुवर्णमये वा ताम्रमये वा पात्रे निक्षिपेद्गायत्र्या प्रणवेन वा तदनंतरं

२५ द्व्यंगुष्ठार्द्धपरिमितं वा षोडशमाषपरिमितं वा द्वादशमाषपरिमितं वाऽर्द्धांगुष्ठपरिमाणगोमयद्विगुणं वा क्षीरमाप्यायस्वेत्यनयर्चा प्रणवेन वा पूर्वद्रव्यद्वयं निक्षिप्तं तत्रैव निक्षिपेत् । अथ सप्तपलं वा दशपलं वाङ्गुष्ठार्द्धपरिमितगोमयापेक्षया पंचगुणं वा दधिक्राव्ण इत्यनयर्चा प्रणवेन वा पूर्वोक्तपात्रे निक्षिपेत् । ततस्त्वेकपलं वा माषाष्टमितं वांऽगुष्ठार्द्धपरिमितगोमयापेक्षया चतुर्गुणं वा घृतं तेजेसीत्यनेन यजुषा प्रणवेन वा पूर्वोक्तपात्र एव पात्रे निक्षिपेत् । तदनंतरं चैकपलं वा

३० माषचतुष्टयपरिमितं वा कुशोदकं देवस्य त्वेत्यनेन यजुषा प्रणवेन वा पूर्वोक्तपात्र एव निक्षिपेत् । प्रणवः प्रसिद्धः । गायत्र्यादयो मंत्रा अस्मिन्नेव प्रकरणे पंचगव्यस्नानप्रस्तावे प्रदर्शिताः । कुशैः पंचगवमुद्धृत्य इरावत्यादिभिर्मंत्रैर्दशाहुतीर्जुहुयात् । अथ स्रुवस्थाने हरिताः कुशाः । इरावत्यादिमंत्रास्तु

इरावती धेनुमती । इदं विष्णुर्विचक्रमे । मानस्तोके तनये । शन्न इंद्राग्नी भवतामवोभिः । अग्नये स्वाहा । सोमाय स्वाहा । गायत्री प्रहाकः । ॐभूर्भुवः स्वाहा । अग्नये स्विष्टकृते स्वाहा इति दशाहुतीर्हुत्वा व्रतग्रहणं करिष्ये इति ब्राह्मणान् पृष्ट्वा कुरुष्वेति तैरनुज्ञातो हुतशेषं पंचगव्यं प्रणवेन पिबेत् । एतच्च ग्रामाद्बहिः सायं नक्षत्रदर्शने कर्तव्यं । हुतशिष्टं सर्वं पेयं । नोच्छेषणीयं । अत एव बालवृद्धादिशक्ताद्यपेक्षया गोमूत्रादीति पूर्वोक्तवैकल्पिकपरिमाणापेक्षया ५ मेलनीयानि । एवं व्रतग्रहणं कृत्वा ततः परं मौनं कृत्वा आत्मनो दुष्कृतं मनसा चिन्तयन्निशामतिवाहयेत् । एवमुपक्रांतं व्रतं सम्यक् परं नीत्वा तत उदीच्यांगानि कुर्वीत । तत्रायं क्रमः । प्रायश्चित्तस्य सर्वगुणार्थमुदीच्यांगानि करिष्ये इति संकल्प्याग्नौ व्याहृतिभिराज्यं पूर्ववद्धुत्वा पूर्ववदेव वैष्णवश्राद्धं विधायानंतरं गोदानमाचरेत् । प्राच्यांगकरणवेलायां वैष्णवं श्राद्धं गोदानानंतरं होमं विधाय वैष्णवं श्राद्धमिति श्राद्धानंतरं गोदानादेर्विहितत्वात् । होमा- १० नंतरमेव हुतशिष्टस्य पंचगव्यस्य पानेन व्रतस्य गृहीतत्वाच्च उदीच्यानुष्ठानसमये तु होमानंतरं तु गोदानादि उपक्रमे होमस्य सन्निहितत्वादवसानेऽपि संनिधानस्योचितत्वात् । एवमंतरं गोदानानंतरमवशिष्टानि दश दानानि दद्यात् । तानि च । श्राद्धं कृत्वा व्रतांते तु गोहिरण्यादिदक्षिणेत्यत्रत्वादिशब्देनोपात्तानि । दशदानस्वरूपाणि च संग्रहकारेण प्रदर्शितानि

"गोभूतिलहिरण्याज्यवासोधान्यगुडानि च । रौप्यं लवणमित्यादि दशदानानि पंडिताः"॥इति । १५ अत्र क्रमेण मंत्रा "गावो मे अग्रतः संतु०" गोदानमंत्रः । अथ भूमिदानमंत्रः

"सर्वभूताश्रया भूमिर्वराहेण समुद्धृता । अनंतसस्यफलदा ह्यतः शांतिं प्रयच्छ मे ॥"

तिलमंत्रः "महर्षेर्गोत्रसंभूताः कश्यपस्य तिलाः स्मृताः । तस्मादेषां प्रदानेन मम पापं व्यपोहतु ॥"

अथ हिरण्यदानमंत्रः "हिरण्यगर्भगर्भस्थमिति"० । आज्यदानमंत्रः

"कामधेनोः समुद्भूतं सर्वक्रतुषु संस्थितम् । देवानामाज्यमाहारमतः शान्तिं प्रयच्छ मे ॥" २०

वस्त्रदानमंत्रः "शरणं सर्व लोकानां लज्जाया रक्षणं परम् । सुवेषधारिवस्त्र त्वमतः शांतिं प्रयच्छ मे ॥"

गुडदानमंत्रः "यथा वेदेषु विश्वात्मा प्रवरश्च जनार्दनः । सामवेदस्तु वेदानां महादेवस्तु योगिनां ॥

"प्रणवः सर्वमंत्राणां नारीणां पार्वती यथा । तथा रसानां प्रवर सदैवेक्षुरसो मतः ॥

"मम तस्मात्परां लक्ष्मीं ददस्व गुड सर्वदा" । रजतदानमंत्रः

"प्रीतिर्यतः पितॄणां च विष्णुशंकरयोः सदा । शिवतंत्रोद्भवं रौप्यमतः शां० ॥" २५

लवणदानमंत्रः

"यस्मादन्नरसाः सर्वे ह्युत्कृष्टा लवणं विना । शंभोः प्रीतिकरं नित्यमतः शां०"। इति दानमंत्राः ।

**प्रायश्चित्तसंग्रहे लिख्यते**

प्रदक्षिणा नमस्कारास्ततस्तैर्गोवृषस्तथा । जन्मप्रभृत्यद्य यावदित्याद्युपादिशंतु च ॥ १ ॥
सर्वे धर्मविवेक्तार इत्यादि प्रार्थ्य मामनु । प्रणवंतंतमुत्सार्य निबंधं चानुवादकं ॥ २ ॥ ३०
पूजयेच्च तथा सभ्याननुवादकदक्षिणा । ततोनुवादको देशकालौ संकीर्त्य पूर्ववत् ॥ ३ ॥

तत्र जन्मप्रभृत्याद्येत्यारभ्यार्थार्तिकं वदेत् । प्रत्याम्नायेनमभ्यस्तु चित्तं यदुपदिश्यते ॥ ४ ॥
तस्मिन्यथाशक्ति चीर्णे प्राच्योदीच्योंगसंयुते । तव शुद्धिः कृतार्थश्च तेन त्वं हि भविष्यसि॥५॥
त्रिपुरेवमुक्तेंगीकुर्याद्भवतोऽनुग्रहैस्त्विति । तस्मिन्नहन्युपवसेदशक्तस्तु हविष्यकम् ॥ ६ ॥
भक्षयेदशरिक्तायां सायाह्ने तु नदीतटे । देशकालादि संकीर्त्य मम जन्मप्रभृत्यथ ॥ ७ ॥
यावदंगीकृतं चित्तं संकल्प्य वपनं चरेत् । यानि कानीति मंत्रेण कक्षोपस्थशिखां विना ॥ ८ ॥
द्वादशांगुलकाष्ठेन दंतान्संशोधयेत्ततः । आयुर्बलं यश इति ततः स्नानं समाचरेत् ॥ ९ ॥
ईशानं तु शिरोदेशे मुखे तत्पुरुषं तथा । अघोरसंज्ञं हृदये वामदेवं तु गुह्यके ॥ १० ॥
सद्योजातं पादयुग्मं सर्वांगे प्रणवेन तु । भस्मस्नानमिदं प्रोक्तमथ मंत्रैर्मृदादिभिः ॥ ११ ॥
अग्निरित्यादिभिर्वापि भस्मस्नानमुदीरितम् । भस्मगोमयमृन्मंत्रपंचगव्यकुशोदकैः ॥ १२ ॥
दश स्नानानि कुर्वीत विष्णुश्राद्धं ततश्चरेत् । गोप्रदानमथाज्येन हुनेद्व्याहृतिभिर्घृतम् ॥ १३ ॥
अष्टोत्तरशतं वाऽथ अष्टाविंशतिरेव वा । पंचगव्यं समुत्पाद्य तत्तन्मंत्रैर्यथाविधि ॥ १४ ॥
स्वर्णादिपत्रेऽप्यथवा पात्रे पद्मादिके ततः । ताम्रायास्त्रिपलं मूत्रं गायत्र्या प्रणवेन वा ॥ १५ ॥
अंगुष्ठार्द्धं श्वेतगव्या गंधद्वारेति गोमयम् । आप्यायस्वेति कपिलापयः सप्तपलं ततः ॥ १६ ॥
दधिक्राव्ण इति दधि नीलायाः पलसप्तकं । घृतं मिमिक्षे कृष्णाया घृतमेकपलं भवेत् ॥ १७ ॥
आपो हिष्ठेति मंत्रेण पलमेकं कुशोदकम् । देवस्य त्वेति वाऽऽदायाथालोड्य प्रणवेन तु ॥ १८ ॥
यज्ञियेनैव काष्ठेन निर्मथ्य प्रणवेन च । प्रणवेनैवाभिमंत्र्य मंत्रैरेभिर्दशाहुतीः ॥ १९ ॥
जुहुयात्सप्तपत्रैस्तु त्रिभिश्च हरितैः कुशैः । इरावतीदं विष्णुर्मानस्तोके ब्रह्मजाग्नये ॥ २० ॥
सोमाय च ततो हुत्वा गायत्र्या प्रणवेन च । भूर्भुवः स्वश्चेति ततोऽग्नये स्विष्टकृते हुनेत् ॥ २१ ॥
व्रतग्रहं करिष्येऽथ द्विजान् पृष्ट्वा पिबेत्तु तत् । यत्त्वगस्थातिमंत्रेण काले नक्षत्रदर्शने ॥ २२ ॥
अनुष्ठायाथ तच्चितमुत्तरांगं ततश्चरेत् । व्याहृत्या पूर्ववद्धुत्वा विप्रचर्चान्तःप्रदानकम् ॥ २३ ॥
प्रायश्चित्तमिदं प्रोक्तं दश दानानि शक्तितः । मंत्रहीनं क्रियाहीनमित्याद्युक्त्वा हरिं स्मरेत् ॥२४॥
प्रायश्चित्तं मया चीर्णं यदच्छिद्रं ममास्तु तत् । प्रतिब्रूयुर्द्विजाः सर्वेऽप्यच्छिद्रं ह्येतदस्तु ते॥२५॥"

इति सर्वप्रायश्चित्तं । सर्वप्रायश्चित्तप्रयोगो लिख्यते । तत्र षडब्दं त्र्यब्दं सार्द्धाब्दं वा यथाशक्ति सुवर्णादि प्रत्याम्नायद्वारा कुर्यात् । तद्यथा । चतुरस्त्रीनेकैकं वाऽध्यात्मविदं पर्षत्त्वेन उपवेश्य कृतस्नानः शक्तौ सत्यां क्लिन्नवासा अभुंजानः प्रदक्षिणीकृत्य हृदयेन हृद्यतां धरण्यां साष्टांगं प्रणमेत् । ततस्तैः किं ते कार्यं मिथ्या माऽवादीः सत्यमेव वदेत्यादि पृष्टे पर्षदग्रे गोवृषयोः प्रत्येकमाम्नायत्वेन यथासुवर्णरूप्ययोः निष्कं तदर्धं वा निधाय अमुकस्य मे जन्मप्रभृति अद्य यावत् ज्ञानाज्ञानकामाकामसकृदसकृत्कृतकायिकवाचिकमानासिकसांसर्गिकस्पृष्टास्पृष्टभुक्ताभुक्तपीतापीतसकलपातकातिपातकोपपातकलघुपातकसंकरीकरणमलिनीकरणअपात्रीकरणजातिभ्रंशकरप्रकीर्णपातकानां निरासार्थं अनुग्रहं कृत्वा प्रायश्चित्तमुपदिशंतु भवंतः । तथा

"सर्वे धर्मविवेक्तारो गोप्तारः सकला द्विजाः । मम देहस्य संशुद्धिं कुर्वंतु द्विजसत्तमाः ॥

---

१ हुनेदिति-आर्षप्रयोगः ।

"मया कृतं महाघोरं ज्ञातमज्ञातकिल्बिषं । प्रसादः क्रियतां मह्यं शुभानुज्ञा प्रयच्छथ ॥

"पूज्यैः कृतपवित्रोऽहं भवेयं द्विजसत्तमैः"। एवं प्रार्थयेत्पुत्रादिश्चेत्प्रायश्चित्तकृत्तदाऽस्मच्छब्द-स्थाने तन्नाम निर्दिशेत् । प्रार्थनानंतरमनुगृह्णंतु भवंत इति प्रणमेत् । ततस्त एनमुत्सार्य तस्य शरीरद्रव्यादि यथाशक्तिमुत्तममध्यमादिपक्षांश्च विचार्य अस्मिन्पक्षे अस्मिन्पक्षे अयं शक्त इति निश्चित्य पुस्तकवाचनपूर्वकं कथयेयुरनुवादकस्याग्रे प्रत्याम्नायाश्च शक्त्या कल्पयेयुः । अस्मिन्काले ५ प्रायश्चित्तकृच्चंदनपुष्पादिभिः पुस्तकपूजां सभ्यानुवादकपूजां च विधाय निबंधपूजात्वेन च किंचिद्यथाशक्ति द्रव्यं निधाय कृतांजलिपुटो नम्रस्तिष्ठेत् । अनुवादकाय पापानुसारेण भृतिरूपां दक्षिणां दद्यात् । ततोऽनुवादकः पूर्वोक्तविशेषेण विशिष्टानां पूर्वोक्तानां महा-पातकव्यतिरिक्तानां पातकानां क्षयः अनेन पर्षदुपदिष्टेन सर्वप्रायश्चित्तेनामुक-प्रत्याम्नायद्वारा प्राच्योदीच्यांगसहितेन चीर्णेन तव शुद्धिर्भविष्यति तेन त्वं कृतार्थो १० भविष्यसीत्युपदिशेत्रिः । तच्च सर्वप्रायश्चित्तं शक्त्यनुसारेण षडब्दं त्र्यब्दं सार्द्धाब्दं अन्यद्वा पर्षदोनुमतम् । प्रत्याम्नायाश्च गायत्र्ययुतजपतिलहोमसहस्रद्वादशब्राह्मणभोजन-तीर्थयोजनयात्रायां एकगोदाने सुवर्णरूप्यनिष्कतदर्धतदर्धानां यो गोमूल्यानां शक्त्या दाने शुद्धकेशस्य द्वादशस्नानेषु द्विगुणद्वादशामान्नदानादौ च एकः प्राजापत्य इति । तत्र शक्तस्यामान्नं द्विगुणम् । द्रव्यं चतुर्गुणमित्यादि योज्यम् । निष्कश्च लोकशास्त्रयोरेक- १५ वाक्यतायां माषाः ४० । तदर्धं २१ । मुख्यसुवर्णं । तदशक्तौ रजतं ग्राह्यम् । ततो निवेदित-प्रायश्चित्तं तव अनुग्रह इत्यंगीकृत्य संमानपूर्वं प्रणम्य पर्षदं विसृजेत् । अस्मिन्नहनि शक्तेनो-पवासः कार्यः । इतरेण हविष्याशनं ततः कस्यां चन्द्रिकायां तिथौ कृतमाध्यान्हिकः सायान्हे गंगादौ देशकालौ संकीर्त्य अमुकशर्मणे मम जन्मप्रभृति अद्य यावत् ज्ञानाज्ञानकामाकामसकृदसकृत्कृत-कायिकवाचिकमानसिकसांसर्गिकभुक्ताभुक्तपीतापीतसकलपातकातिपातकोपपातकसंकरीकरण- २० मलिनीकरणअपात्रीकरणजातिभ्रंशकरप्रकीर्णपातकानां निरासेन अस्मिन्काले शुद्ध्यर्थं परमे-श्वरप्रीत्यर्थं चामुकप्रायश्चित्तममुकप्रत्याम्नायेन प्राच्योदीच्यांगसहितं यथाशक्ति करिष्ये इति संकल्प्य ततो वपनम्

"यानि कानि च पापानि ब्रह्महत्यासमानि च । केशानाश्रित्य तिष्ठंति तस्मात्केशान्वपाम्यहम् ॥" इति मंत्रेण शिखाकक्षोपस्थवर्जं नखरोमाणि वपयित्वा प्राङ्मुखो द्वादशांगुलदंतकाष्ठेन २५

"आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च । ब्रह्म प्रज्ञां च मेधां च त्वन्नो देहि वनस्पते "॥

इति दंतान्संशोध्य स्नात्वा भस्मादिस्नानं कुर्यात् । अथ **भस्मस्नानप्रयोगः** । प्रक्षाल्य पादौ हस्तौ च शुद्धे आसने उपविश्य आचम्य त्रिः प्राणायामं कृत्वा भस्मस्नानं करिष्य इति संकल्प्य । ईशानाय नम इति शिरसि । तत्पुरुषाय नम इति मुखे । अघोराय नम इति हृदये । वामदेवाय नम इति गुह्ये । सद्योजाताय नम इति पादयोः । प्रणवेन सर्वांगे । यद्वा अग्निरिति ३० भस्म । वायुरिति भस्म । जलमिति भस्म । स्थलमिति भस्म । व्योमेति भस्म । सर्वं ह वा इदं भस्मेति मंत्रैः स्नायात् । एवं भस्मस्नानानंतरं । **गोमयेन** स्नायात् । गंधद्वारामिति ।

"अग्रमग्रं चरंतीनामोषधीनां रसं वने । तासामृषभपत्नीनां पवित्रं कायशोधनम् ॥

"तन्मे रोगांश्च शोकांश्च नुद गोमय सर्वदा" । स्नानं कुर्यात् । अथ **मृत्तिकास्नानम्** ।

आचम्य प्राणानायम्य प्रायश्चित्तांगभूतं मृत्तिकास्नानं करिष्ये इति संकल्प्य उपस्पृश्य। अश्वक्रांते सहस्रपरमादेवीति भूमिद्वर्वे अभिमंत्र्योऽद्धृतेति नदीतटाल्लोष्टमादाय कांडात्कांडादिति द्वाभ्यां दूर्वामादाय मृत्तिके हर मे पापमिति दूर्वां लोष्टं च प्रतिष्ठाप्य यत इंद्र भयामहे स्वस्तिदा स्वस्ति न इंद्रो वृद्धश्रवा त्रातारमिंद्रमिति प्रतिमंत्रं प्रतिदिशं लोष्टमुत्सृज्य स्योना पृथिवीति
५ पृथिव्यामूर्ध्वं ऊषुण ऊतय इत्यूर्ध्वं गंधद्वारामिति लोष्टमादायोदुत्यं जातवेदसमिति सूर्याय संदर्श्य सहस्रशीर्षेति शिर आलिप्य श्रीर्मे भजत्विति ललाटमुपस्पृश्य अलक्ष्मीर्मे नश्यत्वित्यात्मानं प्रदक्षिणीकृत्य हस्तस्थं लोष्टमुत्सृज्य विष्णुमुखा इति मुखं ओजो ग्रीवाभिरिति ग्रीवा महा२ इंद्रो वज्रबाहुरिति बाहुं सोमान४ स्वरणामिति कक्षौ शरीरं यज्ञशमलमिति शरीरं ब्रह्मजज्ञानमिति स्तनौ नाभिर्मे चित्तं विज्ञानमिति नाभिं विष्णो-
१० रराटमसीति पृष्ठमापांतमन्युरिति कटिं वरुणस्य स्कंभनमसीति मेढ्रमानंदनंदावित्यण्डावूरुत्रोरोज इत्यूरुजंघाभ्यामिति जंघयोश्चरणं पवित्रमिति चरणमिदं विष्णुरिति द्वाभ्यां पादौ त्रीणि पदा विचक्रम इत्यधस्तलपादौ सजोषा इंद्र सगणो मरुद्भिर्दूर्वासहितं शेषं लोष्टं शिरसि निधाय सुमित्रा न आप ओषधयः संत्वित्यासनमभिषिंचेदुदकांजलिमादाय दुर्मित्रास्तस्मै भूयासुरिति प्रथमं योऽस्मां द्वेष्टीति द्वितीयं यं च वयं द्विष्म इति तृतीयमुदकमुत्सिच्य हिरण्यशृंगमिति तीर्थ-
१५ मभिमंत्र्यापोवगाह्याचम्यापोहिष्ठामयो भुव इति तिसृभिर्हिरण्यवर्णाः शुचयः पावका इति चतसृभिः पवमानः सुवर्जनः इत्येतानुवाकेनान्यैर्वा पवित्रमंत्रैर्मार्जयित्वा नमोऽग्नयेऽप्सुमत इति नमस्कृत्य यदपांक्रूरमित्यपोऽभिमंत्र्येमं मे गंगे इति दक्षिणं हस्तांगुष्ठमप्सु त्रिः प्रदक्षिणमावर्तयित्वा-ऽघमर्षणसूक्तस्याघमर्षण ऋषिः । भाववृत्तं देवता । अनुष्टुप्छंदः । मम सर्वाघनिर्हरणार्थे जपे विनियोगः । ऋतं च सत्यं चेत्यघमर्षणसूक्तमंतर्जले त्रिवारं द्विवारं वा जप्त्वा प्रवाहाभिमुखं त्रिः
२० स्नायात् । इति मृत्तिकास्नानम् । एतावत्यशक्तौ अश्वक्रांते इत्यादिभिरंगोद्वर्तनमात्रम् । तत आपो हि ष्ठेति शुद्धोदकेन स्नायात् । अथ **पंचगव्यस्नानानि** । गायत्रिया गोमूत्रेण । गंधद्वारामिति गोमयेन । आप्यायस्वेति क्षीरेण । दधिक्राव्ण इति दध्ना । घृतं मिमि० घृतेन । देवस्य त्वेति कुशोदकेन स्नानं कुर्यात् । देवस्य त्वेतिमंत्रेणअभिषिंचामीति वाक्यशेषः । स्त्रीणां शूद्राणा-ममंत्रकाणि स्नानानि । एवं दश स्नानानि विधाय व्याहृतीभिर्देवर्षिपितॄंस्तर्पयित्वा शुची वो
२५ हव्यामिति वस्त्रमद्भिः प्रोक्ष्य देवस्य त्वेति वस्त्रमादायायावधूतमित्यवधूयोदुत्यं जातवेदसमित्यादित्यं दर्शयित्वाऽऽवहंतीति पंचवाक्यैर्वासः परिधायाचम्याऽऽसने उपविश्य त्रीन्प्राणायामान्धारयित्वाऽष्टशतगायत्रीं जपेद्ब्राह्मणः पूतो भवत्यष्टसहस्रगायत्रीं जपेद्रोगी रोगात्प्रमुच्यते द्वादशसहस्रगायत्रीं जपेद्ब्रह्महत्यागोवधगुरुतल्पगसुरापसुवर्णस्तेयानामन्येषां च सर्वपापानां प्रणाशनमिति विज्ञायते इत्याह भगवान्**बौधायनः** ( गृ. सू. ५।४ )। ततो

३० "गवामंगेषु तिष्ठंति भुवनानि चतुर्दश । यस्मात्कस्माच्छिवं मे स्यादिह लोके परत्र चेति ॥"

मंत्रेणादिगोदानं प्रत्यक्षं निष्क्रद्वारा वा कुर्यात् । ततो विष्णूद्देशे चतुरो ब्राह्मणान्पूजापूर्वकं भोजयेत् । आमान्नं वा दद्यात् । इदमेव प्रायश्चित्तांगभूतं विष्णुश्राद्धमित्यभिधीयते । ततोऽग्निस्थापनाद्याज्यसंस्कारांते आज्येन व्याहृतीभिः पापहाविष्णूद्देशेनाष्टाविंशतिरष्टोत्तरशतं आहुतीर्जुहुयात् । ततः पंचगव्यं कार्यम् । सुवर्णादिपात्रे पद्मादिपात्रे वा गोमूत्रं त्रिपलं गायत्र्या प्रणवेन वा आदाय

ततोऽगुष्ठपरिमितं गोमयं गंधद्वारेत्यादाय ततः सप्तपलमाप्यायस्वेति मंत्रेण क्षीरमादाय एकपलं घृतं मिमिक्षिर इत्यादाय एकपलं कुशोदकमापो हि ष्ठेत्यादाय तत्सर्वं प्रणवेनालोड्य प्रणवेनैव यज्ञियकाष्ठेन मयूखैः स्वाहाभिमंत्र्य सप्तपत्रैर्हरितैः कुशैर्दशाहुतीर्जुहुयादभिमंत्रैः । मंत्राश्च । इरावती धेनुमतीति संहितापाठेन मयूखैः स्वाहा । पृथिव्या इदं । इदं विष्णुर्विच० सुरे स्वाहा । विष्णव इदं । मा नस्तोके० विधेमते स्वाहा । रुद्रायेदम् । ब्रह्म जज्ञानं० विवः स्वाहा । ब्रह्मण इदम् । अग्नये स्वाहा । अग्नय इदं । सोमाय स्वाहा । सोमायेदं । तत्सवितुर्वरेण्यं० या- त्स्वाहा । सूर्यायेदं । ॐ स्वाहा । प्रजापतय इदं । भूर्भुवः सुवः स्वाहा । प्रजापतय इदम् । अग्नये स्विष्टकृते स्वाहा । अग्नये स्विष्टकृते इदम् । व्रतग्रहणं करिष्य इति द्विजान्पृष्ट्वा तैः कुरुष्वेत्यनु- ज्ञातः प्रणवेन पंचगव्यं सर्वं पिबेत् । एतच्च ग्रामाद्बहिर्नद्यादेस्तीरे गृहे वा कार्यम् । अशक्तौ गोमूत्रादि स्वल्पं ग्राह्यम् । सर्वस्य पेयत्वात् । अस्मिन्दिने उपवासः शक्तौ सत्यां अशक्तस्य हविष्या- शनम् । इति पंचगव्यं प्राश्य गृह आगत्य विष्णुं स्मरन्मौनी निशामतिवाह्य प्रक्रांतं प्रायश्चित्त- संकल्पानुसारेण प्रत्याम्नायद्वारा कुर्यात् । ततो विष्णूद्देशेन त्रिभ्योधिकान्ब्राह्मणान्पूजापूर्वकं भोजयेत् । आमान्नं वा दद्यात् । इदमेव प्रायश्चित्तांगभूतं विष्णुश्राद्धमित्याभिधीयते । ततोऽग्नि- स्थापनादिपूर्ववदष्टाविंशतिव्याहृतीर्जुहुयात् । एवं प्रायश्चित्तं कृत्वांऽत्यगोदानं कुर्यात् । शक्तौ सत्यां दश दानानि दद्यात् । तानि च

"गोभूतिलहिरण्याज्यवासोधान्यगुडानि च । रौप्यं लवणमित्याहुर्दश दानानि पंडिताः ॥"

इति उक्तानि । अथ तेषां मंत्राः । गवामंगेषु वि. पूर्ववद्गोदानमंत्रः ।

"सर्वभूताश्रया भूमिर्वराहेण समुद्धृता । अनंतसस्यफलदा अतः शांतिं प्रयच्छ मे ॥" भूमिदानमंत्रः ।

"तिलाः पापहरा नित्यं विष्णोर्देहसमुद्भवाः। तिलदानेन सर्वान्मे पापान्नाशय केशव॥"तिलदानमंत्रः ।

"हिरण्यगर्भगर्भस्थं हेमबीजं विभावसौ । अनंतपुण्यफलदमतः शांतिं प्रयच्छ मे ॥"हिरण्यदानमंत्रः ।

"कामधेनुसमुद्भूतं सर्वक्रतुषु संस्थितम् । देवानामाज्यमाहारमतः शांतिं प्रयच्छ मे ॥" वस्त्रदानमंत्रः ।

'धान्यं करोविदातारमिह लोके परत्र च । तस्मात्प्रमुच्यते धान्यमतः शांतिं प्रयच्छ मे ॥"धान्यमंत्रः।

"यथा रसानां प्रवरः सदैवेक्षुरसो मतः । मम तस्मात्परां लक्ष्मीं ददस्व गुड सर्वदा ॥"गुडदानमंत्रः ।

"रसानामग्रजश्रेष्ठं लवणं बलवर्द्धनम् । सर्वस्वादुरसं नित्यमतः शांतिं प्रयच्छ मे ॥" लवणमंत्रः ।

एवं दश दानानि दत्वा मंत्रहीनमिति वदन् विष्णुं स्मरन् एतानि दश दानानि सभ्येभ्य एव तदसंभवे अन्येभ्योऽपि । ततः यन्मया कृतम् अमुकं प्रायश्चित्तं तत् अछिद्रमस्तु इति कर्त्रा उक्ते अछिद्रमस्त्विति ब्राह्मणाः प्रतिकुर्युः । यद्वा

"व्रतच्छिद्रं तपच्छिद्रं यच्छिद्रं यज्ञकर्मणि। सर्वं भवतु तेऽच्छिद्रं यस्य चेच्छंति वै द्विजाः ॥"

इति प्रतिवचनम् । एतत्प्रायश्चित्तमकृत्वैव यदि पित्रादि मृतस्तदा पातकसत्तानिश्चये पुत्रादिना इदमवश्यं कर्तव्यम् । अनिश्चये नावश्यकम् । पुत्रादिना करणे पंचगव्यप्राशनाभावः । यो मुमूर्षुः पुरुषः स्वयं चेतनवेलायां श्रोत्रियं वेदविदं ब्राह्मणमाहूय उदङ्मुखः उपवेश्य स्वयं प्राङ्मुखः सन् आचम्य प्राणानायम्य देशकालौ संकीर्त्य अमुकगोत्रोऽमुकशर्मणो मम सुखेन प्राणो- त्क्रमणप्रतिबंधकोक्तनिष्कृतिअनुक्तनिष्कृति सकलपापक्षयद्वारा सुखप्राणोत्क्रमणार्थं यथाशक्त्या- लंकृतां इमामुत्क्रांतिधेनुं रुद्रदैवत्यां अमुकगोत्रायामुकशर्मणे तुभ्यं संप्रददे इत्युक्त्वा अत्युत्क्रांतौ

प्रवृत्तस्य सोत्क्रमणसिद्धये तुभ्यं संप्रददे नाम्ने इमामुत्क्रांतिसंज्ञिकां इमं मंत्रमुक्त्वा न ममेति विप्रेहस्ते जलान्नजपेत्। सोऽपि देवस्य त्वेति विधिना स्वस्तीति प्रतिगृह्णीयात्। गोरभावे तत्स्वरूपभूतं मौल्यं वा दद्यात्। पित्रादेरशक्तौ पुत्रादि दद्यात्। तत्र ममपदस्थाने पितुरिति।

अथ **वैतारणीदानम्**। आचम्य प्राणानायम्य देशकालौ संकीर्त्य अमुकशर्मणो मम यमद्वारस्थित-
५ वैतरण्याख्यानद्युत्तरणार्थं गोदानमहं करिष्ये। ब्राह्मणमाहूय यथाशक्ति समभ्यर्च्य

"धेनुके त्वं प्रतीक्षस्व यमद्वारे महापथे। उत्तितीर्षुरहं देवि वैतरण्यै नमोऽस्तु ते॥"इति धेनुं प्रार्थ्य

"विष्णुरूप द्विजश्रेष्ठ भूदेव पङ्क्तिपावन। तर्तुं वैतरणीमेनां कृष्णां गां ते ददाम्यहम्॥"इति ब्राह्मणं प्रार्थ्य

"यमद्वारे पथे घोरे तत्रा वैतरणी नदी। तां तर्तुकामो यच्छामि कृष्णां वैतरणीं तु गाम्॥"

इमं मंत्रमुक्त्वा अमुकगोत्रोमुकनामाहम् अमुकशर्मणे तुभ्यम् इमां गां कृष्णवस्त्ररक्तमाल्याद्यलंकृतां
१० यथाशक्ति दक्षिणासहितां संप्रददे न ममेति जलपूर्वकं दद्यात्। सोऽपि देवस्य त्वेति प्रतिगृह्णीयात्। कृष्णाया अभावे अन्यवर्णापि देया। गोरभावे द्रव्यं देयम्। पित्रादेरशक्तौ पुत्रादिर्दद्यात्। तत्र आद्यमंत्रे उत्तितीर्षुरयमिति पठेत्। द्वितीयमंत्रे तर्तुं वैतरणीमस्येति। तृतीये तां तर्तुमस्येति। इति वैतरणीदानम्। अथ **तिलपात्रदानम्**। यथाशक्ति कांस्यपात्रे तिलान् क्षिप्त्वा सुवर्णं च। तत आचम्य प्राणानायम्याद्येत्यादि जन्मप्रभृतिमरणांतं कृतनानाविधपाप-
१५ शमनार्थं तिलपात्रदानं करिष्ये इति संकल्प्य ब्राह्मणमाहूयाभ्यर्च्य मम जन्मारभ्य मरणांतं नानाविधकृतसर्वपापप्रशमनार्थं तिलपात्रं सदक्षिणां अमुकगोत्रायामुकशर्मणे तुभ्यं संप्रददे

"तिलाः पुण्याः पवित्राश्च तिलाः सर्वकराः स्मृताः। शुक्ला वा यदि वा कृष्णा ऋषिगोत्रसमुद्भवाः॥

"यानि कानि च पापानि ब्रह्महत्यासमानि च। तिलपात्रप्रदानेन तानि नश्यंतु सर्वदा॥

"महर्षेर्गोत्रसंभूताः कश्यपस्य तिलाः स्मृताः। तस्मादेषां प्रदानेन मम पापं व्यपोहतु॥" इति

२० मंत्रमुक्त्वा न ममेति विप्रहस्ते जलं क्षिपेत्। पुत्रादिस्तु अस्य पापं व्यपोहतु इति वदेत् यद्वा अयं मंत्रः

"यो देवः पितृरूपेण हव्यकव्यभुगव्ययः। तिलपात्रप्रदानेन स मे विष्णुः प्रसीदतु॥"

दात्रंनरे। "सोऽस्य विष्णुः प्रसीदतु" इति पठेत्। एतन्मंत्रपक्षे विष्णुप्रीतिरेव फलत्वे उल्लेख्य। इति तिलपात्रदानम्। इति प्रायश्चित्तप्रयोगः।

२५ **कर्मविपाके** साधारणं उच्यते। रोगीपापानुसारतः प्रायश्चित्तं कुर्यात्। ततः संभारानुपकल्प्य दानं कुर्यात्। व्याधिप्रतिकृतिदानं कुर्यात्। सूर्यप्रतिमां पलेन तदर्धेन तदर्धेन वा द्विलोचनां द्विभुजां हस्तद्वये पद्मद्वयं दधानां कुर्यात्। व्याधिप्रतिमालक्षणं तत्तत्प्रकरणेऽभिधास्यते। मंडपं कुंडं वेदिकां च कुर्यात्।

अथ **कर्मविपाकरोगहरसाधारणप्रयोगः**। रोगी रोगानुसारेण प्रायश्चित्तं
३० कुर्यात्। ततः शुभे दिने संभृतसंभारः शुचिराचम्य प्राणानायम्य मया जन्मांतरे कृतस्य अमुकपापस्य प्रायश्चित्ताकरणेन अनेन शरीरेण अनुभूयमानस्य तज्जन्यामुकरोगस्यैतच्छरीराविरोधेन नाशार्थममुकदानात्मकतयात्मकं होमात्मकं वा कर्म करिष्य इति संकल्प्य तदंगत्वे गणपतिपूजनं स्वस्तिपुण्याहवाचनं मातृकापूजनं नांदीश्राद्धं च कृत्वाऽऽचार्यब्रह्मसहिता दश देवता ऋत्विग्वरणं कुर्यात्। ततो वस्त्रालंकारभूषणकमंडलुआसनादिभि-

मधुपर्कादिपूजां कुर्यात् । ततः कृतोपवास आचार्यो यदत्र संस्थितं भूतमित्यादि संकल्पपूर्वकं मंडपप्रतिष्ठां कुर्यात् । ततोऽग्न्युत्तारणपूर्वकं रात्रौ सूर्यप्रतिमां आतंकनाम्नीरोगप्रतिमां चाधिवासयामीति वेदिकायां गंधपुष्पाक्षतैरधिवास्य सूर्याय नम आतंकनाम्न्यै अमुकव्याधिदेवतायै नम इति नाममंत्रेण षोडशोपचारपूजां कृत्वा सौराष्टाक्षरेण सूर्यपूजां च कुर्यात् । ततोऽर्धरात्रौ ऋत्विग्युत आचार्यो मंडपाद्बहिः पायसबलिं दद्यात्तत्र मंत्रः ५

"आदित्या वसवो रुद्रा देवा भूतानि पन्नगाः । बलिदानेन दत्तेन शांतिं कुर्वंतु सर्वदा ॥" इति । ततो रात्रौ जागरणं कुर्यात् । तत उषसि स्नात्वा श्वेतवाससीपरिहितः शुक्लमाल्यानुलेपनः सालंकारो वेदिकाया उपरि गोमयेन मंडलाकारं चतुरस्रं मंडपं लिप्य तस्योपरि पिष्टेन तंडुलचूर्णेनाष्टदलं पद्मं लिखित्वा तस्योपरि तिलैः पंचचतुस्त्रिभिर्वा द्रोणै राशिं कृत्वा तस्योपरि अष्टभिश्चतुर्भिर्द्वाभ्यां वा पलैः कृतं ताम्रपात्रं शालेयै रक्षितैः पूर्णं संस्थाप्य तत्राष्टदलं कमलं लिखित्वा १० तस्योपरि हैममष्टदलं कमलं संस्थाप्य ततः रोगप्रतिमां पूर्वप्रतिमां च पंचगव्येनाष्टाक्षरेण स्नापितां वस्त्रालंकारयुक्तां ताम्रपात्रोपर्यष्टदलसुवर्णकर्णिकायां स्थापयेत् । घृणिः सूर्यः आदित्यः इत्यष्टाक्षरस्य सौरमंत्रस्य देवोभर्गऋषिः सूर्यो देवता गायत्री छंदः । अथ ध्यानं

"दीप्यमानप्रभाचक्रं सांद्रसिंदूरभूषितम् । पद्मौ दधानं हस्ताभ्यां स्मेरवक्त्रं द्विलोचनम् ॥

"दिव्याभरणसंपन्नं रक्तस्रग्गंधवाससम् । सागं हेमारविन्दस्य कर्णिकायां निषेदुषम् ॥" इति १५ ध्यात्वा, रोगप्रतिमां सूर्यप्रतिमां च स्थापयेत् । ततः पूर्वपत्रस्य दलप्रथमभागे शुक्रं स्थापयेत् । एवमाग्नेयदलादिषु अंगारकबुधराहुगुरुमंदइंदुकेतून्क्रमेण स्थापयेत् । कर्णिकामध्ये सूर्यसमीपे अश्विनीभरणीकृत्तिका चेति त्रीणि नक्षत्राणि स्थापयेत् । ततः पूर्वदलस्याग्रे रोहिण्यादित्रीणि त्रीणि । एवमुत्तरत्रापि त्रीणि त्रीणि नक्षत्राणि स्थापयेत् । ततः सौराष्टाक्षरेण सूर्यस्यान्येषां नाममंत्रेण चतुर्थ्यंतेन नमोयुक्तेन पूजां कुर्यात् । क्षीरनैवेद्यं दद्यात् । तत आचार्यश्चतुर्भि- २० र्ऋत्विग्भिः सहितस्तत्रैव तिलराशिसमीपे वेदिकायां पूर्वस्यां दिशि धान्यराशौ लोहितान्नवानव्रणान् पंचकलशान् मही द्यौरित्यादिभिः स्थापयेत् । जलेनापूर्य कलशे प्रत्येकं नवरत्नानि

"अश्वस्थानाद्गजस्थानाद्वल्मीकात्संगमाद्ध्रदात् । राजद्वारान्मृत्तिकाश्चंदनकलशसहिताः ॥

रोचनागुग्गुलपंचपल्लवान्निक्षिप्य अलंकृतमुख्यान्श्वेतवस्त्रेण वेष्टितान्स्थापयेत् । ततो वरुणमावाह्य संपूज्य वक्ष्यमाणमंत्रान्पठेत् । आपो हि ष्ठा मयो भुव इति तृचस्य सिंधुद्वीप ऋषिः । २५ आपो देवता गायत्री पाठे विनियोगः । हिरण्यवर्णा इति तृचस्याग्निकांडपतित्वेन अग्निर्ऋषिः आपो देवता त्रिष्टुप्छंदः । पाठे विनियोगः । आ नो भद्रेति दशर्चस्य सूक्तस्य गौतमो राहुगण ऋषिः । विश्वेदेवा देवताः । आद्या पंचमी सप्तमी जगत्यः षष्ठी विराट् । शेषास्त्रिष्टुभः । पाठे वि० । स्वस्ति नो० मिमीतामिति पंचर्चस्य आत्रेयस्वस्त्यात्रेय ऋषिः । विश्वेदेवा देवताः । तिस्रस्त्रिष्टुभो द्वे अनुष्टुभौ । द्वौ शं न इंद्राग्नी इति पंचदशर्चस्य ३० सूक्तस्य वसिष्ठ ऋषिः । विश्वेदेवा देवताः । त्रिष्टुप्छंदः । रक्षोहरणमिति पंचविंशर्चस्य सूक्तस्यांगीरसऋषिः । अग्निर्देवता । त्रिष्टुप्छंदः । अत्यांश्चतस्रोऽनुष्टुभः । आशुः शिशान इति त्रयोदशर्चस्य सूक्तस्य इंद्रोप्रतिरथ ऋषिः । इंद्रो देवता । त्रिष्टुप् छंदः । चतुरोऽनुष्टुभः । अंत्यात्रिष्टुप् त्यमूषुवाजिनमिति तृचस्य अरिष्टनेमिताक्ष्र्य ऋषिः। ताक्ष्र्यो देवता । त्रिष्टुप्छंदः । शांतिपाठे विनियोगः। इत्याश्वलायनानां शांतिः । अथ **तैत्तिरीयाणांघोषशांतिः** । तत्र शन्नो वातः पवतामित्यनुवाकस्य

सोमकांडांत:पातित्वात्सोम ऋषिः। वातादयो लिंगोक्ता विशेषा देवताः। आद्या षट्पदा जगती द्वितीया गायत्री इडायै वास्त्वसीति प्रतिष्ठासीति च द्वे यजुषी। आवा तवाहीति द्वे अनुष्टुभौ। यद्दोवात इति पंचपदा पङ्क्तिः। वात आवात्विति द्वे गायत्र्यौ भूः प्रपद्य इति अंतरिक्षं इति प्राणापानाविति च त्रीणि यजूंषि। घृभिरक्तुभिरिति त्रिष्टुप्। कयानश्चित्रा इति तिस्रो गायत्र्यः।
५ वयः सुपर्णा इति त्रिष्टुप्। शन्नो देवीरिति द्वे गायत्र्यौ। सुमित्रा नः दुर्मित्रा इति द्वे यजुषी। आपो हि ष्ठेति तिस्रो गायत्र्यः। पृथिवी शांतेति अंतरिक्षः शांतिमिति द्यौ शांतेति पृथिवी शांतिरिति तयाहशांत्येति एह श्रीश्च ह्रीश्चेति षड् यजूंषि। उदायुषेत्यनुष्टुप्। चक्षुरित्याकृतिः। उद्गादिपङ्क्तिश्चतुष्पदा। ब्रह्मणश्चोतन्यसीति यजुरादिकामा महद्दोधीति एकपदा गायत्री। मेधा मनीषेति यजुः। आभिर्गीभिरित्यनुष्टुप्। ब्रह्मप्रावादिष्णेति यजुः। शांतिपाठे विनियोगः।
१० ततश्चतुरो ब्राह्मणान् जपार्थं वृणुयात्। ते च सूर्यमंत्रमयुतं तदधिकं वाऽयुतार्धं वा तदर्धं वा प्रत्येकं मिलित्वा वा जपेयुः। इदं च संख्या प्रधानमंत्रजपे। सूर्यव्यतिरिक्तेतरग्रहनक्षत्रमंत्रजपे तु शक्त्यनुसारेण प्रधानमंत्रजपसंख्यातो न्यूनसंख्यया जप्तव्यम्। ततो दर्भाणां मुष्टिना सुवर्णशलाकया दर्भगर्भेण वा शिरःप्रभृति पादपर्यंतं यथालिंगं त्रिःप्रमृज्य ततः शांतिपाठं कुर्वन् ऋत्विगादिभिर्ब्राह्मणैः सहितस्तैः पूर्वस्थापितस्नानकलशांभोभि-
१५ रभिषिच्य स्वयमाचार्यः पुनर्यथापूर्वमानुलोम्येनाक्षिभ्यामित्येतत्सूक्तं पठन्नेव दर्भगर्भेण वाससा परिमार्जयेत्। ततो रोगी श्वेतवस्त्रादिभिरलंकृतः उत्तराभिमुखः सन्पूर्वाभिमुखमाचार्यादिमभ्यर्च्य तां व्याधिप्रतिमां सूर्यप्रतिमां च। दद्यात्। तत्र प्रतिमादानमंत्रः

"पद्मोद्भवः पद्मकरः सप्ताश्वरथवाहनः। प्रतिमानेन दानेन तुष्येत्सर्वजगद्गुरुः॥
"इह जन्मनि यत्पापमन्यजन्मनि वा कृतम्। सप्रत्ययाप्रत्ययाभ्यां तत्सर्वं शमयत्यसौ॥
२० "मंत्रेणानेन दत्वा तं प्रणिपत्य समाप्य च। आसीमांतमनुव्रज्य तन्मुखं नावलोकयेत्॥" तन्मुखं प्रतिगृहीतुर्मुखम्। आचार्येणाभ्यनुज्ञातः प्रविष्टो भवनं निजे। आचार्यस्य प्रतिगृहीतृत्वपक्षे तदनुज्ञा।

"ऋत्विग्भ्यो दक्षिणां दत्वा कृत्वाराधनमश्विनोः। धन्वंतरेश्च संतर्प्य दीनानाथानुपस्थितान्॥
"मंगलध्वनिना तोयैः ससर्वौषधिपल्लवैः। मंत्राभिमंत्रितैः स्नानकृतकौतुकमंडनः।
२५ "प्रसन्नचेताः पुण्याहं वाचयित्वा शतं द्विजान्। तदर्धं वा तदर्धं वा क्रियासाद्गुण्यसिद्धये॥
"मिष्टान्नैर्भोजयित्वाऽथ स्वयं भुंजीत बंधुभिः। ये ये रोगाः प्रबाधन्ते राजयक्ष्मज्वरादयः॥
"तेषां तेषां प्रतिछंददानैरिज्याप्रयत्नतः।" प्रतिछंदः। प्रतिकृतिः। इज्या पूजा।

इतीतीयमितिकर्तव्यता सर्वप्रतिमादाने समुच्चीयते। अथ स्पष्टार्थं उच्यते। कर्ता सर्वां प्रायश्चित्तसामग्रीं संपाद्य रिक्तायां तिथावन्यस्मिन्वा पुण्येऽह्नि दिनांतेऽपराह्णे वा पूर्वोक्तलक्षणयुक्ता-
३० न्विप्रान्पर्षत्वेनोपवेश्य समाहितमना भूत्वा क्लिन्नवासा अभुंजानः परिषदं प्रदक्षिणीकृत्य मासपक्षाद्युल्लिख्य 'करिष्यमाणप्रायश्चित्तांगत्वेनेदं गोवृषनिष्क्रयीभूतं द्रव्यं सभ्येभ्यो दातुमहमुत्सृजे' इति संकल्प्य शास्त्रोक्तगोवृषमूल्यं पर्षदे दत्वा साष्टांगं भूमौ नमस्कुर्यात्। ततस्तैर्विप्रैः

"किं ते कार्यं वदास्माभिः किं वा मृगयसे द्विज। तत्वतो ब्रूहि तत्सर्वं सत्यं हि गतिरात्मनः॥
"यदि चेद्रक्ष्यसे सत्यं नियतं प्राप्स्यसे शुभम्। यथागतोऽसि सत्येन तत्त्वं शुध्यसि कर्हिचित्॥"

इति पृष्टोऽमुकशर्मणो मे जन्मप्रभृति अद्य यावज्ज्ञानाज्ञानकामाकामसकृदसकृत्कृतकायिक-वाचिकमानसिकसांसर्गिकस्पृष्टास्पृष्टभुक्ताभुक्तपीतापीतसकलपातकोपपातकलघुपातकसंकरीकरण-मलिनीकरणापात्रीकरणजातिभ्रंशकरप्रकीर्णकपातकानां मध्ये संभावितानां पापानां निरासार्थ-मनुग्रहं कृत्वा प्रायश्चित्तमुपदिशंतु भवंत इत्युक्त्वा प्रणमेत्प्रार्थयेच्च । तत्र मंत्राः

"सर्वे धर्मविवेक्तारो गोप्तारः सकला द्विजाः । मम देहस्य संशुद्धिं कुर्वंतु द्विजसत्तमाः ॥ ५

"मया कृतं महाघोरं ज्ञातमज्ञातकिल्बिषम् । प्रसादः क्रियतां मह्यं शुभानुज्ञां प्रयच्छथ ॥

"पूज्यैः कृतः पवित्रोऽहं भवेयं द्विजसत्तमैरिति" । मामनुगृह्णंतु भवंत इति वदेत् । ततस्ते विचार्य यथासामर्थ्यं पापानुसारेण प्रायश्चित्तमुपदिशेयुः । ततः कर्ता मासपक्षाद्युच्चार्य करिष्य-माणप्रायश्चित्तांगत्वेन निबंधपूजामनुवादकपूजां च करिष्ये इति संकल्प्य चंदनादिना संपूज्य निबंधपूजात्वेन यथाशक्ति द्रव्यं संकल्पानुवादकाय पापानुसारेण दक्षिणां दद्यात् । ततोऽनु- १० वादकः कथयेत् । कर्ता स्वस्थचित्तः सन् शृणुयात् । तवामुकशर्मणः जन्मप्रभृति अद्य यावत् संभावितानां पातकानां निरासद्वारा श्रीपरमेश्वरप्रीत्यर्थं सभ्योपदिष्टं षडब्दं वा त्र्यब्दं वा सार्द्धाब्दं वा प्रायश्चित्तं गोनिष्क्रयद्रव्यदानप्रत्याम्नायद्वारा उपदिश्यते । तस्मिन्यथाशक्तिप्राच्योदीच्यांग-सहिते आचीर्णे तव शुद्धिर्भविष्यति । तेन त्वं कृतार्थो भविष्यसि । कर्ता च भवदनुग्रह इति वदेत् । अयं चोपदेशस्त्रिवारं कार्य इति । तत्र मुख्यं सुवर्णं गोनिष्क्रयः । अशक्तौ तु रूप्यम् १५ बोध्यम् । ततः कर्ता देशकालौ निर्दिश्यामुकशर्मणो मम जन्मप्रभृति अद्य यावत् संभावितानां पापानां निरसनद्वारा श्रीपरमेश्वरप्रीत्यर्थं सभ्यैरुपदिष्टं षडब्दादिप्रायश्चित्तं प्राच्योदीच्यांगसहितं अमुकप्रत्याम्नायेनाचरिष्ये करिष्ये इत्युक्त्वा तदंगत्वेन वपनं करिष्ये इति संकल्प्य शिरसि हस्तं निधाय

"यानि कानि च पापानि ब्रह्महत्यासमानि च । केशानाश्रित्य तिष्ठंति तस्मात्केशान्वपाम्यहम्"॥ २०

इति मंत्रं पठित्वा शिखाकक्षोपस्थरहितकेशादीन्वापयित्वा

"आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च । ब्रह्म प्रज्ञां च मेधां च त्वन्नो देहि वनस्पते"॥इति ।

मंत्रेणाभिमंत्रितेन द्वादशांगुलप्रमाणेनापामार्गादिदंतकाष्ठेन प्राङ्मुखो

"मुखदुर्गंधिनाशाय दंतानां च विशुद्धये । ष्ठीवनाय च गात्राणां कुर्वेहं दंतधावनमिति ॥"

मंत्रेण दंतान्धावयित्वाप्सु निमज्य भस्मादिस्नानं कुर्यात् । तच्चेत्थं प्रायश्चित्तांगत्वेन भस्मस्नानं २५ करिष्ये इति सं० भस्मादाय ईशानः स० शिरः । त्र्यंब० मुखे । ऋतꣳ सत्यं० हृदये । यो रुद्रो अग्नौ गुह्ये । एष ते रुद्रभागः पादयोः । प्रणवेन सर्वांगेष्वालिप्य स्नात्वा । प्रा- गोमय- नं- पुष्पैकः नृप गोमयमादाय व्याहृत्या त्रिधा विभज्यादित्याय प्रदर्श्य

"अग्रमग्रं चरंतीनामोषधीनां वने वने । तासामृषभपत्नीनां पवित्रं कायशोधनम् ॥

"तन्मे रोगांश्च शोकांश्च नुद गोमय सर्वदा ।" ३०

संख्या बाधकत्वाच्च । न द्वितीयः सत्ववचनत्वेन संख्यान्वयस्य स्वतः सिद्धत्वात्तादृशा-ऽनुपूर्व्या च तस्य वा भाष्येऽभावाच्चात आह । **अभेदैकत्वसंख्येति । तदर्थ इति** । अभेदेना-विभागेन एकत्वादिसूपविषसंख्या एकत्वपदमुपलक्षणं संख्याविशेषाणामविभागेन सत्वमिति

*इतः परं संगतिर्विचारणीया.

तस्यार्थः । संख्यात्वेनेकराजसंबंधी राजद्वयसंबंधी वेत्यादिरित्यात्र बोधः विभक्ताभावेन संख्याविशेषाणां तत्तद्रूपेणाप्रतीत्यासंख्यात्वेनैव सर्वसंख्यानां भानात् । मधुनि रसत्वेन सर्वरसभाववत् । अथवा एकत्वस्य सर्वतः प्रथमोपस्थितत्वादेकस्य द्वित्वादीन्प्रतिनिमित्तत्वेन सामान्यत्वाच्च द्वित्वाद्यनुस्कृतैकत्वादेकस्वभावेनाभिन्नामिवैकत्वं तद्रूपासंख्याऽभेदैकत्वसंख्यापदेनोच्यते इति परित्यक्त-
५ विशेषं संख्यासामान्यमिति परमार्थः । अत्रैकत्वसंख्याद्राजसंबंधीति बोध्य इति निष्कर्षः । सोऽपि संख्याविशेषो न गम्यते इति समर्थसूत्रभाष्याक्षरविरुद्ध इति ध्वनयन्नाह । **संख्यासामान्यभाव इति । यावेति ।** भेदसहचरितद्वित्वादेरेकत्वस्य चाभानमित्येव तदर्थं राजसंबंधी पुरुष इत्येव बोधः । राजत्वादिनैवैकानेकव्यक्तिभानंत्यौ तात्पर्यवशात् । न तु एकत्वद्वित्वादिना । तदुपस्थाभावात् इति । विस्तरस्तु **मंजूषायां** बोध्यः । **तादृशलक्ष्याभावादिति ।** यद्यपि सर्वदा
१० इत्यभिमंत्र्य गंधद्वारामिति मंत्रेण शिरःप्रभृतिपादांतमालिप्य स्नात्वा प्रा० मृत्तिकास्नानं करिष्ये इति संकल्प्य वलित्वेति भूमिं संप्रार्थ्य भारवोरिषत्खनितेति खनित्वा । स्यो ना पृथिवी० गृहीत्वा । आयने ते प० दूर्वामादाय गायत्र्या भूमौ मृदं निधाय त्रातारमिंद्रमिति मंत्रेण पूर्वस्यां यमाय सोममिति दक्षिणस्यां तत्वायामीति पश्चिमायाम् वयं सोमव्रते इत्युत्तरस्यां तत्सूर्यमिति ऊर्ध्वायां अधः पश्यस्वमोपरीति अधस्तेति हृदि नाभानाभिन्नेति नाभौ । त्वमिंद्रसजोषसमिति बाह्वोः सोमानं
१५ स्वरणामिति कक्षयोः यः कुक्षिः सोमपातम इति कुक्ष्योः बव्हीनां पितेति पृष्ठे ऊरुभ्यामिति ऊर्वोः मेहनाद्वलमिति जान्वोः एतावानस्येति पादयोः यस्य विश्वानीति हस्तयोः अंगादंगादित्यनेन पुरुषसूक्तेन च सर्वांगेष्वाभीलिंपेदेशक्तौ अश्वक्रांते रथेति० । पदे पदे । मृत्तिकेह. कृतं । मृत्तिकेह. कृतं । मृत्तिके ब्रह्मदत्तासि ० त्रिता. । मृत्तिके देहि मे त्रु. तं । मृत्तिके प्रतिष्ठिते ० मृत्तिके । त्वया ह० गतिमित्येवमादिभिः सर्वांगेष्वभिलिप्य मृत्तिकास्थलं प्रक्षाल्य गायत्र्या गोमूत्रेण गंधद्वारेति गोमयेन आप्यायस्वेति
२० क्षीरेण दधिक्राव्ण इति दध्ना । तेजोसि शुक्रमस्यमृतमसि धामनामासिप्रियं देवानामनाधृष्टं देवयजनमित्याज्येन । देवस्य त्वा सवितुः प्र. षिंचामीति कुशोदकेन स्नात्वा तीर्थं प्रार्थयेदेतैर्मंत्रैः । हिरण्यशृंगमित्युक्त्वा ततो यथोक्तप्रकारेण स्नात्वा गृहं गच्छेत् । स्त्रीशूद्रयोरमंत्रकं स्नानम् । तत आचम्य त्र्यधिकान्युग्मान् द्विजान्पूज. पूर्वकं भोजयेदामान्नं वा दद्यात् । द्विजेषु विष्णोरेव पूजनम् । एतदेव निष्क्रश्राद्धं । तच्चेत्थं स्नानोत्तरं अंगीकृतप्रायश्चित्तांगत्वेन विष्णुश्राद्धं करिष्ये इति संकल्प्य शालग्रामशिलायां श्वेत-
२५ चंदनादिभिः विष्णुं संपूज्य यथाशक्ति द्रव्यमादायामचतुष्टयनिष्क्रयीभूतं द्रव्यं यथानामगोत्रेभ्यो ब्राह्मणेभ्यो दातुमुत्सृज्ये तेन श्रीपापहा महाविष्णुः प्रीयतामिति । तत एकां गां तन्निष्क्रयं वाद्य गोदानत्वेन कुटुंबिने द्विजाय दत्वा गवामंगे इति परत्र चेति मंत्रं पठेत् । ततोऽग्निं संस्थाप्य पापहामहाविष्णूद्देशेनाष्टाविंशत्यादिसंख्ययाऽऽज्यमग्निवायुं सूर्यप्रजापतिदैवत्यं जुहुयाच्छिष्टाचारानुरोधेन ब्रह्मकूर्चहोमोऽपि कुर्यात् । स यथाविलपितमाज्यं पलाशादि पर्णेन गृहीत्वा व्याहृति-
३० चतुष्टयेन होमेदं एवं सप्तवारं कृते अष्टाविंशतिराहुतयो भवंति । ततो ब्रह्मकूर्चहोमार्थं सुवर्णताम्रपलाशपद्मान्यतमपात्रे पंचगव्यमादाय प्रणवेनालोड्य यज्ञियकाष्ठखंडेन प्रणवेनैव निर्मथ्य प्रणवेनाभिमंत्र्य सप्तपत्रैः कुशैः पलाशदलैर्वा जुहुयात् । तत्र मंत्रः ( ऋ. सं. ५।६।२४ )

"ॐ इरावती धेनुमती हि भूतं सूयवसिनी मनुषेदशस्या । व्यस्तभ्नारोदसी विष्णवे ते दाधर्थपृथिवीमभितो मयूखैः" स्वाहा । पृथिव्या इदं न मम । इदं विष्णुर्वि. विष्णव इदं न. । मान

स्तोके. रुद्रायेदं । शन्नो देवी. अद्भ्य इदं न. । अग्नये. अग्न. स्विष्ट. न. । ततो नक्षत्रदर्शने व्रतग्रहणं करिष्ये. इति द्विजान्पृष्ट्वा कुरुष्वेत्यनुज्ञातः प्रणवेन होमशेषमश्नीयात् । प्रायश्चित्ता. इति शक्त उपवसेदशक्तो हविष्यान्नमश्नीयात् । ततः प्रायश्चित्तं चरित्वा प्राग्वद्व्याहृतिहोमं विष्णुश्राद्धगोदानानि दद्यात् ।

"गोभूतिलहिरण्याज्यवासो धान्यं गुडानि च । रूप्यं लवणमित्याहुर्दश दानानि पंडिताः ॥" इति एषां परिमाणमुक्तं **शातातपीये कर्मविपाके** ५

"निवर्तनमिता भूमिर्द्रोणत्रयमितास्तिलाः । कर्षमात्रं हिरण्यं स्यादाज्यं सप्रस्थमाढकम् ॥
"वाससां त्रितयं दद्याद्गुडं च पलषष्टिकम् । निष्कत्रयमितं रूप्यं लवणं सार्द्धखारिका ॥
"सार्द्धखारीमितं धान्यं परिमाणं प्रकीर्तितमिति" । खारी दशद्रोणाः ।

अथ **दानमंत्राः** । गवामंगे. त्र चेति गोः । १०

"सर्वभूताश्रया भूमिर्वराहेण समुद्धृता । अनंतसस्यफलदा अतः शांतिं प्रयच्छ मे ॥" इति । भूमेः । "महर्षेर्गोत्रसंभूताः कश्यपस्य तिलाः स्मृताः । तस्मादेषां प्रदानेन मम पापं व्यपोहत्विति ॥" तिलानां । "हिरण्यगर्भेति० प्रयच्छ मे०" इति हिरण्यस्य. ।

"कामधेनोः समुद्भूतं सर्वक्रतुषु संस्थितम् । देवानामाज्यमाहारमतः शां० ॥" आज्यस्य
"शरणं सर्वलोकानां लज्जाया लक्षणं परम् । सुवेषधारि वस्त्र त्वत्वमतः शां० ॥" वस्त्रस्य । १५
"सर्वदेवमयं धान्यं सर्वोत्पत्तिकरं महत् । प्राणिनां जीवनोपायमतः शां० ॥" धान्यस्य ।
"यथा देवेषु विश्वात्मा प्रवरश्च जनार्दनः । सामवेदस्तु वेदानां महादेवस्तु योगिनाम् ॥
"प्रणवः सर्वमंत्राणां नारीणां पार्वती यथा । तथा रसानां प्रवरः सदैवेक्षुरसो मतः ॥
"मम तस्मात्परां लक्ष्मीं ददस्व गुड सर्वदेति" । गुडस्य
"प्रीतिर्यतः पितॄणां च विष्णुशंकरयोः सदा । शिवनेत्रोद्भवं रूप्यमतः शां० ॥ रूप्यस्य । २०

"रसानामग्रजं श्रेष्ठं लवणं बलवर्धनम् । ब्रह्मणा निर्मितं साक्षादतः शां० ॥ लवणस्य । एवं समंत्रं सपरिमाणं दश दानानि दत्वा परिमाणासामर्थ्ये दक्षिणां च स्वशक्तित इति **शातातप**वचनात्स्वशक्त्या निष्क्रयेण वा दत्वा ब्राह्मणान्भोजयेत् । 'प्रायश्चित्ते ततश्चीर्णे कुर्याद्ब्राह्मणभोजनमिति" वचनात् । इह संख्याविशेषानुपादानाच्छक्त्यनुसारेण ब्राह्मणभोजनं वेदितव्यम् ।

"तस्माच्छक्तिं समासाद्य सदा धर्मपथे स्थितं । प्रायश्चित्तं प्रदातव्यं जपहोमविवर्जितमिति ॥" २५

एवं स्त्रीणामपि होमपंचांगप्राशने न स्तः । "स्त्रीणां होमो न दातव्यं पंचगव्यं तथैव चेति" मि. पृ. ३४४. वचनादिति संक्षेपः । उत्तरार्धार्थमाह । **यस्त्विति** । धर्मपदमुपलक्षणमित्याह । **धर्मार्थेति** । **संवत्सरेति** । चांद्रायणवृत्ती वृत्तीत्यर्थः । **एकं** चांद्रायणम् । एवमग्रेऽपि । तत्कृत्वा सर्वं पापं नाशयतीत्यतिपापोऽपि गतपापो भवतीत्यर्थः । **संवदिति** । अत्यंतसंयोगे द्वितीया ॥ ३२७ ॥ ३०

## याज्ञवल्कीये ३२८ श्लोकः ।

फलांतरमाह । **किंचेति** । सुसत्प्राप्त्यव्याख्या । **सकेति** । एतत्सूचितमाह । **सुखेति** ।

अत्र कश्चित्कर्माणि । तत्रैवाह । कृच्छ्रेति । आरंभः फलं । जैमिनीयोऽयं । अनुक्तौ बीजमाह । चेदमिति ॥ ३२८ ॥

## याज्ञवल्कीये ३२९ श्लोकः ।

अत्र हि । याज्ञवल्कीये हि । व्यावृत्ता इति । तेषां मिथो भिन्ना इत्यर्थः ॥ ३२९ ॥

५

## याज्ञवल्कीये ३३०।३३१।३३२।३३३ श्लोकाः

मि. पृ. ३४५. अस्मात् उत्कृत्य ॥ ३३० ॥ ३३१ ॥ ३३२ ॥ ३३३ ॥

## याज्ञवल्कीये ३३४ श्लोकः ।

अर्थं सार्थं । फलसमूहं । अत्र भवान्पूज्यः ॥ ३३४ ॥

## याज्ञवल्कीये ३३५ श्लोकः ।

१० ग्रंथान्तरे मंगलं करोति । स्वयंभुवे इति । इत्थं यथार्थमिति । शिवम् ॥ ३३५ ॥

इति श्रीमन्मिताक्षराव्याख्याने महादेवभट्टात्मजोमांगजवैद्यनाथार्द्धांगभूत बालकृष्णजननिपायेगुंडेइत्युपाख्यश्रीलक्ष्मीदेवीविरचिते लक्ष्म्यभिधे प्रायश्चित्तप्रकरणं संपूर्णम् ॥*

*ख— संख्या ६८०० लि० मेवामिश्रेण सं० १९५० वे० १५ ॥ शोधितमिदं पुस्तकं तारादत्तपंतेनेति सन्तः प्रसीदन्तु सं० १९७१ मा० व० १ ।

# एतत्पुस्तकोद्धृतऋषीणां ऋषिवचनानां च सूची.

## एतत्पुस्तकोद्धृतऋषीणां ऋषिवचनानां च सूची.

## एतत्पुस्तकोद्धृतऋषीणां ऋषिवचनानां च सूची.

## २ पुराणानि.

## ( ३ ) ऋक्संहिता.



## ( ४ ) व्याकरणसूत्राणि



## ( ५ ) न्यायाः

THE

# Collections of Hindu Law Texts.

( No. 6. )

# BÂLAMBHAṬṬI

( *Sasnkrit Text.* )

BEING A COMMENTARY BY

## Bâlambhaṭṭa Payaguṇde,

ON

**( The Mitâksharâ of S'ri Vijñânes'wara on the Yâjñavalkya-Smṛiti).**

## BOOK II

**Vyawahârâdhyâya.**

EDITED BY

**J. R. GHARPURE,** B. A. LL. B.,
**Vakil, High Court,**
**BOMBAY.**

**First Edition.**



**1914.**

# PREFACE.

The Vyawahâra-Adhyâya of **Bàlambhatti** (text) is the sixth Volume published in this series. It is a free and exhaustive commentary on the *Mitákshara* of *Vijnánes'vara,* which in itself is a commentary on the *Yájnyavalkya-Smriti,* published in this series as Volume No. 1.

The author of this work was Bâlambhatta or Vaidyanâtha Bhatta Pâyagunde who flourished at Benares at the close of the 18th and the beginning of the 19th century. He was a scholar of great fame in his own days, and is reputed to have written several works in Sanskrit. There is reason to believe that he was personally known to Mr. Colebrooke the well-known oriental scholar of the last century.

The present volume is a free commentary on the Mitâksharâ, quotations from which have been put in the black type. The texts of Yajnavalkya and the Mitâksharâ have not been reprinted in this volume as the same has appeared once in Volume I of this series, and the references to these works in this volume are made according to the paging of that volume.

The present edition is based on the following material.

(1) A manuscript copy of the work in the Deccan college, Poona. denoted here in as क.

(2) A manuscript from Jaipur and kindly secured by Mr. H. N. Apte of the *Anandáshrama* and denoted herein as ग.

(3) A manuscript in the High Court at Bombay and kindly lent by the Hon'ble Justice Sir N. G. Chandavarkar, denoted as ख.

(4 Bibliotheca Indica series being a portion of the edition by Babu Govind Dass of Benares. (only upto the first 32 verses).

(5) The Printed Edition by Babu Govind Dass ( received when the last portion was under preparation ).

The undersigned is obliged to all these gentlemen for their kindness in allowing him the use of the works in their possession.

A detailed account of the author and his works and of the Yajnavalkya School generally will be found in the preface to Vols. I and II of this series and in the " Introduction to the study of Hindu Law Texts " by the undersigned.

BOMBAY,
*14th January 1914.*

**J. R. Gharpure,**
*Editor.*

